**अम्बा** । काशिराजसुता । अम्बिकाम्बालिकयोर्ज्येष्ठा स्वसा ।

तस्याः स्वयंवरे स्थितायाः भगिनीद्वयसहितायाः भीष्मेण अपहरणं । **आ० १०९** । १९ ॥

तया भीष्मं प्रति स्वस्याः सौभपतिकामुकत्वकथनं । **आ० १०९** । ६३ ॥

तस्या उपाख्यानं संग्रहेण । **आ० ११०** ॥ विस्तरेण । **उ० १७३** ॥ **१८७** ॥

तया तपःकरणं । **आ० १०९** । ९३ ॥ **उ० १८६**॥

तया परशुरामं प्रति भीष्मवधप्रार्थना । **उ० १७७**॥

तयाऽन्यजन्मनि शिखण्डिनामकद्रुपदपुत्रत्वेन जननं । **उ० १८८** ॥

**अम्बालिका** । काशिराजसुता । अम्बायाः यवीयसी स्वसा । विचित्रवीर्यस्य भार्या । **आ० ६३** । ५४ ॥

तस्या विवाहः । **आ० १११** ॥

तस्यां व्यासात्पाण्डोर्जननं । **आ० ११५** । ३१ ॥

तद्दास्यां व्यासाद्विदुरस्योत्पत्तिः । **आ० ११५** । ४३ ॥

तस्याः श्वश्र्वा सह तपोवनगमनं । **आ० १३७** । १२ ॥

१ **अम्बिका** । काशिराजसुता । अम्बाया यवीयसी स्वसा । विचित्रवीर्यस्य भार्या । **आ० ६३** । ५४ ॥

तस्यां व्यासाद्धृतराष्ट्रस्योत्पत्तिः । **आ० ११५** । १०॥

तस्याः श्वश्र्वा सह तपोवनगमनं । **आ० १३७** । १२॥

२ **अम्बिका** । अप्सराः । **आ० १३२** । ४४ ॥

**अम्बुमती** । नदी । **व० ८१** । ५६ ॥

**अम्बुवाहिनी** । नदी । **भी० ९** । २७ ॥ **अनु० २७१** । २० ॥

**अम्बुवीचः** । मागधराजः । तन्मन्त्री महाकार्णिः । तयोः कथा । **आ० २२३** । १७ ॥

**अम्भोरुदः** । विश्वामित्रऋषेः पुत्रः । **अनु० ७** । ५९ ॥

**अयतिः** । क्षत्रियः । सो० वं० नहुषस्य पुत्रः । ययातेर्भ्राता । **आ० ६९** । ३३ ॥

**अयश्शिराः** । दनुपुत्रोऽसुरः । **आ० ६६** । २१॥

**अयुतानायी** । क्षत्रियः । सो० वं० पूरुवंशोद्भवस्य महाभौमस्य पुत्रः । तन्माता सुयज्ञा । तद्भार्या भासा । तत्पुत्रोऽक्रोधनः । **आ० ६३** । १९ ॥

**अयोध्या** । सरयूनदीतीरस्था कोसलदेशस्य राजधानी । **व० २९२** । ६१ ॥ Gudh, the birth place of Rama.

**अयोबाहुः** । क्षत्रियः । धृतराष्ट्रपुत्रः । **आ० ६८** । ९८ ॥ **१३१** । ६ ॥

**अयोभुजः** । क्षत्रियः । धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १५८** । १७ ॥

+ **अरणीहरणं** । मृगरूपिणा यमेन वने पाण्डवसमीपे विद्यमानानां ऋषीणां । **व० ३१२** ॥

**अरालिः** । विश्वामित्रपुत्रः । **अनु० ७** । ५८ ॥

**अरिमेजयः** । क्षत्रियः । सोम० वं० वृष्णिकुलोत्पन्नः । **द्रो० ११** । २८ ॥

१ **अरिष्टः** । (**रिष्टः**) । यमसभास्थः क्षत्रियः । **स० ८** । १५ ॥

२ **अरिष्टः** । तार्क्ष्यापरनामा मुनिः । यो हैहयराजकुमारेणाज्ञानाद्धतं स्वपुत्रमुज्जीवितवान् । **व० १८७** । ९ ॥

३ **अरिष्टः** । वृषभरूपोऽसुरः । श्रीकृष्णेन हतः । **स० ५३** । २८ ॥ [भा० १० । ३६ ॥ हरि० २ । २१ ॥ विष्णु० ५ । १४ ॥]

१ **अरिष्टनेमिः** । विनतापुत्रः । **आ० ६६** । ४० ॥

२ **अरिष्टनेमिः** । यमसभास्थः क्षत्रियः । **स० ८** । २२ ॥

३ **अरिष्टनेमिः** । पाण्डुपुत्रस्य सहदेवस्य विराटनगरे नामधेयं । **वि० १३** । १२ ॥

४ **अरिष्टनेमिः** । कश्यपः । **शां० २०७** । ८॥

५ **अरिष्टनेमिः** । ब्राह्मणः । तस्य सगरेण मोक्षसाधनविषये संवादः । **शां० २९४** । २ ॥

**अरिष्टसेनः** । दुर्योधनपक्षीयः क्षत्रियः । **श० ५ ।** ३ ॥

**अरिष्टा** । कश्यपभार्या हाहाहूहूआदिगन्धर्वाणां अलम्बुषाद्यप्सरसां च माता । **आ० ६६** । ४९ ॥

**अरिहः** । क्षत्रियः । सो० वं० अपराचीनस्य पुत्रः । तन्माता वैदर्भी मर्यादा । तद्भार्या आङ्गी । तत्पुत्रो महाभौमः । **आ० ६३** । १७ ॥

**अरुजः** । रावणानुचरो राक्षसः । विभीषणेन हतः । **व० २८६** । २ ॥

**अरुणः** । अनूरुः । विनतायाः पुत्रः । गरुडस्य ज्येष्ठो भ्राता । **आ० ६६** । ४० ॥

तस्योत्पत्तिः । **आ० १६** । १७ ॥ **अनु० २०** । १४ ॥

तेन सूर्यस्य सारथ्यकरणं । **आ० २४** ॥

तद्भार्या ताम्रायाः पुत्री श्येनी । तत्पुत्रौ संपातिर्जटायुश्च । **आ० ६७** । ७४ ॥

तेन स्वमात्रे दासीभवनशापदानं । **आ० १६** । १८ ॥ **अनु० २०** । २० ॥

१ **अरुणा** । अरिष्टायाः पुत्री अप्सराः । **आ० ६६** । ५० ॥

२ **अरुणा** । कुरुक्षेत्रसमीपस्था नदी । **श० ४४** । २९ ॥

**अरुणाः** । ऋषयः । **शां० १९** । १६ ॥

**अरुन्तुकं** । तीर्थं । **व० ८१** । १५ ॥ **श० ५४** । २८ ॥

**अरुन्धती** । वसिष्ठस्य पत्नी । तत्पुत्रः शक्तिऋषिः । **स० ११** । ४२ ॥ **व० १३२** । १७ ॥ तस्या अक्षमालेति नामान्तरं । **उ० ११७** । ११ ॥

[इयं कर्दमप्रजापतिपुत्री । तन्माता स्वायंभुवमनुपुत्री देवहूतिः । तस्याः स्वसारः । १ मरीचिपत्नी कला । २ अङ्गिरसः पत्नी श्रद्धा । ३ पुलस्त्यभार्या हविर्भुक् । ४ पुलहभार्या गतिः । ५ क्रतोर्भार्या क्रिया । ६ भृगोर्भार्या ख्यातिः । ७ अथर्वाङ्गिरसो भार्या शान्तिः । ८ अत्रिपत्न्यनसूया च । तद्भ्राता कपिलमहर्षिः । भा० ३ । २४ ॥ अस्या ऊर्जेति नामान्तरं । भा० ४ । १ ॥ मत्स्य० २०१ ॥]

तस्याः पत्युरपध्यानात्सूक्ष्मरूपप्राप्तिः । **आ० २५९** । १६ ॥

तद्रूपधारणे स्वाहादेव्याः शक्त्यभावः । **व० २२७** । १६ ॥

तस्या वसिष्ठपुरतः स्थितेरुत्पातसूचकत्वं । **भी० २** । ३१ ॥

तया आयसबदरपाचनं । तस्यै रुद्रेण वरदानं च । **श० ४९** । ३३ ॥

तस्याः (तन्नामकनक्षत्रस्य) अदर्शनस्य मरणसूचकत्वं । **शां० ३२२** । ९ ॥

तन्नामनिर्वचनं । **अनु० १४२** । ३९ ॥

तत्कृता पुष्करास्तेयप्रतिज्ञा । **अनु० १४३** । ३८॥

तया ऋषिगणाय धर्मरहस्योपदेशः । **अनु० १९३** । १–११ ॥

**अरुन्धतीवटः** । तीर्थविशेषः । **व० ८२** । ४१ ॥

**अरूपा** । प्राधायाः पुत्री । **आ० ६६** । ४६ ॥

**अर्कपर्णः** । कश्यपभार्याया मुनिनाम्न्याः पुत्रो देवगन्धर्वः । **आ० ६६** । ४३ ॥

+ **अर्घाहरणपर्व** । **स० ३९–६२** ॥

**अर्चिष्मती** । अङ्गिरसः पुत्री । पूर्णिमाभिमानिनी । **व० २२१** । ७ ॥

**अर्चिष्मन्तः** । तन्नामकाः पितरः । **शां० २७५** । १५ ॥

१ **अर्जुनः** । क्षत्रियः । सो० वं० पूरुवंशोत्पन्नस्य विचित्रवीर्यपुत्रस्य पाण्डोः पुत्रः । तस्य भार्याः द्रौपदी सुभद्रा उलूपी चित्राङ्गदा च । पुत्राः श्रुतकीर्तिः अभिमन्युः इरावान् बभ्रुवाहनश्च । असदृशरथः । **उ० १६९** । १७ ॥

तस्योत्पत्तिः कुन्त्यामिन्द्रात् । **आ० ६३** । ६५ ॥ **१३२** ॥

तदुत्पत्तिकालीनग्रहस्थितिः । **आ० १३२** । १७ ॥

तन्माहात्म्यं आकाशवाण्या उक्तं। **आ० १३२।१८॥**

तत्प्रशंसा कृपाचार्येण। **वि० ४९। २०॥** भीष्माचार्येण। **भी० १२१। ३१–३८॥**

तत्पराक्रमवर्णनं। धृतराष्ट्रेण। **उ० ५२॥** स्वेनैव। **वि० ६५॥ भी० ८१। ३८॥ ११४॥ क० ८१॥**

तेन जले द्रोणाचार्यं गृहीतवतो ग्राहस्य हननं। **आ० १४३। १२॥**

तस्य तीर्थयात्रायां शापाद्ग्राहरूपं प्राप्तानां पञ्चानामप्सरसां मोचनं। **आ० २३६॥ २३७॥**

तेन द्रौपदीस्वयंवरे कर्णपराजयः। **आ० २०५॥**

तेन गुरुदक्षिणात्वेन द्रुपदस्य जीवग्राहग्रहणं। **आ० १४८। ६२॥**

तस्य द्रुपदनगरमार्गे गङ्गातीरे चित्ररथनामकेन गन्धर्वेण सह युद्धं। **आ० १८६॥**

तेन द्रोणाचार्यकृतास्त्रपरीक्षायां लक्ष्यवेधः। **आ० १४३॥**

तेन द्रौपदीस्वयंवरे लक्ष्यवेधः। द्रौपद्या तत्कण्ठे मालाप्रक्षेपश्च। **आ० २०३॥**

तस्य द्रौपद्या विवाहः। **आ० २१५॥**

तस्य सुभद्रया विवाहः। **आ० २४२॥**

तस्य चित्राङ्गदया विवाहः। **आ० २३५। १६॥**

तेन नागकन्यकाया उलूप्याः परिग्रहः। **आ० २३४। ११॥**

तस्य द्रौपदीयुधिष्ठिराभ्यामधिष्ठिते आयुधागारे प्रवेशः। **आ० २३३। ११॥**

तस्य तीर्थयात्रा। **आ० २३३। ३५॥** [स्कान्दपुराणमाहेश्वरखण्डान्तर्गतकौमारिकाखण्ड० १॥]

तस्य तीर्थयात्रायां मणलूरुगमनं। **आ० २३५। १७॥** अश्वमेधीयाश्वरक्षणसमये मणलूरुगमनं। **अश्व० ७९॥**

तस्य तीर्थयात्रायां प्रभासतीर्थगमनं। **आ० २३८। २॥**

तस्य संन्यासः। **आ० २३८। ४॥** [भा० १०। ८६॥]

तस्य यतिवेषेण सुभद्रागृहे वासः। **आ० २४०। २४॥**

तस्य मयासुराद्देवदत्तनामकवारुणशङ्खप्राप्तिः। **स० ३। ९॥**

तस्य अग्नेर्गाण्डीवनामकधनुषः प्राप्तिः। **आ० ६१। ४९॥ २५१। २०॥**

तस्याग्नेस्सकाशाद्रथप्राप्तिः। **आ० २५१। १०॥**

तद्ध्वजस्तंभे हनूमतोऽवस्थानं। **आ० २५१। १६॥ व० १५३। १८॥ उ० ५६। ९॥**

तस्याग्नेस्सकाशादक्षयतूणीरप्राप्तिः। **आ० ६१। ५०॥ २५१। ४॥**

तस्य खाण्डवदाहकाले इन्द्रेण सह युद्धं। **आ० २५३॥**

तस्य कुलिङ्गादिदेशविजयः प्राग्ज्योतिषे भगदत्तविजयश्च। **स० २७॥**

तस्य उत्तरदेशविजये अन्तगिरि उलूकपुर मोदापुर उरगापुर काम्भोज ऋषिकप्रभृतिदेशविजयः। **स० २८॥**

तस्य किम्पुरुषखण्डविजयः। **स० २९॥**

तस्य इलावृत केतुमालादिखण्डविजयः। **स० २९॥**

तस्य सारथिः पूरुः। **स० ३६। ३०॥**

तस्य श्रीकृष्णेन सारथ्यकरणं। **उ० ७। ३९॥**

तेनेन्द्रकीलपर्वते शिवोद्देशेन तपश्चरणं। **व० ३७। ७६॥**

तस्य किरातरूपिणा रुद्रेण युद्धं। **आ० ३९॥**

तत्कृता रुद्रस्तुतिः। **व० ३९। ७४॥**

तस्य रुद्रात्पाशुपतास्त्रप्राप्तिः। **व० ४०। १५॥**

तस्मै यमकुबेरादिभिरस्त्रप्रदानं। **व० ४१॥**

तस्य देवलोके वासः। तत्र चित्रसेननाम्नो गन्धर्वाद्गान्धर्वविद्याभ्यासश्च। **व० ४३। ३९॥**

तेन निवातकवचवधः। **व० १७०–१७४॥**

तेन हिरण्यपुरवासिनां पौलोमानां कालकेयानां च वधः। **व० १७५॥**

तस्येन्द्रेण कवचकिरीटादिदानं। **व० १७६। ४॥**

तस्योर्वश्या 'त्वं षण्डो भवे'ति शापदानं । व० ४४॥
तस्य क्लीबवेषे नाम बृहन्नलेति । वि० ३ । ४४ ॥
तस्य दश नामानि। अर्जुनः फल्गुनः जिष्णुः किरीटी श्वेतवाहनः बीभत्सुः विजयः पार्थः सव्यसाची धनञ्जयः इति । वि० ४३ । १९–३९ ॥
तस्यैकादशं नाम कृष्ण इति । वि० ४३ । ४१ ॥
तस्यैकादशनामनिर्वचनानि। वि० ४३ । २६–४१॥
तन्नामकीर्तनफलं । वि० ४३ । ५० ॥
तेनाध्वसञ्चरणश्रान्ताया द्रौपद्या वहनं । वि० ६ । २६ ॥
तस्य षण्डवेषपरिग्रहेण विराटनगरप्रवेशः। वि० ११॥
तेनोत्तरगोग्रहणे कर्णभ्रातुर्वधः । कर्णपराजयश्च । वि० ५८ ॥
तेनोत्तरगोग्रहणे द्रोणपराजयः । वि० ५९ । ९० ॥
तेनोत्तरगोग्रहणे अश्वत्थामपराजयः । वि० ६० ॥ भारतमहायुद्धे । क० ५३ ॥ ६७ ॥
तेन दुश्शासनपराजयः । वि० ६५ । २४ ॥ द्रो० ९० ॥
तेन संमोहनास्त्रप्रयोगः । वि० ६७ । १३ ॥
तस्य दुर्योधनगमनानन्तरं श्रीकृष्णसाहाय्यवरणार्थं द्वारकागमनं । उ० ७ । ९ ॥
तेन युद्धराहित्येनैव साहाय्यकरणे श्रीकृष्णस्य वरणं । उ० ७ । २३ ॥
तेन सन्धिविग्रहान्यतरपक्षनिर्धारणे श्रीकृष्णं प्रति प्रार्थना । उ० ७७ ॥
तस्य दुश्शासनेन सह युद्धं । भी० ११० ॥
तेन भीष्माय बाणमयोपधानसमर्पणं । भी० १२० । ३९ ॥
तेन पर्जन्यास्त्रप्रयोगेण जलानयनेन भीष्मपिपासाप्रशमनं । भी० १२१ । ११–३६ ॥
तेन संशप्तकानां वधः । द्रो० २७ ॥ क० १८ ॥ ४८ ॥ ५५ ॥
तेन भगदत्तस्य वधः । द्रो० २८– २९ ॥
तेन रात्रौ त्र्यम्बकाय श्रीकृष्णोक्तप्रकारेण बलिप्रदानं । द्रो० ७९ ॥

तस्य स्वप्ने श्रीकृष्णेन सह कैलासगमनं । द्रो० ८० ॥
तस्य पूर्वप्राप्तस्यैव पाशुपतास्त्रस्य पुनः स्वप्ने रुद्रात्प्राप्तिः । द्रो० ८१ ॥
तेनालायुधनामकराक्षसस्य दुश्शासनस्य च पराजयः । द्रो० ९० ॥
तेन दुर्योधनपराजयः । वि० ६६ । ४४ ॥ द्रो० १०३ ॥
तस्य युद्धं । द्रो० ८८–९४ ॥
तेन कृपाचार्यपराजयः । द्रो० १४९ ॥
तेन हयाप्यायनाय समराङ्गणेऽस्त्रप्रयोगेण सरोनिर्माणं । शरमयवेश्मनिर्माणं च । द्रो० ९९ ॥
तेनाम्बष्टस्य वधः । द्रो० ९३ । ६५ ॥
तेन श्रुतायुरश्रुतायुषोर्वधः । द्रो० ९३ । २७ ॥
तस्य गर्हणं युधिष्ठिरेण कर्णो नाद्यापि हत इति कारणेन । क० ७१ ॥
तेन कर्णाहननकोपाद्युधिष्ठिरेण श्रीकृष्णाय गाण्डीवदानचोदने युधिष्ठिरवधोद्यमः । क० ७२ ॥
तेन युधिष्ठिरवधप्रतिनिधितया तद्गर्हणं । क० ७२ । ८० ॥ ७३ । १–३५ ॥
तेन स्वकृतयुधिष्ठिराधिक्षेपदोषपरिहारायात्मवधोद्यमः । क० ७३ । ३६ ॥
तेनात्महत्याप्रतिनिधितयाऽऽत्मप्रशंसनं । क० ७३ ४१ ॥
तस्य किरीटापहारः कर्णप्रयुक्तेन नागास्त्रेण । क० ९७ । ३३ ॥
तत्प्रशंसनपूर्वकं वधप्रतिज्ञा कर्णेन । क० ८३ ॥
तेन कर्णास्त्रे प्रविष्टस्य तक्षकपुत्रस्याश्वसेनस्य वधः । क० ९७ । ४७ ॥
तेन कर्णपुत्रस्य वृषसेनस्य वधः । क० ९० ॥
तस्य कर्णेन सह युद्धं । क० ९४–९८ ॥
तद्रथस्य श्रीकृष्णपादनिपीडनेन भूमौ पञ्चाङ्गुलं मज्जनं । क० ९७ । ३० ॥
तेन कर्णस्य वधः । क० ९८ । ५० ॥
तद्रथाच्छ्रीकृष्णावरोहणानुपदं हनुमदादीनामपयानं तद्रथदाहश्च । श० ६३ । १२ ॥

[सः वत्सस्य पुत्रः काशीशः। तत्पुत्रः संनतिः। वायु० ९२ ॥]

[तस्य वंशः। हरि० १। ३२ ॥]

२ **अलर्कः**। कर्णस्योरुभेदकः क्रिमिः। **शां० ३। १३** ॥

**अलायुधः**। दुर्योधनपक्षीयो बकभ्राता राक्षसः। **द्रो० ९६। २७** ॥ **श० २। ३९** ॥

तस्य पराजयोऽर्जुनेन। **द्रो० १६८। २७** ॥

तस्य भीमसेनेन सह युद्धं। **द्रो० १७८** ॥

तस्य घटोत्कचेन हननं। **द्रो० १७९। ३२** ॥

**अलोलुपः**। क्षत्रियः। सो० वं० धृतराष्ट्रपुत्रः। **आ० ६८। १०३** ॥ **१३१। १२** ॥ **भी० ६४। २९** ॥

+ **अल्पायुष्यकारणं**। अनायुष्यकरशब्दं पश्यत।

**अवन्ती**। सेकापरसेकयोर्नर्मदायाश्च दक्षिणतो विद्यमानो मालवदेशान्तर्गतो देशः। **व० ८७। १** ॥ तस्याधिपती विन्दानुविन्दौ। तयोस्सहदेवेन राजसूयदिग्विजये जयः। **स० ३२। ११**
The country of which Ujjain was the Capital.

[ तत्र बलरामकृष्णाभ्यां सान्दीपिन्याचार्याद्विद्याभ्यासः ॥ हरि० २। ३३ ॥ विष्णु० ५। २१ ॥ भा० १०। ४५ ॥ ]

**अवाकीर्णं**। सरस्वतीतीरस्थस्तीर्थविशेषः। **श० ४२। १२** ॥

१ **अविक्षित्**। ( **आविक्षित्** )। क्षत्रियः। अस्य अश्ववान् इति प्रसिद्धं नाम। सो० वं० कुरुपुत्रः। तन्माता वाहिनी। तत्पुत्रा अष्टौ। परीक्षित् शबलाश्वः आदिराजः विराजः शाल्मलिः उच्चैश्श्रवाः भङ्गकारकः जितारिश्चेति। **आ० १०१। ३८-४०** ॥

२ **अविक्षित्**। ( **आविक्षित्** )। क्षत्रियः। सू० वं० करन्धमपुत्रः। तत्पुत्रो मरुत्तः। **अश्व० ४। १७-२३** ॥

**अविज्ञातगतिः**। अनिलनामकवसोः पुत्रः। तन्माता शिवा। **आ० ६७। २५** ॥

**अविन्ध्यः**। विभीषणसचिवो राक्षसः। **व० २८१। ५७** ॥ **२९२। ६** ॥

**अविमुक्तं**। पुण्यक्षेत्रं। **व० ८२। ७८** ॥

+ **अविश्वास्याः**। विश्वासानर्हशब्दं पश्यत।

**अविस्थलं**। युधिष्ठिरप्रार्थितेषु पञ्चग्रामेष्वन्यतमः। **उ० ३१। १९** ॥ **७१। २३। ८१। ७** ॥

**अवीचिः**। नरकः। **अनु० २३०। १६** ॥

+ **अव्रतघ्नानि**। अष्टौ। **उ० ३९। ७१** ॥

+ **अशरीरवाक्**। आकाशवाणीशब्दं पश्यत।

१ **अशोकः**। ( **विशोकः** )। भीमसेनस्य सूतः। **भी० ६४। ११। १८** ॥

२ **अशोकः**। क्षत्रियः। **आ० ६८। १४** ॥

१ **अश्मकः**। क्षत्रियः। सू० वं० सौदासस्य कल्माषपादस्य भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः पुत्रः। **आ० १२८। ५०** ॥ तन्नामनिर्वचनं। **आ० १९३। ४५-४९** ॥

२ **अश्मकः**। तन्नामकदेशाधिपतिः। [illegible]० **७८। २४** ॥ अभिमन्युना हतः। **द्रो० ३७। २२** ॥

**अश्मकुट्टाः**। ऋषयः। **अनु० ४९। ४१** ॥

+ **अश्मरीरोगापादकानि कर्माणि**। **अनु० २२०। २०-२३** ॥

**अश्मा**। ब्राह्मणः। तस्य क्षत्रियधर्मविषये जनकेन संवादः। **शां० २७** ॥

**अश्रुतायुः**। ( **अच्युतायुः** )। दुर्योधनपक्षीयः क्षत्रियः। तत्पुत्रो नियुतायुः। अर्जुनेन हतः। **द्रो० ९३। ७-२४** ॥

१ **अश्वः**। दनुपुत्रोऽसुरः। **आ० ६६। २४** ॥

+ २ **अश्वः**। अश्वत्वजातिविशिष्टः। तदुत्पत्तिः। **आ० ६७। ६८** ॥

तद्वर्णनं कुरुपाण्डवसेनायां। **उ० ५६** ॥ **द्रो० २३** ॥

तल्लक्षणानि । व० ६९ । १९ ॥

**अश्वकेतुः** । क्षत्रियः । दुर्योधनपक्षीयः । मागधस्य पुत्रः अभिमन्युना हतः । द्रो० ४८ । ७ ॥

**अश्वक्रन्दः** । अमृतरक्षको देवः । आ० ३२ । १८ ॥

**अश्वग्रीवः** । दनुपुत्रोऽसुरः । आ० ६६ । २५॥

**अश्वचक्रः** । साम्बेन हतः कश्चन क्षत्रियः । व० १२१ । १५ ॥

**अश्वतरः** । सर्पः । आ० ३५ । १० ॥ उ० १०३ । ९ ॥

**अश्वतीर्थं** । कान्यकुब्जसमीपस्थः तीर्थविशेषः । यस्मिन्नृचीकेन वरुणादेकतःश्यामकर्णानां हयानां सहस्रं प्राप्तं । व० ९३ । ३ ॥ ११६ । २७ ॥ The confluence of the Ganges and the Kalinadi in the district of Kanouj.

+ **अश्वत्थः** । वृक्षविशेषः । तत्प्रशंसा । अश्व० ११७ ॥

१ **अश्वत्थामा** । द्रोणाचार्यस्य पुत्रः । कृपाचार्यस्य भागिनेयः । तन्माता गौतमी कृपी । आ०६४। १४८ ॥ ६८ । ७३ ॥ १४० । ४९ ॥ असंख्येयगुणरथः । उ० १६७ । ३ ॥

तन्नामनिर्वचनं । आ० १४० । ४९ ॥ द्रो० १९७ । ३२ ॥

तेन क्षीरप्रतिनिधितया पिष्टोदकपानं । आ० १४१ । ५२ ॥

तेन कर्णगर्हणं उत्तरगोग्रहणे । वि० ६४ । ३ ॥

तेनार्जुनप्रशंसनं । वि० ६४ । ४ ॥

तेनार्जुनाद्द्रोणरक्षणं । वि० ५९ । ९३ ॥

तस्य पराजयोऽर्जुनेन । वि० ६० ॥ क० ५३ ॥

तस्य भीमसेनेन सह युद्धं । क० १२ ॥

तस्य सैनापत्ये दुर्योधनेनाभिषेकः । श० ६६ ।३७॥

तेन दुर्योधनसमीपे पाण्डववधप्रतिज्ञानं । श० ६६ । ३५ ॥ सौ० ३ ॥

तत्पराक्रमवर्णनं । तेन पाण्ड्यवधश्च । क० ५६ ॥

तेन माहिष्मतीपतेर्नीलस्य वधः । द्रो० ३१ ॥

तस्य घटोत्कचेन सह युद्धं । द्रो० १५७ । ५७ ॥

तेन कर्णवधोद्यमः । द्रो० १६० ॥

तेन नारायणास्त्रप्रयोगः । द्रो० २०० । १७ ॥

तस्य युद्धं । द्रो० २०१ ॥

तस्य शस्त्रन्यासपूर्वकं रणाङ्गणान्निर्गमनं । द्रो० २०२ । ४६ ॥

तस्य धृष्टद्युम्नेन सह युद्धं । क० ५८ ॥

तेन दुर्योधनाय पाण्डवैस्सह शमविधानं । क० ९४ । २० ॥

तस्य ह्रदनिमग्नदुर्योधनसमीपगमनं । श० ३० । ११ ॥

तेन घूककृतबहुकाकवधदर्शनं । सौ० १ ॥

पाण्डवशिबिरद्वारि महाभूतदर्शनं । सौ० ६ ॥

तस्य निन्दा युधिष्ठिरेण । क० ५० । ३३ ॥

तस्याग्निप्रवेशः । सौ० ७ । ५५ ॥

तेन पाण्डवशिबिरं प्रविश्य प्रसुप्तजनमारणं । सौ० ८ ॥

तेन शिबिरे हताः । धृष्टद्युम्नः उत्तमौजाः युधामन्युः पञ्चद्रौपदेयाः शिखण्डी इत्यादयः । सौ० ८॥

तस्य वधाय द्रौपदीप्रेरितेन भीमेन गमनं । सौ० ११ । २९ ॥ [भा० १ । ७ ॥]

तेन पाण्डववधाय ब्रह्मशिरोस्त्रप्रयोगः । तदेव ऐषीकास्त्रं अपाण्डवेयास्त्रं च । सौ० १३ । १८ ॥ [भा० १ । ७ ॥]

तस्मै श्रीकृष्णेन शापदानं । सौ० १६ । १ ॥

तन्मस्तकस्थमणेः पाण्डवैरादानं । सौ० १६ । १६॥ [भा० १ । ७ ॥]

२ **अश्वत्थामा** । मालवेन्द्रस्येन्द्रवर्मणो गजः । भीमसेनेन हतः । द्रो० १९१। १४ ॥ १९४ । ५५ ॥

**अश्वनदी** । काचन नदी । यस्यां कुन्ती सपुत्रं कानीनं कर्णं मञ्जूषायां निधायावासृजत् ।

**व० ३०९ । ८** ॥ सा चर्मण्वतीनद्यां मिलति । **व० ३०९ । २६** ॥

१ **अश्वपतिः** । दनुपुत्रोऽसुरः । **आ० ६६ । २४** ॥

२ **अश्वपतिः** । क्षत्रियः । सावित्र्याः पिता मद्रराजः । **व० २९४ । ६** ॥

[तस्य भार्या मालती । ब्रह्मवै० प्रकृतिखं० २३ ॥]

**अश्वमेधः** । यज्ञविशेषः । तत्करणं युधिष्ठिरेण । **अश्व० ९०** ॥ सगरेण । **व० १०६ । ११** ॥

तेन ब्रह्महत्यापरिहारः । **शां० १५१** ॥

तस्य क्रतुश्रेष्ठत्वं । **आ० १२९ । ४६** ॥

[तत्करणप्रकारः विस्तरेण । रा० १ । १४ ॥]

**अश्वमेधदत्तः** । क्षत्रियः । सो० वं० शतानीकपुत्रः । जनमेजयस्य पौत्रः । तन्माता वैदेही । **आ० ६३ । ८८** ॥

**अश्ववान्** । क्षत्रियः । सो० वं० कुरुपुत्रः । अधिकं अविक्षिच्छब्दे पश्यत । **आ० १०१ । ३८** ॥

**अश्वशङ्कुः** । दनुपुत्रोऽसुरः । **आ० ६६ । २३** ॥

१ **अश्वशिराः** । दनुपुत्रोऽसुरः । **आ० ६६ । २३** ॥

२ **अश्वशिराः** । बदरिकाश्रमस्थः ऋषिः । यः शाश्वतान्वेदान्नित्यशः पठति । **शां० १२७ । ३** ॥

[अयमथर्वाङ्गिरसः पुत्रः । **भा० ४ । १** ॥]

**अश्वसेनः** । सर्पः । तक्षकपुत्रः । खाण्डवदाहे उर्वरितेष्वन्यतमः । **आ० २५३ । ५** ॥ **२५४ । ४७** ॥ **शा० ६२ । ३४** ॥

तेन कर्णेनार्जुनं प्रति प्रमुक्तेऽस्त्रे प्रवेशः । **क० ९७ । १२** ॥

तस्य वधोऽर्जुनेन । **क० ९७ । ४७** ॥

+ **अश्वहृदयं** । अश्वशास्त्रं । तद्दानं नलेन ऋतुपर्णाय । **व० ७९ । १८** ॥

**अश्विनौ** । देवभिषजौ । बडवारूपधारिण्यां त्वाष्ट्र्यां स्वभार्यायां सूर्याज्जातौ । **आ० ६७ । ३५** ॥ [भा० ६ । ६ ॥ ८ । १२ ॥ वराह० २० ॥ वायु० ८४ ॥ हरि० १ । ९ ॥ ब्रह्म० ६ ॥ पद्म० ५ । ८ ॥ विष्णु० ३ । २ ॥ शिवपु० उमासं० ३५ ॥]

तयोर्देवेषु शूद्रजातित्वं । **शां० २०७ । २६** ॥

ताभ्यां च्यवनाश्रमं प्रति गमनं । **व० १२४ । ६** ॥

ताभ्यां पाण्डुभार्यायां माद्र्यां नकुलसहदेवोत्पत्तिः । **आ० ६३ । ६६** ॥ **१२३ । १८** ॥

तयोः स्तोत्रं । अर्कपत्रभक्षणेनान्धीभूतेनोपमन्युऋषिणा गुरोरापोदस्य धौम्यस्याज्ञया चक्षुःप्राप्त्यर्थं कृतं । **आ० ३ । ५६** ॥

ताभ्यां उपमन्योः चक्षुर्दानं । **आ० ३ । ७३** ॥

**अश्विनोस्तीर्थं** । **व० ८१ । १७** ॥

**अष्टकः** । ऋषिः । विश्वामित्रपुत्रः । ययातिपुत्र्यां माधव्यां जातः । **उ० ११९ । १८—२०** ॥

तेन ययातिं प्रति कृताः प्रश्नाः । **आ० ८२–८४** ॥ [मत्स्य० ३८ ॥]

तत्कृता पुष्करास्तेयप्रतिज्ञा । **अनु० १४३ । ३६** ॥ [तत्पुत्रो लौहिः । **हरि० १ । २७** ॥]

+ अष्टमदिवसयुद्धारम्भः । **भी० ८७** ॥ तत्समाप्तिः । **भी० ९६** ॥

**अष्टवसवः** । धर्मप्रजापतेर्वसुनाम्न्यां दक्षपुत्र्यां जाताः । ते च धरः ध्रुवः सोमः अहः अनिलः अनलः प्रत्यूषः प्रभासः इति ॥ **आ० ६७ । १७** ॥ अहस्य सावित्र इति नामान्तरं । **अनु० २५५ । १७** ॥

[ते च द्रोणः प्राणः ध्रुवः अर्कः अग्निः दोषः वसुः विभावसुः इत्यष्टौ । भा० ६ । ६ ॥]

[ते च आपः ध्रुवः सोमः धर्मः अनिलः अनलः प्रत्यूषः प्रभासः इत्यष्टौ । विष्णु० १ । १५ ॥]

[ते च आपः धरः ध्रुवः सोमः अनिलः अनलः प्रत्यूषः प्रभासः इत्यष्टौ । हरिवं० १ । ३ ॥]

तेषां वसिष्ठेन शापः । **आ० १०२ । १०** ॥ **१०६** ॥

तेषां गङ्गया सह भूमावुत्पत्त्यर्थं संवादः । **आ० १०२ । १७** ॥

तेषां पुत्राः भार्याश्च । **आ० ६७ । १९ ॥**

**अष्टाङ्गः** । आयुर्वेदस्य कर्ता ऋषिः । **स० ११ । २५ ॥**

**+ अष्टादशदिवसयुद्धारम्भः । श० ९ ॥**

**१ अष्टावक्रः** । ऋषिः कहोलस्य पुत्रः । उद्दालकस्य दौहित्रः । श्वेतकेतोः स्वस्रीयः । तन्माता सुजाता । **व० १३४ ॥**

तन्नामनिर्वचनं । **व० १३४ । १२ ॥**

तस्य जनकराजेन सह विवादः। **व० १३५ । २२ ॥**

तस्य वरुणपुत्रेण बन्दिना विवादः। **व० १३६ । १ ॥**

तेन गर्भस्थेन स्वपितुः कहोलस्याध्ययने दोषोद्धाटने पित्रा तस्मै अष्टावक्रत्वशापदानं । **व० १३४ । १० ॥**

तस्योपाख्यानं स्त्रीस्वभावकथनाय भीष्मेण युधिष्ठिरं प्रति कथितं । **अनु० ५० ॥**

तस्य सुप्रभानाम्न्या वदान्यऋषिपुत्र्या विवाहोद्यमः । **अनु० ५० । ११ ॥**

तस्य सुप्रभया विवाहः । **अनु० ५२ । २१ ॥**

तस्य पितुराज्ञया समङ्गानद्यवगाहनेन अवक्रदेहप्राप्तिः । **व० १३६ । ३९ ॥**

तस्य जरतीरूपधारिण्या दिग्देवतया संवादः। **अनु० ५० । ५७ ॥**

**२ अष्टावक्रः** । सर्पः । **आ० ५७ । १७ ॥**

**असमञ्जः** । क्षत्रियः । सू० व० सगरस्य पुत्रः । तन्माताऽरिष्टनेमिदुहिता सुमतिः । रथ्यायां क्रीडतो बालकान्गृहीत्वा सरय्वां क्षिपन्तं यं पिता विवासयामास । तत्पुत्रोंऽशुमान् । **व० १०७ । ८ ॥** [भा० ९ । ८ ॥ रा० १ । ३८ ॥ हरि० १ । १५ ॥ विष्णु० ४ । ४ ॥]

**असमञ्जाः** । भोजपुत्रः । यः पित्रा पौराणां हितकाम्यया परित्यक्तः । **स० ८६ । ७ ॥** अयं पूर्वोक्तादनन्य इति सगरस्यैव भोज इति नामान्तरमिति च भाति ।

**असिक्नी** । नदी । **भी० ९ । २३ ॥** The river Chenab ( chandrabhaga ).

**१ असितः** । ऋषिः । अस्य देवल इति नामान्तरमिति भाति । **आ० ५३ । ८ ॥ स० ४ । १६ ॥ ११ । २४ ॥ श० ५१ । १ ॥ शां० २३६ । ३ ॥ २८१ । १ ॥**

तत्स्मरणस्य सर्पभयपरिहारकत्वं। **आ० ५८ । २३ ॥**

[तद्भार्या हिमवतः पुत्री एकपर्णा । हरि० १ । १८ ॥]

**२ असितः** । मान्धात्रा पराजितः कश्चन क्षत्रियः । **शां० २८ । ८८ ॥**

**+ असिः** । खड्गशब्दं पश्यत ।

**असिलोमा** । दनुपुत्रोऽसुरः । **आ० ६६ । २३ ॥**

**असुरा** । प्राधायाः पुत्री अप्सराः । **आ० ६६ । ४५ ॥**

**+ असुराः** । दैतेयादयः । तेषां नामानि वंशाश्च । **आ० ६६ । १७ ॥ शां० २३४ । ४९ ॥** [भा० ६ । १८ ॥ विष्णु० १ । २१ ॥]

तेषां राजवंशे उत्पत्तिः । **आ० ६५ । २७ ॥**

तेषां युद्धं । आ० १९ ॥ [भा० ८ । १० ॥]

**असुरायणः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५६ ॥**

**असुर्याः** । अन्धेन तमसाऽऽवृताः पापिजनप्राप्या लोकाः । **अनु० ११२ । ५ ॥**

**असूया** । दोषः । तस्याः धर्मविघातकत्वं । **उ० ३७ । ८ ॥ शां० ९० । २४ ॥**

**अस्तिः** । जरासन्धपुत्री कंसभार्या । तस्या भगिनी प्रास्तिः (प्राप्तिः) । **स० १४ । ३२ ॥**

**अस्त्रपरीक्षा** । कौरवपाण्डवानां द्रोणाचार्येण । **आ० १४२—१४६ ॥**

**अहंयातिः** । क्षत्रियः । सो० वं० शय्यातिपुत्रः । तन्माता त्रिशङ्कुदुहिता वराङ्गी । तद्भार्या कृतवीर्यदुहिता भानुमती । तत्पुत्रः सार्वभौमः । **आ० ६३ । १३ ॥**

**१ अहः** । तीर्थविशेषः । **व० ८१ । १०० ॥**

**२ अहः** । अष्टवसुष्वन्यतमः । धर्मप्रजापतेः पुत्रः । तन्माता रता । **आ० ६७ । २० ॥** अस्य सावित्र इति नामान्तरं । **अनु० २५५ । १७ ॥**

तत्पुत्राः ज्योतिः शमः शान्तः मुनिः इति चत्वारः । **आ० ६७ । २३ ॥**

+ **अहङ्कारतत्वनिरूपणं । अश्व० ४१ ॥**

**अहल्या ।** गौतमऋषिभार्या । सा गुरुदक्षिणां किं ददानीति पृष्टवन्तमुदङ्कं सौदासपत्न्या विधृते कुण्डले आनेतुमाज्ञापयामास । **अश्व० ५६ । २६ ॥**

[तत्पुत्रः शतानन्दः । शतानन्दपुत्रः सत्यधृतिः । सत्यधृतिपुत्रः शरद्वान् । भा० ९ । २१ ॥]

[तस्याः पिता मुद्गलः । भा० ९ । २१ ॥]

[सा ब्रह्मणो मानसी कन्या । रा० ७ । ३० ॥]

[सा वध्र्यश्वान्मेनकायां जाता । हरि० १ । ३२]

[तद्भ्राता दिवोदासः । भा० ९ । २२ ॥ हरि० १ । ३२ ॥]

तस्याः धर्षणमिन्द्रेण । **उ० १२ । ६॥ शां० ३५१ । २३ ॥** [रा० १ । ४८ ॥ ७ । ३० ॥]

[तस्याः कथा । ब्रह्मपु० ८७ ॥]

**अहल्याह्रदः ।** तीर्थं । **व० ८२ । १०९ ॥**

+ **अहिंसाप्रशंसा । आ० ११ । १३ ॥ व० ३१५ । ८ ॥ उ० ३३ । ५९ ॥ अनु० १७५ ॥ १७८ । ४० ॥ २१३ ॥**

**अहिच्छत्रं । (आहिच्छत्रं) ।** उत्तरपाञ्चालदेशः । द्रुपदाद्द्रोणाचार्येणापहृतः । **आ० १४८ । ८१॥**
Ramnagar–twenty miles west of Bereli. It was the capital of North–Panchala, in Rohilkhand.

**अहिर्बुध्न्यः ।** एकादशरुद्रेष्वन्यतमः । **आ० ६७ । २ ॥**

## आ.

**आकर्षाः ।** देशः । तत्रत्या जनाश्च । **स० ३७ । १४ ॥**

**आकाशः ।** पञ्चमहाभूतेष्वन्यतमः । तद्गुणनिरूपणं । **व० २१५ । ७ ॥ भी० ५ । ६ ॥ शां० २५८ । ३ ॥ २६१ । ७ ॥ अनु० २४५ । २९ ॥**

**आकाशगङ्गा ।** बदरीप्रभवा नदी । **आ० २ । ३७६ ॥ व० १४४ । ४ ॥**

+ **आकाशवाणी ।** अशरीरवाक् । भरतजननसमये शकुन्तलां प्रति । **आ० ९८ । ५६ ॥** शकुन्तलाया अङ्गीकरणीयत्वे दुष्यन्तं प्रति । **आ० १०० १ ॥** युधिष्ठिरजननसमये । **आ० १२९ २२ ॥** अर्जुनजननसमये । **आ० १३२ १८ ॥** अश्वत्थाम्नो जननसमये । **आ० १४० ५० ॥** द्रौपद्या जननसमये । **आ० १४९ ६५ ॥** युधिष्ठिरं प्रति गन्धमादनस्य दुर्गमत्वे । **व० १५७ । १३ ॥** श्रीकृष्णस्याग्रपूजने सहदेवं प्रति । **स० ६२ । ७ ॥**

**आग्नेयः ।** स्कन्दः । **व० २३३ । ३ ॥**

**आग्नेयास्त्रं ।** अग्निदेवताकमस्त्रं । तत्प्रयोगोऽर्जुनेनाङ्गारपर्णं प्रति । **आ० १८६ । ३१ ॥**

तत्प्रयोगोऽश्वत्थाम्ना पाण्डवान्प्रति । **द्रो० २०२ ॥**

**आग्रयणः ।** अग्निविशेषः । **व० २२३ । १३ ॥**

**आङ्गिरसी ।** काचन ब्राह्मणी या स्वेन सह मैथुनधर्मस्थस्य भर्तुर्वधात् (सौदासं) कल्माषपादं त्वं तव भार्यया सह मैथुनसमये मरिष्यसीत्यशपत् । **आ० १९८ । २४ ॥**

**आङ्गी ।** सो० वं० अपराचीनपुत्रस्य अरिहस्य भार्या । तत्पुत्रो महाभौमः । **आ० ६३ । १८ ॥**

**आह्निकः ।** विश्वामित्रऋषेः पुत्रः । **अनु० ७ ।५४॥**

**आचारः ।** बहूनां प्रेक्षावतामाचरणं । तस्य धर्मत्वं । **शा० १३२ । १५ ॥ अनु० १६१ । ६–९ ॥**

१ **आचार्यः ।** गुरुः । तल्लक्षणं । **अश्व० ११० ।** ५९ ॥ तन्महिमा । **शां० १०८ । २३–२८ ॥**

२ **आचार्यः ।** द्रोणाचार्यः । **आ० १४४ । २२ ॥**

**आचार्यपुत्रः ।** अश्वत्थामा । **आ० १५५ । १६ ॥**

**आजगरः ।** यदृच्छोपागतेन तुष्टः कश्चन ब्राह्मणः । तस्य प्रह्लादेन संवादः । **शां० १७७ ॥** [भा० ७ । १४ ॥]

+ **आजगरपर्व । व० १७८—१८३ ॥**

**आजगरप्रश्नाः ।** अगस्त्यशापेनाजगरत्वं प्राप्तेन नहुषेण युधिष्ठिरं प्रति कृताः प्रश्नाः । **व० १८२ ॥**

**आजगवं ।** पृथुराजस्य धनुः । **द्रो० ६९ ।** ३० ॥

+ **आततायी ।** वधोद्यतः । तद्धननस्य न्याय्यत्वं । **भी० १०७ ।** १०१ ॥ **शां० १५ ।** ५५ ॥

१ **आत्रेयः ।** ऋषिः । वामदेवस्य शिष्यः । **व० १९५ ।** ४६ ॥

२ **आत्रेयः ।** जनमेजयस्य सर्पसत्रे सदस्यो ब्रह्मर्षिः । **आ० ५३ ।** ८ ॥ **शां० ४६ ।** ८ ॥ [अयं कौषारवो ब्रह्मर्षिः । तेन विदुराय ज्ञानोपदेशः । भा० ३ ॥]

३ **आत्रेयः ।** हंसरूपी संचरन्कश्चन ऋषिः । तेन साध्यान्प्रति नीतिकथनं । **उ० ३६ ॥**

**आत्रेयाः ।** देशः । **भी० ९ ।** ६८ ॥

**आत्रेयी ।** नदी । **स० ९ ।** २६ ॥

+ **आत्मप्रशंसा ।** तस्या आत्मवधप्रतिनिधित्वं । **क० ७३ ॥**

+ **आत्मरक्षणस्य कर्तव्यत्वं । शां० १३१ ।** १४१ ॥

+ **आत्मश्राद्धकरणं** वराहेण । **शां०३५५।१४**

**आदित्यः ।** सूर्यशब्दं पश्यत ।

**आदित्यकेतुः ।** क्षत्रियः । धृतराष्ट्रपुत्रः । भीमेन हतः । **भी० ८८ ।** २८ ॥

**आदित्यतीर्थं । श० ५० ।** १६ ॥

+ **आदित्यहृदयं । आ० १८९ ।** २४ ॥

**आदित्याः ।** कश्यपपुत्राः अदित्यां जाताः द्वादश । ते च धाता मित्रः अर्यमा शक्रः वरुणः अंशः भगः विवस्वान् पूषा सविता त्वष्टा विष्णुः इति । **आ० ६६ ।** १४ ॥ **१३२ ।** ४८ ॥ **शां० २०७ ।** १७ ॥ अंशः भगः मित्रः वरुणः धाता अर्यमा जयन्तः भास्करः त्वष्टा पूषा इन्द्रः विष्णुः इति । **अनु० २५५ । १५** ॥ [विष्णु० १ । १५ ॥ भा० ६ । ६ ॥]

[तेषां भार्याः पुत्राश्च । भा० ६ । १८ ॥]

**आदित्याश्रमः ।** क्षेत्रविशेषः । **व० ८१** ।१८४॥

**आदिराजः ।** क्षत्रियः । सो० वं० अविक्षितः पुत्रः । **आ० १०१ ।** ४० ॥

**आदिशेषः ।** शेषशब्दं पश्यत ।

**आधिरथिः ।** कर्णशब्दं पश्यत ।

**आधूर्तरजाः ।** ( **अमूर्तरयः** ) । गयराजस्य पिता । **व० ९३ ।** १९ ॥

**आनर्ताः ।** देशः । **भी० ९ । ५५** ॥ Guzerat and part of Malwa.

**आनुः ।** अनुशब्दं पश्यत ।

**आनृशंस्यं ।** गुणः । **अनु० ११ ॥**

**आन्ध्रकाः ।** कृष्णागोदावर्योर्मध्ये विद्यमानो देशः । **भी० ९ ।** ४९ ॥ The country between Godavery aud Krishna.

१ **आपः ।** जलशब्दं पश्यत ।

२ **आपः ।** अकारान्तोयं शब्दः । अग्निविशेषः । तस्य भार्या मुदिता । **व० २२४ ।** १ ॥

**आपगा ।** काचन नदी । **व० ८१ ।** ६८ ॥ **क० ३७ ।** २० ॥ The Ayuk-nadi to the west of the Ravi in Punjab.

+ **आपत् ।** विपत् । तदर्थं धनरक्षणं । **आ० १७२ ।** ३५ ॥

तस्याः पात्रं । **उ० ३२ ।** २६ ॥

+ **आपद्धर्मपर्व । शां० १३१–१७२ ॥**

**आपवः ।** वसिष्ठः । **आ० १०५ ।** १०६ ॥

**आपस्तम्बः ।** भृगुवंशोत्पन्नो ब्रह्मर्षिः । **व० २९९ ।** १८ ॥ [मत्स्य० ७ । ]

[तस्य भार्या अक्षसूत्रा । तत्पुत्रः कार्किः । ब्रह्म० १३० ॥]

**आपोदः ।** ( **आयोदः** ) । धौम्यनामा ब्रह्मर्षिः । तस्य त्रयः शिष्याः । उपमन्युः आरुणिः बैदः इति । **आ० ३ ।** २१ ॥

**आभीराः ।** देशः । **भी० ९ ।** ४७ ॥

**आम्बिकेयः ।** धृतराष्ट्रः । **आ० १६२ । ७६ ॥**

**आयतिः** । क्षत्रियः । सो० वं० नहुषस्य पुत्रः । ययातेर्भ्राता । **आ० ६९ । ३३ ॥**

१ **आयुः** । क्षत्रियः । सो० वं० ऐलस्य पुरूरवसः पुत्रः । उर्वश्यां जातः । तद्भ्रातरः पञ्च । धीमान् अमावसुः दृढायुः वनायुः शतायुः इति । तद्भार्या स्वर्भानवी । तत्पुत्राः नहुषः वृद्धशर्मा रजिः गयः अनेनाः इति । अयं शब्दः उकारान्तः सकारान्तश्च । **आ० ६३ । ५ ॥ ६९ । २९ ॥**

[तस्य वंशः । हरि० १ । २८ ॥ ब्रह्म० ११ ॥ वायु० ९२ ॥ भा० ९ । १७ ॥]

२ **आयुः** । मण्डूकराजः । **व० १९५ । ३२ ॥**

+ ३ **आयुः** । पुरुषस्य जीवितकालः । तद्वृद्धिकारणं । **उ० ३९ । ५३ । ७५ ॥ अनु० १६१ ॥**

तद्ध्रासकारणं । अनायुष्यकरशब्दं पश्यत ।

+ **आयुधग्रहणमर्जुनेन । आ० २३३ ॥**

+ **आयुधनिक्षेपः शमीवृक्षे । वि० ७ ॥**

**आयुर्वेदः** । ऋषिः । **स० ११ । २५ ॥**

**आयुष्यकराणि कर्माणि । अनु० १६१ ॥**

**आयोदः** । आपोदशब्दं पश्यत ।

**आरट्टाः** । देशः । बाह्लीकशब्दं पश्यत । **भी० ९० । ३ ॥ द्रो० १९४ । १३ ॥** The Province of Punjab.

तेषां निन्दा । **क० ३७ ॥**

**आरणेयः** । शुक्राचार्यः ।

+ **आरणेयपर्व । व० ३१२-३१५ ॥**

+ **आरण्यकं** । उपनिषद्विशेषः । **उ० १७५ । ३९ ॥**

१ **आरुणिः** । ऋषिः । आपोदस्य शिष्यः । तस्य उद्दालक इति प्रसिद्धं नाम । **आ० ३ । २३ ॥**

२ **आरुणिः** । सर्पः । **आ० ५७ । १९ ॥**

३ **आरुणिः** । विनतायाः पुत्रः । **आ० ६६ । ४० ॥**

**आरुषी** । भृगुपुत्रस्य च्यवनस्य भार्या मनुपुत्री । तत्पुत्र और्वः । **आ० ६७ । ४६ ॥**

**आर्चीकः** । पर्वतः । **व० १२६ । १६ ॥**

**आर्जयः । ( आर्जवः )** । क्षत्रियः । शकुनेरनुजः । धृतराष्ट्रस्य श्यालः । इरावता हतः । **भी० ९० । ३० ॥**

**आर्जुनिः** । अभिमन्युः । **भी० ५५ । १५ ॥**

**आर्तायनिः** । ऋतायननाम्नो मद्राधिपस्य पुत्रः शल्यः । **भी० ६२ । १४ ॥**

**आर्तिमान्** । ऋषिः । यस्य स्मरणमात्रेण सर्पबाधा नश्यति । **आ० ५८ । २३ ॥**

**आर्द्रकः** । क्षत्रियः । सू० वं० इक्ष्वाकुवंश्यस्य विष्वगश्वस्य पुत्रः । तत्पुत्रो युवनाश्वः । **व० २०५ । ३ ॥**

**आर्यकः** । सर्पः । **आ० ३५ । ७ ॥ १३८ । ३४ ॥ उ० १०३ । ११ ॥ १०४ ॥**

**आर्यावर्तः** । विन्ध्यहिमवतोर्मध्ये विद्यमानो देशः । **शां० ३३३ । १५ ॥**

**आर्श्यशृङ्गिः** । बकस्य ज्ञातिः राक्षसः । दुर्योधनपक्षीयः । तेन इरावतो वधः । **भी० ९० ॥**

तस्य युद्धं । **भी० १०१ । १११ ॥**

अयमेवालम्बुस इति भाति । **द्रो० १०९ । ४८ ॥**

अयमलम्बुसादन्य इत्यपि भाति । **श० २ । ३९ ॥**

१ **आर्ष्टिषेणः** । गन्धमादनपर्वतस्थे कस्मिंश्चिदाश्रमे वसन्राजर्षिः । पाण्डवैस्तत्समीपगमनं । **व० १५९-१६१ ॥**

२ **आर्ष्टिषेणः** । कृतयुगे भवः कश्चन राजर्षिः । पश्चात्तपश्चर्यया ब्राह्मणोऽभूत् । **स० ८ । १४ ॥ श० ४० । ३६ ॥ ४१ । ३ ॥**

**आलम्बः** । ऋषिः । युधिष्ठिरसभायां । **स० ४ । २० ॥**

**आलम्बायनः** । इन्द्रस्य सखा । तेन रुद्रमाहात्म्यकथनं । **अनु० ४९ । ५ ॥**

+ **आलस्यं** । दुर्गुणः । तस्यानर्थकारणत्वं । **शां० ११२ ॥**

**आवसथ्यः** । अग्निविशेषः । **व० २२३ । ५ ॥**

**इन्द्रकीलः** । पर्वतः । तत्रार्जुनेन रुद्रमुद्दिश्य तपः-करणं । **व० ३७ ॥**

**इन्द्रजित्** । रावणपुत्रो राक्षसः । **व० २८६ ॥**

तस्य वधो लक्ष्मणेन । **व० २९० ॥**

**इन्द्रतापनः** । दैत्यः । **स० ९** । १९ ॥

**इन्द्रतीर्थम्** । **श० ४९** । १८ ॥ ५० । १ ॥

१ **इन्द्रद्युम्नः** । क्षत्रियः । श्रीकृष्णेन हतः । **स० ६१** । ६ ॥

२ **इन्द्रद्युम्नः** । ऋषिः । **व० २६** । २२ ॥

३ **इन्द्रद्युम्नः** । क्षत्रियः । **स० ८** । २१ ॥ भूमौ तस्य कीर्त्यभावाद्देवैः स्वर्गाद्भ्रंशितः । पुनरकूपारनाम्ना कच्छपराजेन ख्यापितां तत्कीर्तिं विज्ञाय देवदूतैः स्वर्गं प्रापितः । **व० २०२ ॥**

४ [**इन्द्रद्युम्नः** । पाण्ड्यो वैष्णवो राजाऽगस्त्यऋषिशापाद्गजेन्द्रत्वं प्रापितः । ग्राहग्रस्तो हरिणा मोचितश्च । भा० ८ । ४ ॥] अयं पूर्वोक्तेष्वन्यतमोऽन्यो वेति न ज्ञायते ।

**इन्द्रद्युम्नसरः** । तृतीयेन्द्रद्युम्नकृतदानोदकनिर्मितं सरः । यस्मिन्नकूपारनामा कच्छप उवास । **आ० १२४** । ५१ ॥ **व० २०२** । ७ ॥

**इन्द्रद्रुमिः** । ऋषिः । **शां० २४०** । १८ ॥

+ **इन्द्रध्वजोत्सवः** । उपरिचरवसुकृतः । **आ० ६४ ॥**

**इन्द्रप्रस्थः** । हास्तिनपुरसमीपस्था पाण्डवराजधानी । विश्वकर्मणा तन्निर्माणं पाण्डवानां तत्र गमनं च । **आ० २२७ ॥** The old Delhi on the banks of the river Jumna.

तत्र श्रीकृष्णपौत्रस्य वज्रस्य राज्याभिषेकः । **मौ० ८** । ७३ ॥

तस्मान्मगधदेशमार्गः । **स० २०** । २६–३० ॥

**इन्द्रमार्गः** । क्षेत्रं । **व० ८१** । १८१ ॥

**इन्द्रवर्मा** । मालवः क्षत्रियः । यस्य गजोऽश्वत्थामनामा भीमसेनेन हतः । **द्रो० १९१** । १४ ॥

**इन्द्रलोकाभिगमनपर्व** । **व० ४२–४८ ॥**

१ **इन्द्रसेनः** । पाण्डवानां दूतः । **स० १३** । ५० ॥ ३६ । ३० ॥ **व० २७० ॥ स्त्री० २६** । २५ ।

तस्य पाण्डवैर्द्वारकां प्रति प्रेषणं । **वि० ५ ॥**

२ **इन्द्रसेनः** । नलराजस्य पुत्रः । **व० ५४** । ४९॥

३ **इन्द्रसेनः** । क्षत्रियः । सो० वं० तृतीयस्य जनमेजयस्य पुत्रः । **आ० १०१** । ४३ ॥

४ **इन्द्रसेनः** । क्षत्रियः । कौरवपक्षीयः । **द्रो० १५७** । १२२ ॥

१ **इन्द्रसेना** । नालायनीशब्दं पश्यत ।

२ **इन्द्रसेना** । नलराजस्य पुत्री । तन्माता दमयन्ती । **व० ५४** । ४९ ॥

**इन्द्राणी** । इन्द्रस्य भार्या शची । तया स्वसङ्गमं प्रार्थितवन्तं नहुषं प्रति समयकरणं । **उ० १५॥**

**इन्द्राभः** । क्षत्रियः । सो० वं० षष्ठस्य धृतराष्ट्रस्य पुत्रः । **आ० १०१** । ४७ ॥

+ **इन्द्रियाणि** । चक्षुरादीनि । तेषां गुणाः । **अश्व० २२ ॥**

तन्निग्रहस्यावश्यकत्वं । **उ० ३३** । ८४ ॥ **शां० २५६**

तेषां मनसा विवादः । **अश्व० २३ ॥**

तन्निग्रहस्य कष्टसाध्यत्वं । **भी० २६** । ६० ॥

तद्विषयाणां तदभिमानिदेवतानां च कथनं । **शां० ३१८ ॥**

**इन्द्रोतः** । शौनकनामा ऋषिः । तेन चतुर्थस्य जनमेजयस्य ब्रह्महत्याया अश्वमेधयाजनेनापनोदनं । **शां० १४९-१५१ ॥** [हरि० १।३०॥]

१ **इरा** । अप्सराः । **स० १०** । १२ ॥

२ **इरा** । कश्यपप्रजापतिभार्या । **स० ११** । ३९॥ तत्पुत्र्यस्तिस्रः वृक्षाणां वनस्पतीनां वीरुधां च मातरः । **आ० ६७** । ६९ ॥

**इरावती** । नदी । **स० ९** । २३ **भी० ९** । १६ ॥ **क० ३७** । २७ ॥

**इरावान्** । अर्जुनस्य नागकन्यायामुलूप्यां जातः पुत्रः । **आ० ६३** । ८० ॥ **२३४** । ३५ ॥

तेन शकुनिभ्रातॄणां षण्णां वधः । **भी० ९० ।** ३०–५० ॥

तस्य वधः आर्ष्यशृङ्गिणा राक्षसेन । **भी० ९०** । ८० ॥

**इला ।** वैवस्वतमनोरपत्यं । **आ० ६३ ।** ४ ॥ **६९ ।** १९ ॥ तत्पुत्रः बुधाज्जातः पुरूरवाः । **आ० ६९ ।** २१ ॥ [हरि० १ । १० ॥ ब्रह्म० ७ ॥ मत्स्य० ११ ॥ भा० ९ । १ ॥]

**इलावृतः ।** जम्बूद्वीपस्थः खण्डः । **स० २९ ।** १२ ॥ **भी० ६ ।** ३८ ॥

तद्विजयोऽर्जुनेन । **स० २९ ॥**

**इलिलः ।** क्षत्रियः । सो० वं० त्रस्नोः पुत्रः । तन्माता कालिन्दी । तद्भार्या रथन्तरी । **आ० ६३ ।** २८ ॥ तस्य इलिन इति त्रस्नोः तंसुरिति च नामान्तरं । **आ० ८८ ।** १५ ॥

तत्पुत्राः पञ्च । दुष्यन्तः शूरः भीमः प्रवसुः वसुः इति । **आ० ८८ ।** १७ ॥

**इल्वलः ।** दैत्यः । वातापेर्ज्येष्ठो भ्राता । **व० ९४ ।** ४ ॥ **९६ ।** २० ॥ [रा० ३ । ११ ॥ सः हिरण्यकशिपोर्भागिनेयः । मत्स्य० ६ ॥ हिरण्यकशिपुपुत्रस्य ह्रादस्य पुत्रः । भा० ६ । १८ ॥]

तस्यागस्त्येन भस्मीकरणं । **व० ९७ ।** २३ ॥

तस्य पुरी मणिमती । **व० ९४ ।** ४ ॥

[तस्य पुत्रो बल्वलः । बलरामेण हतः । भा० १० । ७९ ॥]

**इषीकः ।** ब्राह्मणः । गङ्गातीरवासिनं यं शिखण्डी स्वस्य पुंस्त्वप्राप्त्यर्थं पर्यचरत् । **आ० ११० ।** २३ ॥

**इषीकास्त्रं । (ऐषीकास्त्रं) ।** अश्वत्थाम्ना पाण्डवविनाशाय विसृष्टमस्त्रं । इदमेवापाण्डवेयास्त्रं । **सौ० १३ ।** १८–१९ ॥

**इषुपात् ।** दनुपुत्रोऽसुरः । **आ० ६६ ।** २५ ॥

## ई.

**ईजिकाः ।** देशः । **भी० ९ ।** ५२ ॥

**ईलिनः ।** क्षत्रियः । सो० वं० तंसोः पुत्रः । **आ० ८८ ।** १५ ॥ विशेषं इलिलशब्दे पश्यत ।

१ **ईश्वरः ।** एकादशरुद्रेष्वन्यतमः । **आ०६७**।३॥

२ **ईश्वरः ।** क्षत्रियः । सो० वं० पूरोः पुत्रः । तन्माता पौष्टी । **आ० ८८ ।** ४ ॥

## उ.

**उक्थ्यः ।** अग्निविशेषः । **व० २२१ ।** ३३ ॥

**उग्रः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १५८ ।** १७ ॥

**उग्रकर्मा ।** साल्वराजः । भीमेन हतः । **क० २**।४४॥

१ **उग्रश्रवाः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** १०० ॥

२ **उग्रश्रवाः ।** रोमहर्षणपुत्रः सौतिः । पौराणिकः । **आ० १ ।** ५ ॥

१ **उग्रसेनः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** १०० ॥

२ **उग्रसेनः ।** स्वर्भानोरंशः कश्चन क्षत्रियः । **आ० ६८ ।** १३ ॥

३ **उग्रसेनः ।** क्षत्रियः । सो० वं० पाण्डवपौत्रस्य परीक्षितः पुत्रः । जनमेजयस्य भ्राता । **आ० ३ ।** १ ॥

४ **उग्रसेनः ।** क्षत्रियः । सो० वं० कंसस्य पिता । **स० २३ ।** ४ ॥ [आहुकस्य पुत्रः । तद्भ्राता देवकः । भा० ९ । २४ ॥ विष्णु० ४ । १४ ॥]

तस्य राज्याभिषेकः श्रीकृष्णेन । **स० ५३ ।** ३३ ॥

५ **उग्रसेनः ।** कश्यपभार्यायाः मुनेः पुत्रो देवगन्धर्वः । **आ० ६६ ।** ४२ ॥

**उग्रायुधः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९९ ॥

**उचथ्यः । (उतथ्यः) ।** ऋषिः । अङ्गिरसः पुत्रः । तस्य भ्रातरौ बृहस्पतिः संवर्तश्च । **आ० ६७ ।** ५ ॥ **अनु० १३२ ।** ४२ ॥

तस्य भार्या ममता । पूर्वमेव उचथ्येनाहितगर्भायास्तस्या बृहस्पतिना धर्षणं । **आ० ११३ ।** ९ ॥ **शां० ३५० ।** ५० ॥ तस्यां उचथ्यवीर्याज्जातः पुत्रो दीर्घतमाः । **आ० ११३ ।** २२ ॥ [तस्यां

बृहस्पतिवीर्यजो भरद्वाजः । भा० ९ । २० ॥ विष्णु० ४ । १९ ॥ मत्स्य० ४९ ॥]

तस्यान्या भार्या सोमपुत्री भद्रा । **अनु० २५९ ।** १० ॥ तामपहृतवतो वरुणस्य प्रतिकारार्थं उचथ्येन समुद्रशोषणं । **अनु० २५९ । २३ ॥**

तस्य मान्धात्रा सह क्षात्रधर्मविषये संवादः । **शां० ९० ॥**

१ **उच्चैःश्रवाः** । क्षीरसमुद्रे अमृतमथनसमये उत्पन्नः इन्द्रस्याश्वः । **आ० १८ । ५१ ॥**

तस्य दर्शनं कद्रूविनताभ्यां । **आ० १७ । १ ॥ २१ ॥**

तद्वालस्य कद्रूपुत्रैः सर्पैः कृष्णीकरणं । **आ० २० । ६ ॥ २२ । ३ ॥**

२ **उच्चैःश्रवाः** । दाशराजः । चतुर्थ्याः सत्यवत्याः पोषकः पिता । **आ० १०७ । १०५ ॥**

३ **उच्चैःश्रवाः** । क्षत्रियः । सो० वं० अविक्षितः पुत्रः । तन्माता वाहिनी । **आ० १०१ ।** ४१ ॥ तद्भ्रातरः परीक्षित्प्रभृतयः सप्त । प्रथमे अविक्षिच्छब्दे द्रष्टव्याः ॥

**उच्छिखः** । सर्पः । **आ० ५७ । ९ ॥**

**उज्जयनः** । ऋषिः । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५८ ॥**

**उज्जयन्तः** । सुराष्ट्रेषु प्रभाससमीपस्थः पर्वतः । **व० ८६ । २१ ॥** Mount Girnar, close to Junagar in Kathiawar.

**उज्जानकः** । तीर्थं । **व० १३२ । १७ ॥** A sacred place on the river Indus immediately west of Kashmir.

१ **उञ्छवृत्तिः** । ऋषिः । तस्योपाख्यानं । **शां० ३६२–३६३ ॥**

२ **उञ्छवृत्तिः** । ब्राह्मणः । तस्य सक्तुप्रस्थ नामान्तरं । **अश्व० ९२ । ६ ॥**

**उतथ्यः** । उचथ्यशब्दं पश्यत ।

**उत्कलाः** । कलिङ्गदेशादुत्तरतो विद्यमानो देशः Orissa.

**उत्कोचकः** । तीर्थं । तत्र तपस्यतो धौम्यस्य पाण्डवैः पुरोहितत्वेन वरणं । **आ० १९९ । २ ॥**

× **उत्क्रमणं** । मरणं । तत्स्थानविशेषेण फलविशेषः । **शां० ३२२ ॥**

**उत्तङ्कः** । ( **उदङ्कः** ) । ऋषिः । बैदशिष्यः । **आ० ३ । ८३ ॥ ५० । ३१ ॥**

तस्य पौष्यभार्यायाः कुण्डले भिक्षितुं गमनं । **आ० ३ । ११६ ॥**

तेन नागानां स्तुतिः । **आ० ३ । १३४ ॥**

तेन तक्षकप्रतीकारकरणार्थं जनमेजयसमीपगमनं । **आ० ३ । १७० ॥**

**उत्तमौजाः** । क्षत्रियः । पाञ्चाल्यः । **उ० १९६ । ३ ॥ द्रो० २१ । ५० ॥ २५ । ३९ ॥ १३० ।** ३३ ॥ अश्वत्थाम्ना शिबिरे हतः । **सौ० ८ ।** ४१ ॥

**उत्तरः** । क्षत्रियः । **उत्तरकुमारः** । विराटस्य पुत्रः । **वि० ३८ । ६० ॥** रथोदारः । **उ० १७० । १ ॥** तद्भ्राता श्वेतः । **भी० ४७ ।** ४४ ॥

तस्य द्रौपदीस्वयंवरार्थं पाञ्चालनगरं प्रति गमनं । **आ० २०१ । ८ ॥**

तस्य उत्तरगोग्रहणे कुरुसैन्यदर्शनजभयात् युद्धात्पलायनं । **वि० ३९ । ३२ ॥**

तस्य वधः शल्येन । **भी० ४७ । ३५ ॥**

**उत्तरकुरवः** । मेरोरुत्तरभागस्थो देशः । **भी० ७ । २ ॥**

तद्देशस्य स्वर्गतुल्यत्वं । **अनु० २४० ॥**

+ **उत्तरगोग्रहणं** । **वि० ३७–७१ ॥** तस्यारम्भो नवम्यां । **वि० ३२ । ६४ ॥**

× **उत्तरदिग्देवता** । सैव रात्रिदेवता प्रतिश्रुतिः । तत्समीपे अष्टावक्रऋषेर्गमनं । **अनु० ५० । १० ॥ ५२ ॥**

तया कन्यारूपग्रहणेन अष्टावक्रप्रलोभनं । **अनु० ५१ । २४ ॥**

× **उत्तरदिक्** । तद्वर्णनं गरुडेन गालवं प्रति । **उ० १११ ॥**

तद्विजयोऽर्जुनेन । **स० २८ ॥**

**उत्तरा** । विराटराजस्य दुहिता अभिमन्योर्भार्या । तत्पुत्रः परीक्षित् । **आ० ६३ । ८२ ॥ वि० ११ । १८ ॥ ३८ ॥ ६७ ॥ अश्व० ६८–७० ॥**

तस्या विवाहः । **वि० ७८ । ४३ ॥**

तस्या गर्भेऽश्वत्थाम्ना ऐषीकास्त्रप्रयोगः । **सौ० १५ । ३१ ॥**

तस्याः अभिमन्युशवमालिङ्ग्य प्रलापः । **स्त्री० २० ॥**

**उत्पलिनी** । नैमिषारण्यसमीपस्था नदी । **आ० २३५ । ६ ॥**

× **उत्पातः** । अपशकुनं । तत्फलं । **स० ६९ ॥ वि० ४६ ॥ उ० ८४ ॥ भी० २–३ ॥ शां० ३२२ ॥ मौ० ४ ॥**

**उत्सवसंकेताः** । काश्मीरदेशे विद्यमानः पर्वतप्रायो देशः । तत्स्था राजानश्च । **स० २८ । १६ ॥ भी० ९ । ६१ ॥** पुष्करारण्यवासिनो राजानः । **स० ३५ । ८ ॥**

**उदङ्कः** । (**उत्तङ्कः**) । मरुधन्ववासी कश्चन महर्षिः । **व० २०४ । ११ ॥**

तेन विष्णुमुद्दिश्य तपःकरणं । **व० २०४ । १२ ॥**

तेन कुवलाश्वेन राज्ञा धुन्धुनामकदैत्यघातनं । **व० २०५ ॥**

तेन श्रीकृष्णाय शापदानोपक्रमः । **अश्व० ५३ । १९ ॥**

तदनुग्रहाय श्रीकृष्णेन स्वमाहात्म्यकथनं । **अश्व० ५४ ॥**

तस्मै श्रीकृष्णेन विश्वरूपप्रदर्शनं । **अश्व० ५५ । ४ ॥**

तं प्रति चण्डालरूपिणेन्द्रेणामृतानयनं । **अश्व० ५५ । २० ॥**

तस्य गौतमे गुरुकुलवासः । **अश्व० ५६ । ४ ॥**

तद्गुरुपत्न्या अहल्यया गुरुदक्षिणात्वेन सौदासपत्न्या विधृते कुण्डले भिक्षितुं तस्य प्रेषणं । **अश्व० ५५ । २८ ॥**

तस्य तक्षकापहृतकुण्डलानयनार्थं नागलोकगमनं । **अश्व० ५८ । ३४ ॥**

**उदपानं** । तीर्थं । **श० ३७ । ५ ॥**

**उदपारकः** । सर्पः । **आ० ५७ ॥**

**उदररोगापादकानि कर्माणि** । **अनु० २२० । १४–१९ ॥**

**उदरशाण्डिल्यः** । ब्रह्मर्षिः । **स० ७ । १३ ॥**

**उदापेक्षी** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५९ ॥**

**उद्दालकः** । ऋषिः । प्रथमस्य धौम्यमहर्षेः शिष्यः । तस्य आरुणिरिति नामान्तरं । **आ० ३ । ३१ ॥ ८ । २५ ॥**

तद्भार्या कुशिकसुता । तत्पुत्रः श्वेतकेतुः नचिकेताश्च । तत्पुत्री कहोलभार्या सुजाता । **व० १३४ । ९ ।**

तद्भार्यायाः केनचिद्वृद्धेनापुत्रेण ब्राह्मणेन तस्यां पुत्रोत्पादनार्थं याचनं । तच्छ्रुत्वा कुपितेन श्वेतकेतुना स्त्रीपुंसयोर्मर्यादाकरणं च । **आ० १२८ । १२ ॥**

तद्दौहित्रोऽष्टावक्रः । **व० १३४ । ९ ॥**

**उद्धवः** । श्रीकृष्णस्य मन्त्री । **आ० २०१ । १८ ॥ २३९ । ११ ॥**

**उद्भिदादिभेदेन प्राणिनां चातुर्विध्यं** । **अनु० २२७ । ९ ॥**

**उपकीचकाः** । कीचकस्य भ्रातरः । केकयनाम्नः सूताधिपस्य पुत्राः । तन्माता मालवी । **वि० २१ । १३ ॥**

तेषां भीमसेनेन वधः । **वि० २७ । २६ ॥**

**उपगहनः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५६ ॥**

**उपगिरिः** । उत्तरदिक्स्थः पर्वतः । तत्र राजसूयदिग्विजयार्थं अर्जुनस्य गमनं । **स० २८ । ३ ॥**

**उपचित्रः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः ।

**आ० ६८ । ९५ ॥ १३१ । ४** ॥ भीमेन हतः। **द्रो० १३६ । २०** ॥

**उपदानं** । पुण्यतीर्थभूतः कूपः । **व० ८२ । १२६** ॥

**१ उपनन्दकः** । सर्पः । **उ० १०३ । १२** ॥

**२ उपनन्दकः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ । ९६ ॥ १३१ । ५** ॥

**उपप्लाव्यं** । विराटनगरसमीपस्थं पुरं । **उ० २३ । १** ॥

**१ उपमन्युः** । धौम्यमहर्षेः शिष्यः । तस्य अर्कपर्णभक्षणेनान्धीभूतस्य कूपे पतनं । अश्विस्तुत्या तस्य चक्षुःप्राप्तिश्च । **आ० ३ । ३४** ॥

**२ उपमन्युः** । शिवभक्तः । ऋषिः । व्याघ्रपादस्य पुत्रः । तद्भ्राता धौम्यः । **अनु० ४५ । ९६** ॥

तेन शिवसहस्रनामकथनं । **अनु० ४८ । ३१** ॥

[तस्य कथा । लिङ्गपु० पूर्वार्धं० १०७ ॥ शिवपु० उमासं० १ ॥]

**उपयाजः** । ऋषिः । काश्यपगोत्रजः । तस्य भ्राता याजः । सभ्रातृकेण तेन द्रुपदस्य पुत्रकामेष्टियाजनं द्रौपदीधृष्टद्युम्नयोरुत्पत्तिश्च । **आ० १४९॥ १८१** ॥

**उपरिचरः । उपरिचरवसुः** । क्षत्रियः । [सो० वं० पूरुकुलोत्पन्नसंवरणवंशोद्भवस्य कृतिराजस्य पुत्रः । भा० ९ । २२ ॥] चेदिदेशाधिपतिः । **आ० ६४ । १ ॥ स० ८ । २०** ॥

तस्य भार्या गिरिका । **आ० ६४ । ५३** ॥

तत्पुत्राः पञ्च । बृहद्रथः कुशाम्बः प्रत्यग्रहः मत्सिल्लः यदुश्चेति । **आ० ६४ । ४२** ॥

तेन इन्द्रध्वजोत्सवकरणं । **आ० ६४ । १७** ॥

तच्छुक्रं पीतवत्या मत्स्या उदरात् मत्स्यनामा पुत्रः मत्स्यगन्धानाम्नी पुत्री च जातौ । **आ० ६४ । ७८** ॥

तस्य इन्द्रात् उपरिचरविमानप्राप्तिः । **आ० ६४ । १३** ॥

तस्य यागादिकथा । **शां० ३४४–३४९** ॥

**+ उपवासः** । अनशनव्रतं । तस्य फलं । **अनु० १६० । ३ ॥ १६४** ॥

**उपश्रुतिः** । रात्र्यभिमानिदेवता दुर्गादेवी । सैव उत्तरदिग्देवतापि । तत्पूजनमिन्द्राण्या । **उ० १३ । २७** ॥

**उपसुन्दः** । दैत्यः । सुन्दस्य भ्राता । सुन्दोपसुन्दशब्दं पश्यत ।

**+ उपाध्यायलक्षणं । अश्व० ११० । ५८** ॥

**उपानत्** । पादुका । तस्याः प्रवर्तनं सूर्येण । तद्दानफलं च । **अनु० १४९** ॥

**उपावृत्ताः** । देशः । **भी० ९ । ४८** ॥

**उपेन्द्रा** । नदी । **भी० ९ । २७** ॥

**उम्लोचा** । अप्सराः । **आ० १३२ । ४७** ॥

**उरगापुरी** । तत्र राजसूयदिग्विजयार्थं अर्जुनस्य गमनं । तद्राजस्य रोचमानस्य पराजयश्च । **स० २८ । १९** ॥ Negapatam, a seaport town in the District of Tanjore. It was once the capital of Pandya.

**उर्वरा** । अप्सराः । **अनु० ५० । ४७** ॥

**उर्वशी** । **(ऊर्वशी)** । अप्सराः । **आ० १३२ । ४८ ॥ स० १० । १२ ॥ अनु० ५० । ४८ ॥ २७१ । १५** ॥

[तस्याः मित्रनामकसूर्यस्य शापात् भूमौ पुरूरवसि वासः । रा० ७ । ५६ ॥ पद्म० ५ । २२ ॥]

तस्यां पुरूरवसः आयुःप्रभृतीनां षण्णां पुत्राणां उत्पत्तिः । **आ० ६९ । २७** ॥ [भा० ९ । १४॥]

तया अर्जुनाय षण्डत्वशापदानं । **व० ४४ । ६५**॥

तस्याः सौन्दर्यवर्णनं । **व० ४४ । २१** ॥

[तदुत्पत्तिः नारायणस्य ऊरुप्रदेशात् । देवीभा० ४ । ६ ॥]

**उर्वशीतीर्थं । व० ८२ । १५६** ॥

**१ उलूकः** । अमृतकलशरक्षकः देवः । **आ० ३२। १९** ॥

२ **उलूकः** । ऋषिः । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५१** ॥

३ **उलूकः** । क्षत्रियः । शकुनिपुत्रः । **आ० २०१। २२** ॥

तस्य दुर्योधनेन युधिष्ठिरं प्रति दूत्येन प्रेषणं । **उ० १६०** ॥

तेन युधिष्ठिरं प्रति दुर्योधनवाक्यकथनं । **उ० १६३**॥

तस्य युयुत्सुना सह युद्धं । **क० १६ । ५** ॥

तस्य वधः सहदेवेन । **श० २७ । ३१** ॥

+ ४ **उलूकः** । घूकनामा पक्षिविशेषः । तत्कृतस्य बहुकाकवधस्य अश्वत्थाम्ना दर्शनं । **सौ० १** ॥

+ **उलूकदूतागमनपर्व** । उ० १६०–१६४ ॥

**उलूकाः** । देशः । तस्य राजा बृहन्तः । **स० २८ । ५** ॥

**उलूताः** । देशः । **भी० ९ । ५४** ॥

**उलूपी** । नागकन्या । अर्जुनभार्या । तत्पिता कौरव्यनामा सर्पराजः । **आ० २३४ । १८** ॥

तस्यां अर्जुनात् इरावन्नामकपुत्रोत्पत्तिः । **आ० ६३ । ८०** ॥ **२३९ । ३४** ॥

तया बभ्रुवाहनेन हतस्य अर्जुनस्य संजीवनमणिना उज्जीवनं । **अश्व० ८१** ॥

तस्याः पाण्डवकृताश्वमेधार्थं हास्तिनपुरगमनं । **अश्व० ८९** ॥

तया पाण्डवानां महाप्रस्थानगमनसमये गङ्गायां निमज्य स्वलोकगमनं । **महा० १ । २८** ॥

**उशङ्गुः** । ( **रुशङ्गुः** ) । ऋषिः । यः आत्मानं प्रवयसं ज्ञात्वा पृथूदकतीर्थे देहं त्यक्त्वा वैष्णवं पदमाप । **श० ४० । २७** ॥

तस्याश्रमे आर्ष्टिषेणविश्वामित्रसिन्धुद्वीपदेवापिभिस्तपस्तप्त्वा ब्राह्मण्यप्राप्तिः। तत्र बलरामस्य तीर्थयात्रार्थं गमनं। **श० ४० । २४** ॥

१ **उशीनरः** । क्षत्रियः । वृष्णिवंश्यः । **आ० २०१ । २०** ॥

२ **उशीनरः** । क्षत्रियः । सो० वं० अनुकुलोत्पन्नः । भोजदेशाधिपतिः । तस्य ययातिपुत्र्यां माधव्यां जातः पुत्रः शिबिः । **स० ८ । १४** ॥ **व० १३२ । २१** ॥ **उ० ११८** ॥

[ अयं सो० वं० अनोर्वंशोत्पन्नस्य सृंजयपुत्रस्य महामनसः पुत्रः । भा० ९ । २३ ॥

**उशीरबीजं** । हिमवत्पार्श्वस्थं क्षेत्रं । तत्र मरुत्तेन यज्ञकरणं । तत्रैव जीमूतस्य विप्रर्षेः स्थानं जाम्बूनदसरश्च । **उ० १११ । २३** ॥

**उषा** । ( **ऊषा** ) । बाणासुरपुत्री । तया प्रच्छन्नं रममाणस्यानिरुद्धस्य बाणासुरेण कारागृहे निरोधः। श्रीकृष्णेन बाणं जित्वा उषानिरुद्धयोर्द्वारकानयनं । **स० ६० । ८** ॥ [ भा० १० । ६२ ॥ हरि० २ । ११८ ॥ विष्णु० ५ । ३२ ॥ ]

+**उष्ट्रकथा** । अलसताया अनर्थहेतुत्वख्यापनार्थं भीष्मेण युधिष्ठिरं प्रति कथिता । **शां० ११२** ॥

**उष्णतोयवहा** । बदरीस्था नदी । **व० ८८। २५** ॥

**उष्मा** । अग्निविशेषः । **व० २२३ । ४** ॥

## ऊ.

**ऊर्जयोनिः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५९** ॥

**ऊर्णनाभः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९६** ॥ **१३१ । ५** ॥

**ऊर्णायुः** । देवगन्धर्वः । तद्भार्या मेनका । **उ० ११७ । १६** ॥

**ऊर्ध्वभाक्** । अग्निविशेषः । तस्य बडवाग्निरिति नामान्तरं । **व० २२१ । २८** ॥

**ऊर्वशी** । उर्वशीशब्दं पश्यत ।

**ऊषा** । उषाशब्दं पश्यत ।

**ऊष्मा** । उष्मशब्दं पश्यत ।

## ऋ.

१ **ऋक्षः** । क्षत्रियः । सो० वं० ऋचस्य पुत्रः ।

तद्भार्या तक्षकदुहिता ज्वलन्ती । तत्पुत्रोन्त्यनारः । **आ० ६३ । २५ ॥**

२ **ऋक्षः ।** क्षत्रियः । सो० वं० अजमीढस्य पुत्रः । तन्माता धूमिनी । तद्भार्या रथन्तरी । तत्पुत्रः संवरणः । **आ० १०१ । २२ ॥**

+ ३ **ऋक्षः ।** भल्लूकः । तज्जातेर्मृगमन्दायास्सकाशादुत्पत्तिः । **आ० ६७ । ६२ ॥**

**ऋक्षदेवः ।** क्षत्रियः । सो० वं० द्रुपदपुत्रस्य शिखण्डिनः पुत्रः । **द्रो० २३ । २५ ॥**

**ऋक्षवान् ।** कुलपर्वतः । **भी० ९ । ११ ॥**
The eastern part of Vindhya Range.

**ऋक्षा ।** अजमीढस्य भार्या । तत्पुत्रः संवरणः । **आ० ६३ । ४० ॥**

**ऋचः ।** क्षत्रियः । सो० वं० पूरुवंशीयस्य देवातिथेः पुत्रः । तन्माता वैदर्भी मर्यादानाम । तद्भार्या अङ्गराजकन्या वामदेवी । तत्पुत्रः ऋक्षः । **आ० ६३ । २४ ॥**

१ **ऋचीकः ।** ऋषिः । और्वस्य पुत्रः । **आ० ६७ ।** ४७ ॥ सः भृगोः पुत्रः । **व० ११६ । २० ॥ शां० ४८ । ७ ॥**

तस्य अश्वतीर्थे एकतःश्यामकर्णानां हयानां सहस्रस्य प्राप्तिः । तेषां हयानां गाधये शुल्कदानेन तत्कन्यायाः सत्यवत्याः परिणयश्च । **व० ११६ ॥ अनु० ७ ॥**

तस्य सत्यवत्यां जमदग्नेरुत्पत्तिः । **व० ११६ । ४४ ॥ अनु० ७ । ४६ ॥** [भा० ९ । १५॥ वायु० ९१ ॥ ब्रह्म० १० ॥]

तस्यान्यः पुत्रः शुनःशेपः । अनु० **३ । ६ ॥** [रा० १ । ६१ ॥]

२ **ऋचीकः ।** विवस्वतः पुत्रः । आ० **१ । ५५ ॥**

३ **ऋचीकः ।** क्षत्रियः । सो० वं० दुष्यन्तपौत्रस्य भुमन्योः पुत्रः । तन्माता पुष्करिणी । **आ० २०१ । १३ ॥**

**ऋचेयुः ।** क्षत्रियः । सो० वं० रौद्राश्वस्य अप्सरसि जातः पुत्रः । तद्भ्रातरः कक्षेयुप्रभृतयो नव । अस्य अनाधृष्टिरिति नामान्तरमिति भाति । तत्पुत्रो मतिनारः । **आ० ८८ । ९ ॥**

+ **ऋणत्रयं ।** क्रियाऋणं ब्रह्मचर्यऋणं प्रजाऋणं चेति । **आ० २५५ । ११ ॥** अस्यैव देवऋणं ऋषिऋणं पितृऋणं इत्यपि नामान्तरं ।

**ऋतधामा ।** श्रीमान्नारायणः । तन्नामनिर्वचनं । **शां० ३५२ । ४ ॥**

**ऋतुपर्णः ।** क्षत्रियः । सू० वं० अयोध्याधिपतिः । तस्मिन्नलराजेन बाहुकनामस्वीकारेण सारथीभूय वासः । **व० ६३ ॥**

[ सः सिन्धुद्वीपस्य पौत्रः । तत्पौत्रः सुदासः । हरि० १ । १५ ॥ भा० ९ । ९ ॥]

तस्मिन्नलसारथिना वार्ष्णेयेन सारथीभवनं । **व० ५७ । २६ ॥**

तस्य सारथिः जीवलः । **व० ६४ । ८ ॥**

तस्य नलराजादश्वहृदयप्राप्तिः । **व० ७५ । १७ ॥**

तेन नलराजाय अक्षहृदयोपदेशः । **व० ७० । २९ ॥**

**ऋतुस्थला ।** अप्सराः । **आ० १३२ । ४७ ॥**

+ **ऋत्विग्लक्षणं । शां० ७९ ॥**

**ऋद्धिः ।** कुबेरस्य भार्या । **स० १० । ६ ॥**

**ऋश्यमूकः ।** पर्वतः । तस्मिन्वालिनः सकाशाद्भीतेन सुग्रीवेण हनुमदादिभिस्सह वासः । **व० २८० ।** ४४ ॥ A mountain situated eight miles from Anagundi on the bank of the river Tungabhadra.

**ऋश्यशृङ्गः ।** ब्रह्मर्षिः । उपस्पर्शनार्थं ह्रदं गतस्य विभाण्डकऋषेः उर्वशीदर्शनक्षुभितं रेतः जले पपात । तच्च काचन मृग्यपिबत् तस्माज्जातः । **व० १११ । ६ ॥**

तन्नामनिर्वचनं । **व० १११ । १७ ॥**

तस्य अङ्गदेशगमनेन तत्रत्यानावृष्टिनिवृत्तिः । **व० ११४ । १० ॥** [रा० १ । १० ॥]

तस्य रोमपादपुत्र्या शान्तया विवाहः । **व० ११४ । ११ ॥**

**ऋश्यशृङ्गाश्रमः** । कौशिकीतीरस्थः क्षेत्रविशेषः । तत्र लोमशेन सह युधिष्ठिरस्य गमनं । **व० १११ । १** ॥ The hermitage of the Rishi near th river Kusi situated at Singheswar in the District of Bhagalpur.

१ **ऋषभः । (वृषभः)** । पाण्ड्यदेशस्थः पर्वतः । तत्र युधिष्ठिरस्य तीर्थयात्रार्थं गमनं । **व० ८३ । २१** ॥ Alagiri Hills in the District of Madura.

२ **ऋषभः । (वृषभः । ऋषभकूटः)** । मगधदेशस्थः पर्वतः । **स० २१ । २** ॥

३ **ऋषभः** । उत्तरसागरान्तिके विद्यमानः पर्वतः । तत्र शाण्डिलीनाम्न्या ब्राह्मण्या तपश्चरणं । **११३ । १** ॥

४ **ऋषभः** । ऋषभकूटपर्वतवासी विप्रर्षिः । **व० ११० । ९** ॥

५ **ऋषभः** । ब्राह्मणः । तस्य तनुनामकेन ब्राह्मणेन संवादः । **शां० १२७** ॥ अयं चतुर्थोऽन्यो वेति न ज्ञायते । तस्य युधिष्ठिरसभागमनं । **स० ११ । २४** ॥

६ **ऋषभः** । कोसलदेशीयं तीर्थं । **व० ८३ । १०** ॥

७ **ऋषभः** । सर्पः । **आ० ५७ । १७** ॥

**ऋषयः** । तापसाः । तेष्वनेकेषां नामानि युधिष्ठिरसभायां । **स० ४** ॥ इन्द्रसभायां । **स० ७** ॥ ब्रह्मसभायां **११ । १८** ॥ युधिष्ठिरेण सह वने । **व० ८३ । ११९** ॥ सन्ध्यर्थं हास्तिनपुरं गच्छतः श्रीकृष्णस्य मार्गमध्ये । **उ० ८३** ॥ द्रोणाचार्यं युद्धान्निवर्तयितुमागताः । **द्रो० १९१ । ३१** ॥ भीष्माचार्यस्य शरीरत्यागसमये । **शां० ४६** ॥ **२०७ । २८** ॥ प्रातःकाले स्मर्तव्याः । **अनु० २७१ । ३७** ॥ **२५५ । ३०** ॥

तेषां धर्माः । **अनु० २०९—२१०** ॥

**ऋषिकाः** । उत्तरस्यां दिशि काम्भोजसमीपे विद्यमानो देशः । **स० २८ । २५** ॥ **भी० ९ । ६४** ॥ The Russian Empire.

**ऋषिकुल्या** । कलिङ्गदेशस्था नदी । **व० ८२ । ४८** ॥ **भी० ९ । ३६** ॥ This is a river on which Ganjam is situated. It rises in the Mahendra Hills.

**ऋषिगिरिः** । मगधदेशस्थः पर्वतः । **स० २१।२** ॥

## ए.

**एकचक्रः** । दनुपुत्रः । **आ० ६६ । २५** ॥

**एकचक्रा** । बकासुराध्युषिता नगरी । **आ० ६१ । २७** ॥ **६३ । ७३** ॥

तत्र पाण्डवानां वासः । **१७१–१७८** ॥

तन्नगर्याः पाञ्चालनगरं अहोरात्रगमनसाध्यं । **आ० १८६ । २** ॥

**एकतः** । गौतमस्य पुत्रः । ऋषिः । तद्भ्रातरौ द्वितः त्रितश्च । **स० ७ । ११** ॥ **शा० ३७ । ७** ॥

+ **एकतःश्यामकर्णा हयाः** । ऋचीकेन कन्याशुल्कार्थं गाधिराजाय दत्ताः । **व० ११६ । २२** ॥ **अनु० ७ । १२** ॥

तदानयनार्थं गालवस्य विश्वामित्रेणाज्ञापनं । **उ० १०६ । २७** ॥

**एकपर्वतः** । इन्द्रप्रस्थान्मागधपुरगमनमार्गे विद्यमानः पर्वतः । **स० २० । २७** ॥

+ **एकपुत्रत्वनिन्दा** । **व० १२८ । १२** ॥

**एकरात्रं** । तीर्थं । **व० ८१ । १८२** ॥

**एकलव्यः** । हिरण्यधनुषः पुत्रो निषादः । **आ० १४२ । ४०** ॥ **स० ४४ । ६९** ॥

तस्य धनुर्विद्याभ्यासः । **आ० १४२ । ४३** ॥

तेन द्रोणाचार्याय गुरुदक्षिणात्वेन स्वदक्षिणहस्ताङ्गुष्ठस्य छित्त्वा दानं । **आ० १४२ । ६७** ॥

तत्पुत्रः केतुमान् । भीमेन हतः । **भी० ५४ । ५** ॥

तद्वधः श्रीकृष्णेन । **द्रो० १८२ । २१** ॥

**एकशयः** । सर्पः । तक्षकपुत्रोश्वसेनः । **क० ९७ । १९** ॥

**एकहंसः** । तीर्थं । **व० ८१ । २०** ॥

**एकाक्षः**। दानवः। **आ० ६६**। २९॥

+ **एकादशदिवसयुद्धारम्भः**। **द्रो० १२**॥ तत्समाप्तिः। **द्रो० १६**॥

+ **एकादशरुद्राः**। मृगव्याधः सर्पः निर्ऋतिः अजैकपात् अहिर्बुध्न्यः पिनाकी दहनः ईश्वरः कपाली स्थाणुः भगः इति। **आ० ६७**। १॥ **१३२**। **५१**॥ अजैकपात् अहिर्बुध्न्यः विरूपाक्षः रैवतः हरः बहुरूपः त्र्यम्बकः सुरेश्वरः सावित्रः जयन्तः पिनाकी इति। **शा० २०७**। **२१**॥ अजैकपात् अहिर्बुध्न्यः पिनाकी ऋतः पितृरूपः त्र्यंबकः महेश्वरः वृषाकपिः शम्भुः हवनः ईश्वरः। **अनु० २५५**। १२॥ [भा० ६। ६॥ हरि० १। ३॥ विष्णु० १। १५॥]

**एकानङ्गा**। यशोदायाः पुत्री। श्रीकृष्णभगिनी। **स० ५९**। ९॥

**एकानेका**। अङ्गिरसः पुत्री। अस्याः कुहूः इतिनामान्तरं। **व० २२१**। ६॥

+ **एकान्तिधर्माः**। **शां० ३५८**॥

**एकोनपञ्चाशन्मरुतः**। मरुत इत्यत्र पश्यत।

**एरकः**। सर्पः। **आ० ५७**। १३॥

**एलपत्रः**। सर्पः। **उ० १०३**। १०॥

**एलापत्रः**। सर्पः। **आ० ३८**। ३९॥

## ऐ.

**ऐक्ष्वाकी**। सो० वं० भुमन्युपुत्रस्य सुहोत्रस्य पत्नी। तत्पुत्रा अजमीढादयः। **आ० १०१**। १८॥

**ऐन्द्रिः**। अर्जुनः। **आ० १४५**। ८॥

**ऐरावतं**। इलावृतसमीपस्थं वर्षं। **भी० ६**। ३७॥ ८। १०॥

१ **ऐरावतः**। सर्पः। **आ० ३५**। ५॥ **स० ९**। ९॥ **उ० १०३**। ११॥

२ **ऐरावतः**। देवगजः। भद्रमनसः पुत्रः। **आ० १८**। **५२**॥ ६७। ६३॥



**ऐलः**। इलायाः पुत्रः पुरूरवाः। **आ० ६९**। २१॥ **स० ८**। १६॥

तस्य कश्यपेन संवादः। **शां० ७३**। ४५॥

**ऐलबिलः**। कुबेरः।

## ओ.

**ओघरथः**। क्षत्रियः। सू० वं० ओघवतः पुत्रः। तत्पुत्रो नृगः। **अनु० २**। ५४॥

१ **ओघवती**। ओघवतो दुहिता। सू० वं० सुदर्शनस्य भार्या। **अनु० २**। ५४॥

तस्याः स्वार्धशरीरेण नदीभूय प्रवहनं। **अनु० २**। १००॥

२ **ओघवती**। नदी। **भी० ९**। २२॥ **शा० ३९**। २७॥ ६३। ४७॥

**ओघवान्**। क्षत्रियः। सू० वं० प्रतीकस्य पुत्रः। तत्पुत्र ओघरथः। तत्पुत्री ओघवती। **अनु० २**। ५४। [भा० ९। २॥]

**ओड्राः**। देशः। **भी० ९**। ५७॥

## औ.

**औदुम्बराः**। देशः। **स० ७८**। ८९॥ Cutch, its ancient capital was Koteswara or Kachchheswara.

**औद्दालकं**। तीर्थं। **व० ८२**। १६०॥

**औद्भिदं**। क्रौञ्चद्वीपस्थं वर्षं। **भी० १२**। १२॥

**और्वः**। च्यवनपुत्रः। तन्माता मनुकन्या आरुषी। **आ० ६७**। ४६॥ **१९४**। २१॥ तस्य लोकविनाशार्थं यत्नः। **आ० १९५**। ९॥ तेन समुद्रे क्रोधत्यागः। **आ० १९६**॥

**औशनसं**। तीर्थं। **व० ८१**। १३५॥ अस्य कपालमोचनमिति नामान्तरं। **श० ४०**। ४॥

**औशनसव्यूहः**। रावणस्य। **व० २८६**। ६॥

**औशिजः**। ऋषिः। कक्षीवान्नाम उशिक्सुतः। **स० ४**। २३॥ **अनु० २७१**। ३७॥

**औशीनरिः**। उशीनरपुत्रः शिबिः। **स० ८**। १४॥ **शा० २८**। ३९॥

**औषदश्विः** । वसुमान् । **आ० ८७ । १** ॥

## क.

**कंसः** । उग्रसेनस्य पुत्रः । तत्पत्न्यौ अस्तिः प्राप्तिश्च जरासन्धसुते । **स० १४ । ३१ ॥ २३ । ४** ॥

[ सः द्रुमिलनामकेन दानवेन उग्रसेनभार्यायां जातः पुत्रः । ह० २ । २८ ॥ ]

तस्य कालनेम्यंशत्वं । **आ० ६८ । ६७** ॥

तेन देवकीहननोद्योगः । **स० २३ । १३** ॥ तस्य वधः श्रीकृष्णेन । **स० ५३ । ३२** ॥ [ हरि० २ । ३० ॥ भा० १० । ४४ विष्णु० ५ । २० ॥ ]

**ककुत्स्थः** । क्षत्रियः । सू० वं० शशादस्य पुत्रः । इक्ष्वाकोः पौत्रः । तत्पुत्रोऽनेनाः । **व० २०५ । २** ॥

**१ कक्षसेनः** । क्षत्रियः । युधिष्ठिरसभायां । **स० ४ । २८** ॥

**२ कक्षसेनः** । प्राक्कालीनः क्षत्रियः । यमसभायां । **स० ८ । १८** ॥

३ **कक्षसेनः** । राजर्षिः । **अनु० २०० । १५** ॥

**कक्षाः** । देशः । **भी० ९ । ४९** ॥

**कक्षीवान्** । उशिक्सुतः औशिजः । ऋषिः । **स० ७ । १८** ॥

१ **कङ्कः** । क्षत्रियः । सो० वं० वृष्णिवंश्यः । **आ० २०१ । १९** ॥

२ **कङ्कः** । अज्ञातवासे यतिवेषधारिणो युधिष्ठिरस्य नाम । **वि० २ । २३** ॥

**कचः** । बृहस्पतिपुत्रः । तस्य शुक्राचार्ये गुरुकुलवासः । **आ० ७० । १७ ॥ अनु० ६५ । ८** ॥

तस्य देवयान्याश्च परस्परशापदानं । **आ० ७१ । १६** ॥ [तदुपाख्यानं । मत्स्य० २५ ॥]

+ **कच्चिदध्यायः** । **स० ५ । २०** ॥

**कच्छाः** । देशः । **भी० ९ । ५६** ॥ Kheda in Guzerat, a large town between Ahmedabad and Khambay.

**कटदेशः** । देशः । यस्य राजा सुनाभः । अर्जुनेन राजसूयदिग्विजये पराजितः । **स० २७ । १२** ॥ Katwa, in the District of Burdwan.

**कठः** । ऋषिः । **आ० ८ । २५ ॥ स० ४ । २४** ॥

+ **कठवल्ल्यर्थप्रतिवादनं** । **शां० २५२ ॥ अनु० १०६** ॥

**कणिकः** । धृतराष्ट्रमन्त्री ब्राह्मणः । **आ० १५३ । ८** ॥ अस्य कुलिङ्ग इति नामान्तरं । **आ० ६१ । १०** ॥

तेन जम्बुकोपाख्यानकथनं । **आ० १५३ । ३५** ॥

**कण्टकावनं** । महारौरवादप्यतिशयितो नरकः । **अनु० २३० । १०** ॥

: । कालिङ्गी । अक्रोधनस्य भार्या । तत्पुत्रो देवतिथिः । **आ० ६३ । २२** ॥

**कण्वः** । कश्यपगोत्रोत्पन्न ऋषिः । तत्कथा । **आ० ९१—९६** ॥

तत्पिता मेधातिथिः । **अनु० २५५ । ३१** ॥

तस्य पोषितदुहिता शकुन्तला । **आ० ९३ । २३** ॥

तस्य शकुन्तलया सह दुष्यन्तविवाहे संवादः । **आ० ९४ । ५०** ॥

तेन दुर्योधनं प्रति "तव ऊरावेव मृतिर्भविष्यति" इति शापदानं । **उ० १०५ । ४३** ॥

तेन दुर्योधनं प्रति मातलिवरान्वेषणकथाकथनं । **उ० ९७-१०५** ॥

**कण्वाश्रमः** । **व० ८० । ४६** ॥ Bijnour in Lucknow west of Ajodhya. This was formerly a jungle.

**कदलीवनं** । कदलीषण्डः । हनूमदावासभूतं वनं । **व० १४८ । ६३ ॥ १५२ । ४** ॥

१ **कद्रूः** । दक्षप्रजापतिपुत्री । कश्यपभार्या । सर्पाणां माता । **आ० १६ । ६ ॥ २०—२१ ॥ २५—२७ ॥ ६६ । १३ ॥ स० ११ । ४१ ॥ अनु० २०—२५** ॥

तस्याः सर्पाणामुत्पत्तिः । **आ० १६ । १३** ॥

+ **कपोतश्येनचरित्रं । व० १३३ ।** २०० ॥

**कबन्धः** । राक्षसः । रामेण हतः । **स० ५० ।** १४ ॥ **व० २८० ।** २८ ॥ [रा० ३ । ७० –७१ ॥]

तस्य प्राग्विश्वावसुनामकस्य गन्धर्वस्य ब्राह्मणशापेन राक्षसजन्मप्राप्तिः । **व० २८० ।** ४२ ॥

**कमठः ।** क्षत्रियः । **स० ४ ।** २८ ॥

**कमलपालिका ।** भीमसेनभार्या हिडिम्बा राक्षसी । **आ० १६९ ।** २१ ॥

**कमलाक्षः ।** तारकासुरपुत्रः । रुद्रेण हतः । **क० २४ ।** ७ ॥

**कम्पनः ।** क्षत्रियः । युधिष्ठिरसभायां । **स० ४ ।** २८ ॥

**कम्पना ।** नदी । **व० ८२ ।** ११६ ॥ **भी० ९ ।** २५ ॥

**कम्बलः ।** सर्पः । **आ० ३५ ।** १० ॥ **स० ९ ।** १० ॥ **उ० १०३ ।** ९ ॥

**कम्बलं ।** कुशद्वीपस्थं वर्षं । **भी० १२ ।** १३ ॥

+ **करः ।** भागधेयः । बलिः । राजभिः प्रजाभ्यस्तद्ग्रहणप्रकारः । **शां० ८८ ॥**

**करकाः ।** देशः । **भी० ९ ।** ६० ॥

**करकाक्षः ।** दुर्योधनपक्षीयः क्षत्रियः । **द्रो० २० ।** ७ ॥

**करकायुः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० २०१ ।** २ ॥

**करञ्जनिलया ।** स्कन्दग्रहः । **व० २३० ।** ३५ ॥

**करटाः ।** देशः । **भी० ९ ।** ६३ ॥

**करतोया ।** नदी । **स० ९ ।** २६ ॥ **व० ८३ ।** ३ ॥ **भी० ९ ।** ३५ ॥ A sacred river which flows through the Districts of Rungpur and Dinajpur. It formed the boundary between the kingdoms of Bengal and Kamarupa.

**करन्धमः ।** क्षत्रियः । सू० वं० । **स० ८ ।** १६ ॥ तत्पिता खनीनेत्रः । अस्य पितृकृतं नाम सुवर्चा इति । तत्पुत्र आविक्षत् । **अश्व० ४ ।** ८–२३ ॥ [तस्य वंशः । भा० ९ । २ ॥ ययातिपुत्रतुर्वसुवंशोत्पन्नोऽन्यः । भा० ९ । २३ ॥]

**करभञ्जकाः ।** देशः । **भी० ९ ।** ६९ ॥

**करवीरः ।** सर्पः । **आ० ३५ ।** १२ ॥

**करहाटकः ।** देशः । **स० ३२ ।** ७२ ॥

**करालजनकः ।** जनकवंशीयो राजा । तस्य वसिष्ठेन सह क्षराक्षरलक्षणविषये संवादः । **शा० ३८–३१३ ॥**

**करीतयः ।** देशः । **भी० ९ ।** ४४ ॥

**करीषकाः ।** (**करूशाः**) । देशः । **भी० ९ ।** ४० ॥ तस्य राजा दन्तवक्रः । **स० १४ ।** १२ ॥ The eastern portion of the District of Shahabad, in the Province of Behar.

**कर्कर्रः ।** सर्पः । **आ० ३५ ।** १६ ॥

**कर्कोटकः ।** (**कार्कोटकः**) । सर्पः । **स० ९ ।** १० ॥ **उ० १०३ ।** ९ ॥

तस्याग्नेः सकाशान्नलराजेन संरक्षणं । तेन नलदंशनं च । **व० ६३ ।** ४ ॥

१ **कर्णः ।** सूर्यात्कुन्त्यां जातः कानीनः पुत्रः । आधिरथिः । राधेयः । वसुषेणः । अर्धरथः । **उ० १६८ ।** ७ ॥ तस्योत्पत्तिः । **आ० ६४ ।** १४० ॥ ६८ । १३७ ॥ **११० ।** २८ ॥ तस्य कुन्त्या अश्वनद्यां विसर्जनं । **व० ३०९ ।** ८ ॥

तं प्रति भीष्माचार्येण तस्य कुन्तीसुतत्वकथनं । **भी० १२२ ।** ९ ॥

तं प्रति श्रीकृष्णेन तस्य कुन्तीसुतत्वकथनं । **उ० १४० ॥**

तं प्रति कुन्त्या तस्य स्वपुत्रत्वकथनं । **उ० १४५ ॥**

तस्य स्वपुत्रत्वकथनं युधिष्ठिरं प्रति कुन्त्या । **स्त्री० २७ ।** ७ ॥

तस्य स्वपुत्रत्वकथनं कुन्त्या वेदव्यासं प्रति । **आश्र० ३२ ॥**

तस्य चरित्रम् । **आ० १२० ॥ शा० २–५ ॥**
तस्य सूर्यांशत्वं । **आ० ६८ । १५० ॥**
तस्य दुर्योधनेनाङ्गराज्येऽभिषेकः । **आ० १४६ ।** ३८ ॥
तस्य सूतकन्यानां विवाहः । **उ० १४१ । १० ॥**
तस्य शास्त्रज्ञता । **उ० १४० ।** ६–७ ॥
तस्य दुर्योधनेन सैनापत्येऽभिषेकः । **क० ७ ॥**
तेन द्रुपदपुत्रस्य प्रियदर्शनस्य वधः । **आ० २१८।** ३० ॥
तस्य घोषयात्रायां चित्रसेननाम्ना गन्धर्वेण युद्धं तत्र पराभवश्च । **व० २४२ ॥**
तेनेन्द्राय स्वीयसहजकवचकुण्डलदानं । **आ० ६८।** १४४ । **व० ३११ ॥**
तस्य वदान्यता । **व० ३११ ।** ३१ ॥
तस्य स्वप्ने सूर्यागमनं । **व० ३०१ ॥**
तस्य दिग्विजयः । **व० २५४–२५५ ॥**
तद्गर्हणं कृपाचार्येण । **आ० १४६ ।** ३१ ॥ **वि० ४९ ।** १४ ॥
तद्गर्हणं शल्येन । **क० ३१ ।** ३३ ॥ **३३ ॥**
तद्गर्हणं भीमसेनेन । **आ० १४७ ।** ५ ॥
तस्य वचनं अज्ञातवासे पाण्डवा अन्विष्य हन्तव्या एवेति । **वि० ३० ।** १० ॥
तेनात्मश्लाघनपूर्वकमर्जुनपराभवनप्रतिज्ञानं । **वि० ४८ ॥**
तस्य पराजयोऽर्जुनेन । **आ० २०५ । वि० ५७॥**
तस्य पराजयो भीमसेनेन । **द्रो० १२९ ॥ १३१॥**
तेन कुन्तीगर्हणं स्वस्य बाल्ये निर्दयं तृणवन्नद्यां विसर्जनविषये । **उ० १४६ ॥**
तेन सहदेवोपालम्भः । **द्रो० १६८ ॥**
तेन नकुलपराभवः । **क० १५ ॥**
तेन शल्यस्य गर्हणं । **क० ३७ ॥**
तस्यार्जुनेन सह युद्धं । **आ० १४६ ।** २२ ॥ **क० ९४ ॥**
तस्य घटोत्कचेन सह युद्धं । **द्रो० १७४ ॥**
तस्य जरासन्धेन सह युद्धं **शां० ५ ॥**
तत्सारथ्याभ्युपगमः शल्येन । **क० २३ ॥**
तस्य युद्धाय प्रोत्साहनं शल्येन । **क० ८३ ॥**
तेन इन्द्रदत्तया शक्त्या घटोत्कचवधः । **द्रो० १८०॥**
तेन भीष्माचार्यक्षमापणायाभिवादनं । **भी० १२२॥**
तस्य परशुरामे शस्त्राभ्यासः । **क० ३६ ।** ४५ ॥ **शां० २ ॥ स्त्री० २ ॥**
तस्य परशुरामेण तवास्त्राणि समये न प्रतिभान्त्विति शापदानं । **क० ३६ ॥ शां० ३ ॥**
तेन ब्राह्मणगोवत्सहननं ब्राह्मणेन युद्धे तव रथचक्रं भूमौ निमज्जतामिति तस्मै शापदानं च । **क० ३६ ॥ शां० २ ॥**
तस्य ब्राह्मणत्वे परशुरामस्य शङ्का । **शां० ३ ॥**
तस्य अलर्कनाम्ना केनचित्क्रिमिणा ऊरुभेदनं । **शां० ३ ।** ६ ॥
तस्यास्त्रविद्यापरीक्षार्थं रङ्गप्रवेशः । **आ० १४६ ।** १॥
तं प्रति श्रीकृष्णेन पाण्डवपक्षप्रवेशचोदना । **उ० १४० ॥**
तस्य युध्यतः भूमौ रथचक्रनिमज्जनं । **क० ९७ ॥**
तेन नागास्त्रप्रयोगेणार्जुनकिरीटापहारः । **क० ९७॥**
तेन स्वरथचक्रोद्धरणोद्योगः । **क० ९८ ॥**
तन्मर्मोद्घाटनं श्रीकृष्णेन । **क० ९८ ॥**
तेन कृपाचार्यस्य जिह्वाच्छेदप्रतिज्ञाने तद्वधोद्यमोऽश्वत्थाम्ना । **द्रो० १६० ॥**
तस्य वधकथा संक्षेपेण । **क० १ ॥** विस्तरेण । **क० ९८ ॥** तच्छववर्णनं । **स्त्री० २१ ॥**
तस्य युधिष्ठिरेणौर्ध्वदैहिककरणं । **शां० ४१ ।** ३ ॥
सः हत इति भ्रान्त्या युधिष्ठिरेणार्जुनप्रशंसनं । **क० ६९ ॥**
तत्पुत्रेषु सुदामा अर्जुनेन हतः । **आ० २१८ ।** ३२ ॥
सुषेणः भीमसेनेन हतः । **क० ७९ ।** १४ ॥
सत्यसेनः चित्रसेनः सुशर्मा चेति त्रयः नकुलेन हताः । **श० ९ ॥** वृषसेनः । अर्जुनेन हतः । **क०९०॥**

तद्भ्रातृषु शत्रुंतपः अर्जुनेनोत्तरगोग्रहणे हतः । **वि० ५८ । १७ ॥**

शत्रुञ्जयः विपाटश्चेति द्वावर्जुनेन हतौ। **द्रो० ३२ । ६१ ॥**

कश्चिदेकोऽभिमन्युना हतः । **द्रो० ४१ । ४ ॥**

द्रुमः भीमेन हतः । **द्रो० १५६ । २७** ॥ वृकरथः भीमेन हतः। **द्रो० १५८ । २१** ॥ त्रयोऽर्जुनेन हताः । **द्रो० ३२ । ६३ ॥**

२ **कर्णः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९५ ॥ १३१ । ३ ॥ भी० ७७ । ८॥**

**कर्णाटकाः ।** देशः । **स० ७८ । ९८ ॥ भी० ९ । ५९ ॥**

The Province of Mysore and the District of South Canara in the Madras Presidency, and the Districts of North Kanara, Belgaum, and Dharwar in the Bombay Presidency.

**कर्णिका ।** अप्सराः । **आ० १३२ । ४६ ॥**

१ **कर्दमः ।** ब्रह्मर्षिः । **स० ११ । १९ ॥ शां० ५८ ॥ ९८ ॥**

[तस्य भार्या स्वायंभुवमनुपुत्री देवहूतिः । तस्य पुत्रः कपिलः । तस्य पुत्र्यः अरुन्धत्यादयो नव । विशेषमरुन्धतीशब्दे पश्यत । भा० ३ । २२ ॥ २४ ॥]

२ **कर्दमः ।** सर्पः । **आ० ३५ । १६ ॥**

+ **कर्म ।** शुभाशुभरूपं । तस्य बलवत्त्वं । **उ० २९। ६ ॥** तस्य हेतुत्वं । **अनु० १ । ७२ ॥** तस्य सात्विकादिभेदेन त्रैविध्यं । **भी० ४२ ॥**

**कर्वटः ।** वङ्गदेशसमीपस्थो देशः । यस्य राजा ताम्रलिप्तः । **स० ३१ । २५ ॥**

**कलशः ।** सर्पः । **उ० १०३ । ११ ॥**

**कलशपोतकः ।** सर्पः । **आ० ३५ । ७ ॥**

**कलशतीर्थं । व० ८१ । ८० ॥**

१ **कलिः ।** चतुर्थं युगं । तदभिमान्यसुरश्च । तद्धर्माः । **शां० ६९ । १९—२४ ॥** तद्वृत्तान्तकथनं । **व० १५१ । ३४ ॥ १९१ । २५ ॥** [विष्णु० ६ । १ ॥ भा० १२ । २—३ । मत्स्य० १४४ ॥]

तस्य तिष्य इति नामान्तरं । **भी० १० । ३ ॥**

तस्य दमयन्तीस्वयंवरार्थमागमनं । **व० ५५ । १ ॥**

तस्य नलराजशरीरे प्रवेशः । **व० ५६ । ३ ॥**

तस्य नलदेहान्निष्क्रम्य बिभीतकद्रुमप्रवेशः । **व० ७० । ३८ ॥**

तत्र भविष्यल्लोकवृत्तान्तकथनं । **व० १९३ ॥**

[तन्निग्रहः परीक्षिता । **भा० १ । १७ ॥**]

२ **कलिः ।** मुनिपुत्रो देवगन्धर्वः । **आ० ६६।४४॥**

१ **कलिङ्गः ।** क्षत्रियः । सो० वं० ययातिपुत्रस्यानोर्वंशोत्पन्नस्य बलिराजस्य भार्यायां दीर्घतमोनाम्ना ऋषिणा उत्पादितः पुत्रः । तद्भ्रातरः अङ्गो वङ्गः पुण्ड्रः सुह्मश्च । **आ० ११३ । ५३ ॥**

२ **कलिङ्गः ।** क्षत्रियः । द्रौपदीस्वयंवरे । **आ० २०१ । १३ ॥**

**कलिङ्गाः ।** आन्ध्रदेशः । **भी० ९ । ४६ ॥**

तत्रत्या राजानः । श्रुतायुः शक्रदेवः सत्यदेवः सत्यः केतुमान् इत्यादयो भीमसेनेन हताः । **भी० ५४ ॥** The Country lying on the South of the Vaitarini river in Orissa, and north of the Krishna river in the Districts of Rajahmundry, Vizagapatam and Ganjam and a portion of Orissa.

तस्य राजधानी राजपुरं । तस्य राजा दुर्योधनश्वशुरश्चित्राङ्गदः । **शां० ४ । २ ॥**

+ **कलुषयोनिजः ।** अनार्ययोनिजशब्दं पश्यत ।

**कल्की ।** श्रीमतो नारायणस्यावतारः । **स० ५० । ४५ ॥ व० १९२ । ९३ ॥** [भा० १२ । २ ॥]

**कल्माषः ।** सर्पः । **आ० ३५ । ७ ॥**

**कल्माषपादः ।** सौदासशब्दं पश्यत ।

**कवची ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ । १०३ ॥ १३१ । ११ ॥ क० ४६ । ७ ॥** भीमेन हतः । **क० ८८ । १९॥**

**कविः** । भृगोः पुत्रः । तत्पुत्रः शुक्राचार्यः । **आ० ६७ । ४२** ॥ [ तन्माता ख्यातिः । भा० ४ । १ ॥]

**कशेरुकः** । क्षत्रियः । श्रीकृष्णेन हतः । **स० ६१** । ६॥

**कशेरुमान्** । क्षत्रियः । श्रीकृष्णेन हतः । **व० १२ । ३३** ॥

**कश्यपः** । ब्रह्मर्षिः । मरीचिऋषेः पुत्रः । **आ० ६३** । ३॥ [तन्माता कर्दमपुत्री कला । भा० ४ । १ ॥]

तस्य भार्याः दक्षपुत्र्यस्त्रयोदश । अदितिः दितिः दनुः काला दनायुः सिंहिका क्रोधा प्राधा विश्वा विनता कपिला मुनिः कद्रूः इति । **आ० ६६ । ११** ॥ तासामपत्यानि । **आ० ६६ । १४—५२** ॥

[तस्य भार्याः सप्तदश । भा० ६ । ६ ॥]

तेन पुत्रकाम्यया यजनं । **आ० ३१ । ५** ॥

तस्य तक्षकेण संवादः । **आ० ४२ । ३८** ॥

तस्मै ब्रह्मणा विषहरविद्यादानं । **आ० २० । १६** ॥

तस्मै परशुरामेणाश्वमेधयागान्ते दक्षिणात्वेन पृथिवी-दानं । **शां० ४८ । ६४** ॥

तस्य ऐलेन संवादः । **शां० ७३** ॥

तस्य नारायणमहिमविषये गरुडेन संवादः । **अनु० ४०** ॥

तन्नामनिर्वचनं । **अनु० १४२ । २९** ॥

तेन पृथिवीभूय प्राणिधारणं । **अनु० २५९ । ६**॥

तस्य सिद्धेन संवादः । **अश्व० १७** ॥

**कहोलः** । उद्दालकमहर्षेः शिष्यो जामाता च । तद्भार्या सुजाता । तत्पुत्रोऽष्टावक्रः । **व० १३४** । ८॥

तस्य जनकराजसभागमनं । तत्र वरुणपुत्रेण बन्दिना वादे पराजित्य जले निमज्जनं । **व० १३४ । १५**॥

तस्य जलात्पुनर्निर्गमनं । **व० १३६ । ३२** ॥

**कांस्यकुट्टाः** । देशः । **स० ७८ । ९८** ॥

+ **काकहंसयोः कथा** । शल्येन कर्णाय कथिता । **क० ३९** ॥

**काकी** । ताम्रायाः पुत्री । उलूकानां माता । **आ० ६७ । ५७** ॥

**काक्षीवान्** । शिबिभार्यायाः दास्यां शूद्र्यां दीर्घतमसऋषेर्जातः पुत्रः । **आ० ११३ । ४७** ॥ **स० ४ । २३** ॥

**काञ्चनाक्षी** । नैमिषे विद्यमाना सरस्वती नदी । **श० ३९ । १९** ॥

**काञ्ची** । द्रविडदेशस्य प्राचीनराजधानी ॥ **क० ९ । १९** ॥ Conjeevaram, in Chengleput District in the Madras Presidency. It was the capital of Chola Kings.

[वामन० १२ । गरुडपूर्वा० ८१ । पद्म० स्वर्गखं ५७॥]

**काठकोपनिषदर्थप्रतिपादनं । शां० २५२ । अनु० १०६** ॥

**कान्तिकोसलाः** । देशः । **भी० ९ । ४०** ॥

**कान्यकुब्जः** । देशः । गाधेः राजधानी । **आ० १९१ । ३** ॥ Kanouj is on the junction of the river Ganges and the Kali-nadi or Ikshumati, in Rohilkhand.

**कापच्यः** । (**कायव्यः**) । निषादजात्युद्भवो दस्यूनामधिपतिः । **शां० १३५ । ३** ॥

**कापव्याः** । जनाः । **स० ७८ । ८८** ॥

**कापिलं** । क्रौञ्चद्वीपस्थं वर्षं । **भी० १२ । १४** ॥

**कापी** । नदी । **भी० ९ । २४** ॥

**कामः** । मन्मथः । तद्भार्या रतिः । **आ० ६७ । ३३**॥

तस्य प्रशंसा । **शां० १६५** ॥

तस्य द्रुमत्वेन रूपणं । **शां० २६०** ॥

**कामठकः** । सर्पः । **आ० ५७ । १६** ॥

**कामधेनुः** । नन्दिनीनाम्नी वसिष्ठधेनुः । **आ० १९१ । ९** ॥

तस्या अपहारो विश्वामित्रेण । **आ० १९१ । २३** ॥

**कामन्दः** । ऋषिः । तस्यारिष्टनाम्ना राज्ञा सह धर्मत्यागिनः प्रायश्चित्तविषये संवादः । **शां० १२३ । ११** ॥

**काम्पिल्यं** । माकन्दीसमीपस्थं नगरं । **आ० १४८ । ७८** ॥ इदं दक्षिणपाञ्चालानां राज-

धानी । तस्य राजा द्रुपदः । Kampilya is twentyeight miles north-east of Fategarh in the District of Farrukhabad, N. W. P. It was the capital of South-Panchala, the king of which was Drupada.

**काम्भोजाः** । देशः । निषधपर्वतस्य दक्षिणतो विद्यमानः । **भी० ९ । ६५** ॥ तत्रार्जुनस्य राजसूयदिग्विजयार्थं गमनं । **स० २८ । २५**॥ Afganisthan, the name has been derived from Aswasthan the place of horses.

तस्य राजा सुदक्षिणः । अर्जुनेन हतः । **द्रो० ९२ । ६२** ॥

**काम्यकं** । खाण्डवप्रस्थस्य पश्चिमस्यां दिशि मरुधन्वसु विद्यमानं पुण्यवनं । तत्र पाण्डवानां वासः । **व० ५—२३ ॥ ३६—९० ॥ १८४** ॥

**काम्या** । अप्सराः । **आ० १३२ । ४६** ॥

**कायव्यः** । कापव्यशब्दं पश्यत ।

**कायशोधनं** । तीर्थं । **व० ८१ । ४२** ॥

**कारन्धमः** । क्षत्रियः । करन्धमपुत्रोऽविक्षत् । **अश्व० ४ । १८** ॥

**कारन्धमतीर्थं** । दक्षिणसमुद्रसमीपे । **आ० २३६ । ३** ॥

**कारीषिः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५५** ॥

**कारूशकाः** । करूशदेशवासिनो जनाः । **स० ७८ । ९९** ॥

**कारूषः** । क्षत्रियः । मनोः पुत्रः । **आ० ६९ ।१९**॥ The eastern portion of the District of Shahabad, in the Province of Bihar.

**कार्कोटकः** । कर्कोटकशब्दं पश्यत ।

**कार्तवीर्यः** । क्षत्रियः । सो० वं० कृतवीर्यस्य पुत्रोऽर्जुनः । **स० ८ । ११** ॥

तस्य कथा । **स० ९६ । २७** ॥

तस्य दत्तात्रेयात्सहस्रबाहुत्ववरप्राप्तिः । **स० ४८ । ५ ॥ अनु० २५७** ॥

तस्य परशुरामेण वधः । **स० ४९ । ४ ॥ व० ११७ । २५** ॥

तत्पुत्रैर्जमदग्निहननं । **व० ११७ । २७** ॥

तेन रावणबन्धनं । **स० ९६ । २९** ॥ [रा०७।३३]

[तस्य कथा । भा० ९ । १५ ॥ हरि० १ । ३३ । वायु० ९४ ॥ मत्स्य० ४३ ॥ रा० ७ । ३१ ॥ मार्कण्डेय० १६ ॥]

तेन वसिष्ठाश्रमदाहः । वसिष्ठात् शापप्राप्तिश्च । **शां० ४८ । ४१** ॥

**कार्तिकेयः** । स्कन्दः । **व० २३३ । ९** ॥

+ कार्तिकादिद्वादशद्वादशीनां विशेषः । **अश्व० ११३** ॥

**कार्ष्णिः** । अभिमन्युः । **भी० ४७ । १५** ॥

१ **कालः** । क्षणलवादिरूपः । तस्य महिमा । **आ० १। २७३** ॥

तस्य विभागः । **वि० ५२ । १** ॥ [भा० ३ । ११ ॥ हरि० १ । ८ ॥]

तं प्रति राज्ञः कारणत्वं । **शां० ६९ । ६** ॥

तस्य द्रुततरपातित्वं । **शां० १७४ ॥ २८३** ॥

२ **कालः** । कालाभिमानिनी मृत्युनाम्नी देवता । तस्याः सर्पेणसंवादः । **अनु० १ । ७०** ॥

**कालकवृक्षीयः । ( कालवृक्षीयः )** । ऋषिः । **स० ७ । १८** ॥

तस्य कथा अमात्यपरीक्षाविषये । **शां० ८२** ॥

तस्य शकुन्त्यामुत्पन्नः पुत्रः हिरण्यहस्तः । **अनु० ५३ । २३** ॥

तस्य कौसल्येन क्षेमदर्शिना संवादः । **शां० १०४-१०६** ॥

**कालका** । असुरस्त्री । तत्पुत्राः कालकेयाः । **व० १७५ । ७** ॥

**कालकीर्तिः** । क्षत्रियः । **आ० ६८ । ३७** ॥

**कालकूटः** । पर्वतः । **स० २० । २६** ॥

**कालकेयाः। (कालेयाः)।** हिरण्यपुरवास्तव्या असुराः। अर्जुनेन हताः। **व० ९९। ३ ॥ १७९। १२ ॥**

तेषां केषांचिद्वधो देवैः। **व० १०४। ७ ॥**

**कालखञ्जाः।** असुराः। **स० ९। १६ ॥**

**कालघटः।** जनमेजयसर्पसत्रे सदस्यो ब्राह्मणः। **आ० ५३। ८ ॥**

**कालञ्जरः।** पर्वतः। **व० ८३। ५६ ॥** तत्समीपे मेधावितीर्थं।

**कालतोयकाः।** देशः। **भी० ९। ४७ ॥**

**कालदन्तकः।** सर्पः। **आ० ५७। ६ ॥**

**कालदाः।** देशः। **भी० ९। ६३ ॥**

**कालनेमिः।** असुरः। **स० ५१। ८ ॥** विष्णुना हतः। **स० ५१। २९ ॥**

**कालपथः।** विश्वामित्रऋषेः पुत्रः। **अनु० ७। ५० ॥**

**कालयवनः।** गर्गस्य पुत्रः। श्रीकृष्णेन हतः। **शां० ३४८। २९ ॥**

**कालवेगः।** सर्पः। **आ० ५७। ६ ॥**

**काला। (कालिका)।** दक्षप्रजापतिकन्या। कश्यपभार्या। तत्पुत्राः कालकेयाः। **आ० ६६। ३४ ॥ व० १७९। ७० ॥**

**कालापः।** ऋषिः। **स० ४। २४ ॥**

**कालिका।** कालाशब्दं पश्यत। **स० ११। ४०।**

**कालिङ्गः।** कलिङ्गशब्दं पश्यत।

**कालिञ्जरः।** कालञ्जरशब्दं पश्यत।

**कालिन्दी।** यमुनानदी। **स० ९। २२ ॥**

**कालियः।** सर्पः। **आ० ३५। ६ ॥ उ० १०३। ९ ॥**

तस्य मर्दनं श्रीकृष्णेन। **स० ५३। १५ ॥** [भा० १०। १६ ॥ हरि० २। १२ ॥ विष्णु० ५। ७ ॥]

**काली।** वेदव्यासमाता सत्यवती। **आ० ६०। २॥**

**कावेरी।** नदी। **स० ९। २४ ॥ व० ८३। २२ ॥ भी० ९। २० ॥**

तत्रार्जुनस्य तीर्थयात्रार्थं गमनं। **आ० २३९। १४॥**

तत्र नकुलस्य राजसूयदिग्विजयार्थं गमनं। **स० ३३। १२ ॥**

**काशयः।** देशः। **भी० ९। ४२ ॥**

**काशिकाः।** जनाः। **स० ७८। ९७ ॥**

**काशी।** वाराणसीक्षेत्रं। **आ० १९० ॥**

**काश्मीराः।** देशः। **स० २८। १७ ॥ भी० ९। ५३ ॥** तस्य राजधानी श्रीनगरं।

**काश्मीरमण्डलं।** काश्मीरदेशः। **व० १३२। १० ॥**

**काश्यः।** पाण्डवपक्षीयो राजा। एकरथः। **उ० १७१। २२ ॥**

१ **काश्यपः।** सप्तर्षिष्वन्यतमः प्रजापतिः। कश्यपशब्दं पश्यत।

२ **काश्यपः।** वसुदेवपुरोहितः। तेन पाण्डवानां जातकर्मादिकरणं। **आ० १३३। ४४ ॥**

**काश्यपद्वीपः।** **भी० ६। ५६ ॥**

**किंजप्यं।** तीर्थं। **व० ८१। ७९ ॥**

**किंदत्तः।** पुण्यतीर्थभूतः कूपः। **व० ८१। ९८ ॥**

**किंदमः।** मृगरूपधारणेन मृग्या सह मैथुनं कुर्वन्पाण्डुना हतः ऋषिः। **आ० १२३। १२ ॥**

तेन पाण्डोः शापदानं। **आ० १२३। ३७ ॥**

**किंदानं।** तीर्थं। **व० ८१। ७९ ॥**

**किंधुरं।** द्रौपदीस्वयंवरे लक्ष्यवेधार्थं निहितं धनुः। **आ० २००। १३ ॥**

**किंपुना।** नदी। **स० ९। २४ ॥**

**किंपुरुषः।** हिमवदुत्तरभागे वर्तमानः खण्डः। तत्र राजसूयदिग्विजयार्थमर्जुनस्य गमनं। **स० २९॥**

+ **किरातकथा।** अत्याशाया अनर्थहेतुत्वे। **उ० ६४। १५ ॥**

+ **किरातरूपिरुद्रकथा। व० ३९ ॥**

**किराताः।** देशः। **भी० ९। ५१ ॥** Tipara—Hill Tippera, Comilla in Bengal.

**किरीटमाली** । अर्जुनः । **वि० ६३ । २७** ..
**किरीटी** । अर्जुनः । तन्नामनिर्वचनं । **वि० ४३** । २९ ॥
**किर्मीरः** । बकभ्राता राक्षसः । **व० ११ । २३** ॥
तस्य वधो भीमेन । **व० ११ । ६७** ॥
**किर्मीरवधपर्व** । **व० १-११** ॥
**किष्किन्धा** । वालिसुग्रीवयोरावासभूता नगरी । **स० ३२ । १८** ॥ **५० । १७**॥ **व० २८१** । **१६** ॥ **२९२ । ५७** ॥ A small village on the northern bank of the river Tungabhadra, near Humpi in the District of Bellary, Madras Presidency.
**कीचकः** । विराटस्य श्यालः । सुदेष्णाया भ्राता । केकयस्य पुत्रः । तन्माता मालवी । तद्भ्रातर उपकीचकाः पञ्चोत्तरशतं । **वि० २१** ॥
तेन द्रौपदीकामना । **वि० १६** ॥
तस्य बाणासुरांशत्वं । **वि० २१ । २२** ॥
तस्य वधः भीमसेनेन । **वि० २६ । ३३** ॥
+ **कीचकवधपर्व** । **वि० १६-२८** ॥
+ **कीटः** । कश्चन क्रिमिः । तस्योपाख्यानं । **अनु० १७९** ॥
तस्मै व्यासेन राज्यदानं । तेन राज्यपालनं च । **अनु० १८०** ॥
**कीर्तिः** । दक्षप्रजापतिपुत्री । धर्मस्य भार्या । **आ० ६७ । १४** ॥
+ **कीर्तिः** । यशः । तस्याः स्वर्गप्रापकत्वं । **व० २०२** ॥
तस्याः संपादनीयत्वं । **आ० २२२ । ११** ॥
**कीर्तिधर्मा** । पाण्डवपक्षीयः क्षत्रियः । **द्रो० १५९ । ३८** ॥
**कुकुणः** । सर्पः । **उ० १०३ । १०** ॥
**कुकुरः** । सर्पः । **उ० १०३ । १०** ॥
**कुकुराः** । देशः । **भी० ९ । ४२** ॥
**कुक्कुरः** । ऋषिः । **स० ४ । २४** ॥
**कुञ्जरः** । जयद्रथभ्राता । **व० २६६ । ११** ॥
**कुठारमुखः** । सर्पः । **आ० ५७ । १५** ॥
**कुणिगार्ग्यः** । ऋषिः । तत्पुत्री वृद्धकन्या यां गालवपुत्रः शृङ्गवानुपयेमे । **श० ५३ । ३** ॥
**कुण्डकः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० २०१ । ३** ॥
**कुण्डजः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । १०५** ॥
१ **कुण्डधारः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ७** ॥ भीमसेनेन हतः । **भी० ८८ । २३** ॥
२ **कुण्डधारः** । मेघः । तेन माणिभद्रनामानं यक्षं प्रसाद्य ब्राह्मणायैश्वर्यदापनं । **शां० २७७** ॥
३ **कुण्डधारः** । सर्पः । **स० ९ । १०** ॥
**कुण्डभेदी** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । १०४** ॥ **१३१ । १३** ॥ **भी० ९६ । २७** ॥ तद्वधः भीमसेनेन । **द्रो० १२७ । ४२** ॥
**कुण्डलः** । सर्पः । **आ० ५७ । १३** ॥
**कुण्डलाः** । देशः । **भी० ९ । ६३** ॥
+ **कुण्डलाहरणं** । विप्ररूपिणा इन्द्रेण कर्णस्य । **व० ३११** ॥
+ **कुण्डलाहरणपर्व** । **व० ३०१-३११** ॥
१ **कुण्डली** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **भी० ९६ । २४** ॥
२ **कुण्डली** । गरुडस्य पुत्रः । **उ० ११ । ९** ॥
३ **कुण्डली** । नदी । **भी० ९ । २१** ॥
**कुण्डशायी** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१ । १०** ॥
**कुण्डाशी** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । १४** ॥
**कुण्डिकः** । क्षत्रियः । सो० वं० तृतीयजनमेजयपुत्रस्य धृतराष्ट्रस्य पुत्रः । **आ० १०१ । ४६** ॥
**कुण्डिनं** । भीष्मकस्य काले विदर्भाणां राजधानी । **व० ५७ । २०** ॥ **७१ । २** ॥ In Berar

Vidarbha desa. The ancient capital of Vidarbha. Kundinapura in Berar, Central India, is about forty miles east of Amraoti.

**कुण्डी** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१** । ११ ॥

**कुण्डोदः** । पर्वतः । **व० ८५** । २५ ॥

१ **कुण्डोदरः** । क्षत्रियः । धृतराष्ट्रपुत्रः । **आ० ६८** । ९७ ॥

२ **कुण्डोदरः** । सर्पः । **आ० ३५** । १६ ॥

+ **कुतपः** । श्राद्धार्हः कालः । **आ० ८७** । ३१ ॥

**कुन्तयः** । देशः । **भी० ९** । ४० ॥ An ancient town of Malwa, the birth place of Kunti. It was situated on the bank of a small river called Aswanadi.

**कुन्तलाः** । देशः । **भी० ९** । ५२ ॥ The ancient name of the Province in which Kurugode is situated. A portion of the Bellary District in the Madras Presidency.

**कुन्तिभोजः** । शूरराजस्य पितृष्वस्रीयपुत्रः । **आ० ६८** । १३१ ॥ अतिरथः । **उ० १७२** । २॥

तस्य कथा । **व० ३०४** ॥

तेन शूरराजपुत्र्या वसुदेवभगिन्याः पृथायाः दुहितृत्वेन स्वीकारः । **आ० ६८** । १३० ॥

तस्य पुत्रा दश । अश्वत्थाम्ना हताः । **द्रो० १५७**। १८३ ॥

तस्य वधो द्रोणेन । **क० ३** । २२ ॥

**कुन्ती** । शूरराजस्य पुत्री । कुन्तिभोजस्य दत्तकपुत्री पृथा । पाण्डोर्भार्या । या यमानिलेन्द्रेभ्यो युधिष्ठिरभीमार्जुनाञ्जनयामास । श्रीकृष्णस्य पितृष्वसा। **आ० ६३** । ५९ ॥ **६८** । १२९ ॥

तस्याः स्वसारः । (१) श्रुतदेवा कारूशस्य वृद्धशर्मणः पत्नी । तत्पुत्रो दन्तवक्रः । ( २ ) श्रुतकीर्तिः केकयस्य धृष्टकेतोः पत्नी । तत्पुत्राः संतर्दनादयः पञ्च । तत्पुत्री श्रीकृष्णस्य भार्या भद्रा । ( ३ ) राजाधिदेवी । आवन्त्यस्य जयत्सेनस्य भार्या । तत्पुत्रौ विन्दानुविन्दौ । पुत्री श्रीकृष्णभार्या मित्रविन्दा । ( ४ ) श्रुतश्रवाः । चैद्यस्य दमघोषस्य पत्नी । तत्पुत्रः शिशुपालः । भा० ९ । २४ ॥ विष्णु० ४ । १४ ॥ हरि० १ । ३४ ॥]

तस्याः सिद्ध्यंशत्वं । **आ० ६८** । १६० ॥

तस्याः बाल्ये दुर्वाससो मन्त्रप्राप्तिः । **आ० ६८** । १३२ ॥ **१२०** ॥ **१२८** ॥ **व० ३०६** ॥ [देवीभा० २ । ६ ॥]

तस्याः मन्त्रपरीक्षार्थं सूर्याह्वानं । **आ० १२०** । ९ ॥ **व० ३०७** ॥

तस्यां सूर्यात्कर्णोत्पत्तिः । **आ० ६४** । १४० ॥ **६८** । १३८ ॥ **१२०** । २८ ॥ **व० ३०८–३०९** ॥

तां प्रति एकचक्रानगरे ब्राह्मणेन बकासुरवृत्तान्तकथनं । **आ० १७४** ॥

तस्याः सूर्योपस्थानं कुर्वतः कर्णस्य समीपगमनं । **उ० १४४** । २७ ॥

तस्याः कर्णं प्रति तस्य स्वपुत्रत्वकथनं । **उ० १४५** । २ ॥

तया विदुरं प्रति कर्णस्य स्वपुत्रत्वकथनं । **उ० १४४** । १९ ॥

तया युधिष्ठिरं प्रति कर्णस्य स्वपुत्रत्वकथनं । **स्त्री० २७** । ७ ॥

तस्याः समाश्वासनं श्रीकृष्णेन । **उ० ९०** । ९१ ॥

तस्या दावाग्निप्रवेशः । **आश्र० ३९** ॥

**कुन्दापरान्ताः** । देशः । **भी० ९** । ४९ ॥

**कुपटः** । दनुपुत्रः । **आ० ६६** । २६ ॥

**कुबेरः** । ( **वैश्रवणः** ) । उत्तरदिगीश्वरो देवः । अस्य सोमइति मुख्यं नामधेयं । अतएव सौम्येति उत्तरदिशो नाम । तद्भार्या ऋद्धिः । **स० १०** । ६ ॥

तत्पुत्रो नलकूबरः । **स० १०** । २० ॥ तद्भार्या भद्रा । **आ० २१६** । ६ ॥

तस्योत्पत्तिः पुलस्त्यमहर्षेर्गोनाम्न्यां तत्पत्न्यां । व० २७५ । १२ ॥

तदागमनं पाण्डवसमीपे । व० १६२ । ३३ ॥

तदागमनमर्जुनसमीपे । व० ४१ । ७ ॥

तदागमनं भीमसेनसमीपे सौगन्धिकाहरणकाले । व० १५५ । २७ ॥

तस्यागस्त्यऋषितः मानुषात्क्लेशप्राप्तिप्रकारकशापप्राप्तिः। व० १६२ । ५९ ॥

तस्यावासः कैलासः । भी० ६ । ४१ ॥

तस्य राजधानी अलका । आ० ७९ । ९ ॥ व० १६३ । ११ ॥

तस्य मुचुकुन्देन सह क्षत्रधर्मविषये संवादः । शां० ७४ ॥

तत्सभावर्णनं । स० १० ॥

**कुब्जावती** । तीर्थं । व० ८२ । ४० ॥

१ **कुमारः** । स्कन्दः । श० ४५ । १ ॥

२ **कुमारः** । गरुडपुत्रः । उ० १०१ । १३ ॥

**कुमारकः** । सर्पः । आ० ५७ । १३ ॥

**कुमारधारा** । नदी । व० ८२ । १४८ ॥

**कुमारविषयः** । देशः । तस्य राजा श्रेणिमान् । स० ३१ । १ ॥

**कुमाराः** । देशः । स० ७८ । ८९ ॥

+ **कुमाराणां क्रीडा** । आ० १३७ । १४ ॥

**कुमारिकातीर्थं** । कन्यातीर्थशब्दं पश्यत । व० ८० । ८२ ॥

**कुमारी** । नदी । भी० ९ । ३६ ॥

१ **कुमुदः** । सर्पः । आ० ३५ । १५ ॥ उ० १०३ । १३ ॥

२ **कुमुदः** । दिग्गजः । उ० ९९ । ८ ॥

३ **कुमुदः** । पर्वतः । भी० १२ । १० ॥

४ **कुमुदः** । गरुडपुत्रः । उ० १०१ । १२ ॥

**कुमुदाक्षः** । सर्पः । आ० ३५ । १५ ॥

**कुम्भः** । प्रह्लादस्य पुत्रः । आ० ६६ । १९ ॥

**कुम्भकर्णः** । रावणभ्राता राक्षसः । विश्रवसः पुत्रः । तन्माता पुष्पोत्कटा । व० २७६ । ७ ॥ तस्य लक्ष्मणेन वधः । व० २८८ ॥

**कुम्भकर्णाश्रमः** । व० ८२ । १५६ ॥

+ **कुम्भकारः** । कुलालः । एकचक्रनगरे तस्माद्भीमस्य महत्तरपात्रलाभः । आ० १७१ । १८ ॥

तद्गृहे द्रौपदीस्वयंवरकाले पाण्डवानां वासः । आ० २०० । ६ ॥

**कुम्भयोनिः** । अगस्त्यशब्दं पश्यत । व० ९७ । ८ ॥

**कुम्भरेताः** । अग्निविशेषः । व० २२१ । १८ ॥

**कुम्भीनसी** । चित्ररथनाम्नो गन्धर्वस्य भार्या । आ० १८६ । ३४ ॥

**कुरवः** । धार्तराष्ट्राः । तेषां दुर्निमित्तप्रादुर्भावः । उ० ८४ ॥

**कुरुः** । क्षत्रियः । सो० वं० संवरणस्य पुत्रः । तन्माता तपती । तद्भार्या शुभाङ्गी । तत्पुत्रो विदूरथः । आ० ६३ । ४१ ॥

तस्यान्या भार्या वाहिनी । तत्पुत्राः अश्ववान् अभिष्यन्तः चैत्ररथः मुनिः जनमेजयश्च । अश्ववतोऽविक्षत् इति नामान्तरं । आ० १०१ । ३६ ॥ वि० ५३ । १४ ॥ [मत्स्य० ५० ॥]

**कुरुक्षेत्रं** । कुरुनामकेन राज्ञा निर्मितं सरस्वतीदृषद्वत्योरन्तरा विद्यमानं क्षेत्रं । आ० १०१ । ३८ ॥ व० ८३ । ९० ॥ A tract between the rivers Sarasvati and Dhrishadvati and it was named Brahmavarta in the period of Swayambhuva Manu and it is about 70 miles in length and 30 miles in width. It is also a Railway station 100 miles north of Delhi in the District of Karnal.

तस्य महिमा । व० ८१ । १ ॥ श० ५४ ॥

तस्य द्वापरे पुण्यतमत्वं । व० ८३ । ९० ॥

**कुरुजाङ्गलाः** । कुरुदेशस्य पश्चिमतो विद्यमानो वनप्रचुरो देशः । **आ० १०१** । ३७ ॥ A forest country situated in the north west of Hastinapura, the capital of the Kurus, north-east of Delhi, now entirely diluviated by the river Ganges.

**कुरुतीर्थं** । **व० ८१** । १६६ ॥

**कुरुपाञ्चालाः** । देशः । **भी० ९** । ३९ ॥

**कुरुवृद्धः** । भीष्मः । **भी० ५२** । ५२ ॥

१ **कुलपतिः** । "एको दशसहस्राणि योऽन्नदानादिना भरेत् । स वै कुलपतिः" इत्युक्तलक्षणः शौनकऋषिः । **आ० १** । ५ ॥

२ **कुलपतिः** । हिमवत्पार्श्वे ब्रह्माश्रमपदे विद्यमानः कश्चन ऋषिः । तस्य शूद्रस्य च कथा । **अनु० ३१** । १३ ॥

**कुलम्पुनः** । तीर्थं । **व० ८१** । १०४ ॥

**कुलपर्वताः** । महेन्द्रः मलयः सह्यः शुक्तिमान् ऋक्षवान् विन्ध्यः पारियात्रः इति सप्त । **भी० ९** । ११ ॥

**कुलिकः** । सर्पः । **आ० ६६** । ४१ ॥

**कुलिङ्गः** । दुर्योधनमन्त्री ब्राह्मणः । **आ० ६१** ।१०॥

अस्य कणिक इति नामान्तरं । **आ० १५३** । २॥ विशेषं कणिकशब्दे पश्यत ।

**कुलिङ्गाः** । देशः । तद्विजयोऽर्जुनेन राजसूयार्थं । **स० २७**।९॥ अयं कुलिन्दादनन्य इति भाति ।

**कुलिङ्गशकुनिः** । (**भूलिङ्गशकुनिः**) । मा साहसमिति वदन्ती शकुन्तिका । **स० ६७**।२८॥

**कुलिन्दाः** । केकयदेशस्य दक्षिणतः कुरुक्षेत्रस्योत्तरतः सरस्वतीतीरे विद्यमानो देशः । **स० ७८** । ७९ ॥ **भी० ९** । ६३ ॥ The District of Shaharnpur, north of Delhi.

**कुवलाश्वः** । क्षत्रियः । सू० वं० बृहदश्वस्य पुत्रः । तस्य धुन्धुमार इति नामान्तरं । **व० २०४** । ३३ ॥ **२०५** ॥ [ब्रह्म० ७ ॥ हरि० १ । ११ ॥ वायु० ८८ ॥ भा० ९ । ६ ॥]

तस्य पुत्राः दृढाश्वः कपिलाश्वः भद्राश्व इति त्रयः । **व० २०७** । ३७ ॥

**कुवीरा** । नदी । **भी० ९** । २७ ॥

**कुशः** । कुशिकशब्दं पश्यत ।

**कुशचीरा** । नदी । **भी० ९** । २३ ॥

**कुशद्वीपः** । **भी० १२** । ९ ॥

**कुशधारा** । नदी । **भी० ९** । २४ ॥

**कुशप्लवनतीर्थं** । **व० ८३** । ३७ ॥

**कुशबिन्दवः** । देशः । **भी० ९** । ५६ ॥

**कुशलः** । क्रौञ्चद्वीपस्थो देशः । **भी० १२**। २१ ॥

**कुशस्थली** । द्वारका । **स० १४** । ५३ ॥ Dwaraka, the capital of the Krishna's kingdom in Guzerat.

**कुशाम्बः** । क्षत्रियः । सो० वं० पूरुकुलोत्पन्नस्य कृतिराजपुत्रस्य उपरिचरवसोः पुत्रः । अस्य मणिवाहन इति नामान्तरं । **आ० ६४**।४४॥

**कुशिकः** । सो० वं० पुरूरवोवंशोत्पन्नस्य जह्नोर्वंशे उत्पन्नस्य कुशस्य पुत्रः । तत्पुत्रो गाधिः । **अनु० ७** । ५ ॥

तेन पुत्रार्थं तपश्चरणं । **शां० ४८** । ३ ॥ [ भा० ९ । १५ ॥ हरि० १ । २७ ॥]

तस्य गृहे च्यवनऋषेर्वासः । **अनु० ८७** ॥

**कुषिकः** । क्षत्रियः । **स० ८** । १० ॥

**कुस्तुम्बुरुः** । यक्षः । **स० १०** । १७ ॥

**कुहनः** । क्षत्रियः । जयद्रथभ्राता । **व० २६६**।११॥

**कूर्चामुखः** । विश्वामित्रर्षेः पुत्रः । **अनु० ७**। ५३॥

**कूर्मः** । सर्पः । **आ० ६६** । ४१ ॥

× **कूर्मावतारः** । श्रीमतो नारायणस्य । **आ० १८** । १२ ॥ [पद्म० ६ । २५९ ॥ भा० ८ । ७॥]

+ **कूर्मव्यूहः** । कौरवाणां । **भी० ८७** । ९ ॥

**कूष्माण्डकः** । सर्पः । **आ० ३५** । ११ ॥

**कृकणेयुः** । क्षत्रियः । सो० वं० रौद्राश्वपुत्रः । **आ० ८८** । ९ ॥

[तस्य भार्याः । भीष्मकराजसुता रुक्मिणी ॥ २ सत्राजितः पुत्री सत्यभामा ॥ ३ कौसल्यस्य नग्नजितः पुत्री नीला(सत्या) ॥ ४ पितृष्वसुः श्रुतकीर्तेः पुत्री भद्रा । तत्पिता केकयो धृष्टकेतुः ॥ ५ पितृष्वसुः राजाधिदेव्याः पुत्री मित्रविन्दा ॥ तत्पिता आवन्त्यो जयत्सेनः ॥ ६ सूर्यपुत्री कालिन्दी ॥ ७ लक्ष्मणा (लक्षणा) मद्राधिपतेः सुता ॥ ८ जाम्बवती । जाम्बवत ऋक्षराजस्य दुहिता । भा० १० । ५६ ॥ १० । ५८ ॥ पुनरन्याः षोडशसहस्रसंख्याका महिष्यः अप्सरोंशाः नरकासुरपुरादाहृताः । भा० १० । ५९ ॥ विष्णु० ५ । २८ ॥]

[तस्य पत्नीभिर्द्रौपदीं प्रति स्वस्वोद्वाहकथावर्णनं । भा० १० । ८३ ॥]

तस्य श्रीमन्नारायणावतारत्वं । **आ० ६८ । १५१॥ उ० ४९ ॥**

तस्य जरासन्धेन सह द्वेषकारणं । **स० २३ ॥**

तस्य भगिनी यशोदापुत्री एकानङ्गा । **स० ५९ । ९ ॥**

[तस्य वैमात्रेयोऽग्रजो बलरामः । भा० ९ । २४ ॥]

तस्य सारथिर्दारुकः । **व० २० । २४ ॥ अश्व० ११८ । ५२ ॥**

तस्य शङ्खः पाञ्चजन्यः । **भी० २५ । १५ ॥**

तस्याश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः । **अश्व० ११८ । ५६ ॥**

तस्य पाञ्चालकार्मुकानारोपणे कारणं । **आ० २०६ ।** २० ॥

तस्य पाञ्चालनगरे पाण्डवदिदृक्षया कुलालशालागमनं । **आ० २६० । २२ ॥**

तस्य सस्त्रीकस्य तादृशेनार्जुनेन सह यमुनायां जलक्रीडा । **आ० २४८ ॥**

तेन हसिते सति सत्यभामया तत्कारणप्रश्नः । **आ० २३८ । १० ॥**

तेन युधिष्ठिरराजसूये ब्राह्मणपादप्रक्षालनं । **स० ३८ । १२ ॥**

तस्य युधिष्ठिरराजसूये सहदेवेनाग्रपूजाकरणं । **स० ३९ । ४८ ॥**

तन्महिमोक्तिर्भीष्माचार्येण । **स० ४१ । ६ ॥ अनु० २५१-२५३ ॥**

तस्य स्तुतिः । अर्जुनकृता । **व० १२ । ११ ॥** द्रौपदीकृता । **व० १२ । ५२ ॥ २६४ । ७ ॥** ब्रह्मर्षिकृता । इदमेव विश्वोपाख्यानं । **भी० ६८ ॥** युधिष्ठिरकृता । **शां० ४२ ॥** भीष्मकृता । **शां० ४६ । ५० ॥** धृतराष्ट्रकृता **उ० ७० ॥**

तस्य सारतरत्वं । **उ० ६७ ॥ अश्व० ११८ । ३७ ॥**

तच्चरित्रकथनं विदुरेण धृतराष्ट्राय । **उ० १३० । ५५ ॥** धृतराष्ट्रेण सभायां । **द्रो० ११ ॥**

तद्गुणानुकीर्तनं महेश्वरेण । तद्वंशकथनं च । **अनु० २५१ ॥**

तेन वाराणसीदाहः । **स० ६१ । ११ ॥**

तस्यागमनं काम्यकवने पाण्डवान्प्रति । **व० १२ ॥**

तेन द्रौपदीसमाश्वासनं । **व० १२ । १३१ ॥**

तस्य साल्वराजेन युद्धं । **व० १४ ॥**

तेन वनस्थां द्रौपदीं प्रत्यन्नयाचनं । तेनाक्षयपात्रकण्ठलग्नशाकपुलाकभक्षणे आकण्ठतृप्तस्य सशिष्यवर्गस्य दुर्वाससः पलायनं । **व० २६३-२६४ ॥**

तन्नामनिर्वचनं । **उ० ६९ । ५ ॥ शां० ३५२ । १४ ॥**

तेन भीमसेनमाहात्म्यकथनं । **उ० ७६ ॥**

तस्य सन्ध्यर्थं हास्तिनपुरगमनं । **उ० ८२ ॥**

तद्दर्शनार्थमृषीणामागमनं । **उ० ८३ । २४ ॥**

तस्य मार्गे शुभशकुनानि । **उ० ८४ । ९ ॥**

तस्य मार्गे तत्रतत्र निवासार्थं दुर्योधनेन सभानिर्मापणं । **उ० ८५ ॥**

तेन विदुरगृहगमनं तदन्नभोजनं च । **उ० ९१ ।** ४० ॥

ककरणं । **उ० ९४ ॥** [भा० १० । ७० ॥]

तद्बन्धननिर्धारणं दुर्योधनेन । **उ० १३० ॥**

तेन विश्वरूपप्रदर्शनं धृतराष्ट्रसभायां । **उ० १३१ ॥**

समराङ्गणेऽर्जुनाय । **भी० ३९** ॥ उदङ्काय । **अश्व० ५५** ॥
तेन कर्णं स्वरथमारोप्य तेन सह तस्य पाण्डवपक्षप्रवेशे संभाषणं । **उ० १३७** । २६ ॥
तेन भीष्मवधेच्छया चक्रायुधग्रहणं । **भी० ५९** । ८८ ॥
तस्य भीष्मवधायाभियानं । **भी० १०६** । ५५ ॥
तेन भगदत्तविसृष्टस्य वैष्णवास्त्रस्योरसा धारणं । **द्रो० २९** । १८ ॥
तेन लाङ्गलायुधोद्यमनेन भीमसेनहननोद्यतस्य बलरामस्य सान्त्वनं । **श० ६१** । ९ ॥
तेन दुर्योधनगर्हणं । दुर्योधनेन तद्गर्हणं च । **श० ६२**॥
तेन गान्धार्याः समाश्वासनं । **श० ६४** ॥
तस्मै गान्धार्या "एवमेव तव कुलमपि नश्यतु" इति शापदानं । **स्त्री० २५** । ३९ ॥
तेनाश्वत्थाम्ने शापदानं । **सौ० १६** । ६ ॥
तेन कैलासभस्मीकरणं । **अनु० २०३** । १८ ॥
तेन पुत्रार्थं शिवं प्रति तपश्चरणं । **अनु० २०३** ॥ [ शिवपु० उमासं० १ ]
तस्मै रुद्रेण वरदानं । **अनु० ४६** ॥
तेनोदङ्कऋषिदर्शनं । **अश्व० ५३** ॥
तेनोदङ्काय स्वमाहात्म्यकथनं । **अश्व० ५४** ॥
तस्य रैवतकप्रवेशः । **आ० २३९** ॥ **अश्व० ५९** ॥
तेन प्रसवसमनंतरं मृतस्य परीक्षित उज्जीवनं । **अश्व० ६६** । ६९ ॥
तस्य पादतले जरनाम्ना व्याधेन बाणेन वेधः । **मौ० ५** । २२ ॥ [भा० ११ । ३१ ॥]
तेन दुर्वाससः परिचर्या । तदुच्छिष्टपायसेन स्वाङ्गविलेपनं च । **अनु० २६४** ॥ **मौ० ५** । १८ ॥
तेन बलरामेण धेनुकासुरघातनं । **स० ५३** । १६॥ [भा० १० । १५ ॥ हरि० २ । ६३ ॥ विष्णु० ५ । ८ ॥]
तेन नरकासुरवधः । **स० ५५** । ३४ । [ भा० १० । ५९ ॥ हरि० २ । ६३ ॥ विष्णु० ५ । २९ ॥]
तेन यमलार्जुनभङ्गः । **स० ५२** । २८ ॥ [भा० १० । १० ॥ हरि० २ । ७ ॥ विष्णु० ५ । ६॥
तेन शकटासुरवधः । **स० ५२** । १७ ॥ [भा० १० । ७ ॥ हरि० २ । ६ ॥ विष्णु० ५ । ६ ॥]
तेन बाणासुरपराजयः । **स० ६०** । ३१ ॥ [हरि० २ । ११८ ॥ भा० १० । ६३ ॥]
तेन सान्दीपिनेश्चतुष्षष्टिकलाभ्यासः । **स० ५४** । १ ॥ [भा० १० । ४५ ॥ विष्णु० ५ । २१॥ हरि० २ । ३३ ॥]
चतुष्षष्टिकलानां नामानि । १ गीतं । २ वाद्यं । ३ नृत्यं । ४ नाट्यं । ५ आलेख्यं । ६ विशेषकच्छेद्यं । ७ तण्डुलकुसुमबलिविकाराः । ८ पुष्पास्तरणं । ९ दशनवसनाङ्गरागाः । १० मणिभूमिकाकर्म । ११ शयनरचनं । १२ उदकवाद्यमुदकघातः । १३ चित्रयोगाः । १४ माल्यग्रथनं । १५ शेखरापीडयोजनं । १६ नेपथ्ययोजनं । १७ कर्णपत्रभङ्गाः । १८ सुगन्धयुक्तिः । १९ भूषणयोजनं । २० ऐन्द्रजालं । २१ कौचुमारयोगाः । २२ हस्तलाघवं । २३ चित्रशाकापूपभक्ष्यविकाराः । २४ पानकरसरागासवयोजनं । २५ सूचीवापकर्म । २६ सूत्रक्रीडा । २७ वीणाडमरुकवाद्यानि । २८ प्रहेलिका । २९ प्रतिमाला । ३० दुर्वाचकयोगाः । ३१ पुस्तकवाचकं । ३२ नाटकाख्यायिकादर्शनं । ३३ काव्यसमस्यापूरणं । ३४ पट्टिकावेत्रबाणविकल्पाः । ३५ तर्ककर्माणि । ३६ तक्षणं । ३७ वास्तुविद्या । ३८ रूप्यरत्नपरीक्षा । ३९ धातुवादः । ४० मणिरागज्ञानं । ४१ आकरज्ञानं । ४२ वृक्षायुर्वेदयोगाः । ४३ मेषकुक्कुटलावकयुद्धविधिः । ४४ शुकशारिकाप्रलापनं । ४५ उत्सादनं । ४६ केशमार्जनकौशलं । ४७ अक्षरमुष्टिकाकथनं । ४८ म्लेच्छितकुतर्क-

विकल्पाः । ४९ देशभाषाज्ञानं । ५० पुष्पशकटिकानिर्मितिज्ञानं । ५१ यन्त्रमातृकाधारणमातृका । ५२ संवाच्यं । ५३ मानसीकाव्यक्रिया । ५४ अभिधानकोशः । ५५ छन्दोज्ञानं । ५६ क्रियाविकल्पाः । ५७ छलितकयोगाः । ५८ वस्त्रगोपनानि । ५९ द्यूतविशेषाः । ६० आकर्षक्रीडा । ६१ बालक्रीडनकानि । ६२ वैनायिकीनां ज्ञानं । ६३ वैजयिकीनां ज्ञानं । ६४ वैतालिकीनां ज्ञानं । इति चतुष्षष्टिः कलाः । ६४ ॥

तेन कालियमर्दनं । **स० ५३ । १५** ॥ [भा० १० । १६ ॥ हरि० २ । १२ ॥ विष्णु० ५ । ७॥]

तेनारिष्टासुरवधः । **स० ५३** । २८ ॥ [भा० १० । ३६ ॥ हरि० २ । २१ ॥ विष्णु० ५ । १४ ॥]

तेन कंसवधः । **स० ५३ । ३३** ॥ [भा० १० । ४४ ॥ हरि० २ । ३० ॥ विष्णु० ५ । २०॥]

तेन पूतनासंहारः । **स० ५२ । २३** ॥ [भा० १० । ६ ॥ हरि० २ । ६ ॥ विष्णु० ५ । ५॥]

तेन चाणूरवधः । **स० ५३ । ३०** ॥ [हरि० २ । ३० ॥ भा० १० । ४४ ॥ विष्णु० ५।२०॥]

तेन पारिजातहरणं । **स० ५७ । ४१** ॥ [भा० १० । ५९ ॥ हरि० २ । ६४ ॥ विष्णु० ५ । ३० ॥]

तेन गोवर्धनोद्धरणं । **स० ५३ । २२** ॥ [भा० १० । २५ ॥ हरि० २ । १५ ॥ विष्णु० ५ । १० ॥]

[तेन कुचेलायैश्वर्यदानं । भा० १० । ८० ॥]

[तेन कुवलयापीडवधः । भा० १० । ४३ ॥ हरि० २ । २९ ॥]

[तेन वृकासुरहननं । भा० १० । ८८]

तेन केशिनामकाश्वरूपदैत्यवधः । **स० ५३ । २९**॥ [भा० १० । ३७ ॥ हरि० २ । २४ ॥ विष्णु० ५ । १६ ॥]

[तेन तृणावर्तवधः । भा० १० । ७ ॥]

[तेन पौण्ड्रकवासुदेववधः । भा० १० । ६६ ॥]

[तेन सृगालवासुदेववधः । हरि० २ । ४४ ॥]

[तेन बकासुरवधः । भा० १० । ११ ॥]

[तेन वत्सासुरवधः । भा० १० । ११ ॥]

[तेन मृतस्य ब्राह्मणपुत्रस्य श्वेतद्वीपादानयनं । भा० १० । ८९ ॥ हरि० २ । ११३ ॥]

[तस्य रुक्मिण्या सह प्रेमकलहः । भा० १० । ६०॥]

[तेन गोमन्तपर्वतदाहः । हरि० २ । ४२ ॥]

[तस्य पुत्राः । भा० १० । ६१ ॥]

[तत्पुत्राणां नामानि । भा० १० । ९० ॥ हरि० २ । १०३ ॥]

२ **कृष्णः** । वेदव्यासः । **आ० ११५** । ७ ॥

३ **कृष्णः** । अर्जुनः । **वि० ४३** । ४१ ॥

**कृष्णद्वैपायनः** । व्यासः । **आ०** १ । १६ ॥

**कृष्णवेणा** । कृष्णा नदी । **भी० ९ । २८** ॥

**कृष्णवेणी** । कृष्णा नदी । **स० ९ । १६** ॥

**कृष्णा** । नदी । **भी० ९ । ३३** ॥

**केकयः** । सूतराज्याधिपो रथकारः । मालव्या भर्ता । तत्पुत्राः कीचकादयः । तस्य द्वितीया भार्या मालव्याः स्वसा । तत्पुत्री विराटभार्या सुदेष्णा । **वि० २१ । १३** ॥

+ **केकयराजोपाख्यानं** । राज्ञा ब्राह्मणरक्षणविषये । **शां० ७७** ॥

१ **केकयाः** । क्षत्रियाः । पाण्डवपक्षीयाः । **उ० १७१ । १४** ॥

२ **केकयाः** । क्षत्रियाः । दुर्योधनपक्षीयाः । **उ० १९५ । ५** ॥

३ **केकयाः** । देशः । **भी० ९ । ४८** ॥ The country between the Beas and the Sutlej. It was the kingdom of the father of Kaikeyi one of the wives of Dasaratha.

**केतवः** । ऋषयः । **शां० १९ । १६** ॥

१ **केतुमान्** । क्षत्रियः । **स० ४ । ३३** ॥

२ **केतुमान्** । दनुपुत्रोऽसुरः । **आ० ६६**।२४ ॥

३ **केतुमान्** । निषादः । एकलव्यपुत्रः । **भी० ५४ । ५** ॥ भीमेन हतः । **भी० ५४ । ७७** ॥

**केतुमालः** । खण्डः । **स० २९ । ३९** ॥ **भी० ६ । ३१** ॥

तस्य सुकृतिनां सुखभोगस्थानत्वं । **अनु० २४०** ॥

**केतुमाला** । नदी । **व० ८७ । १४** ॥

**केतुवर्मा** । त्रैगर्तः । **अश्व० ७४ । १४** ॥

**केदारतीर्थं** । गङ्गाद्वारमारभ्य तमसानदीपर्यन्तं विद्यमानं तीर्थं । **व० ८१ । ७२** ॥ Kedarinath. A sacred stream called Kaliganga has its rise here. It is about 146 miles north of Hardwar and is very near to Badarinath.

**केरलः** । केरलदेशाधिपः । **वि० ५३ । १५** ॥

**केरलाः** । देशः । **स० ३२ । ७३** ॥ **भी० ९ । ५८** ॥ The Malabar coast. It comprises Malabar, Travancore, and Kanara.

**केशवः** । श्रीकृष्णः । तन्नामनिर्वचनं । **शां० ३५० । ४८** ॥

+ **केशवादिद्वादशभगवद्रूपाणि** । **अनु० १७१** ॥ **अश्व० ११४** ॥

१ **केशिनी** । क्षत्रियकुमारी । तस्याः स्वयंवरे ब्राह्मणक्षत्रिययोः श्रैष्ठ्यविषये सुधन्वविरोचनयोर्विवादः । **उ० ३५** ॥

२ **केशिनी** । दमयन्त्या दूती । **व० ७२ । ६** ॥

३ **केशिनी** । अप्सराः । **आ० ६६ । ५०** ॥

४ **केशिनी** । सुहोत्रपुत्रस्याजमीढस्य भार्या । तत्पुत्रो जह्नुः । **आ० १०१ । २०** ॥

१ **केशी** । दनुपुत्रोऽसुरः । **आ० ६६ । २३** ॥ **व० २२५ । ८** ॥

२ **केशी** । अश्वरूपी असुरः । श्रीकृष्णेन हतः । **स० ५३ । २९** ॥

**केसरः** । पर्वतः । **भी० ११ । २३** ॥

१ **कैकयी** । सू० वं० दशरथभार्या । भरतस्य माता । **व० २७५ । ८** ॥ **स० ५० । ९** ॥

२ **कैकयी** । विराटराजभार्या सुदेष्णा । **वि० १४ । ६** ॥

**कैटभः** । असुरः । मधोर्भ्राता । विष्णुना हतः । **व० २०६** ॥

**कैतवः** । शकुनिः । **स० ८५ । १०** ॥

**कैरातपर्व** । **व० ३८–४१** ॥

**कैलासः** । पर्वतः । रुद्रस्यावासभूतः । **भी० ६ । ४१** ॥

तत्र पाण्डवानां गमनं । **व० १४१ । ११** ॥

तत्र श्रीकृष्णेन तपश्चरणं । **अनु० २०३ । १** ॥

तत्र सकृष्णस्यार्जुनस्य गमनं । **द्रो० ८०** ॥

**कैलासकः** । सर्पः । **उ० १०३ । ११** ॥

**कोकबकाः** । देशः । **भी० ९ । ६१** ॥

**कोकामुखं** । तीर्थं । **व० ८२ । १५७** ॥ तस्य वराहक्षेत्रमिति नामान्तरं ।

**कोङ्कणाः** । देशः । **भी० ९ । ६०** ॥

**कोटरकः** । सर्पः । **आ० ३५ । ८** ॥ **उ० १०३ । १२** ॥

**कोटिकः** । क्षत्रियः । **कोटिकास्यः** । जयद्रथस्य प्रेष्यः । शिबिवंशजः । सुरथस्य पुत्रः । **व० २६६ । ६** ॥ **२६७ । ४** ॥ **व० २७२ । २४** ॥

तस्य द्रौपद्या संवादः । **व० २६६ । १** ॥

**कोटितीर्थं** । **व० ८० । ५०** ॥ **८१ । १६** ॥ **८२ । ७६** ॥ **८३ । ६१** ॥ A tank situated in Kalinjar in the District of Bundelkhand. 2. A sacred tank in Gokarna. 3. In Muttra.

**कोटिशः** । सर्पः । **आ० ५७ । ५** ॥

**कोपः** । क्रोधशब्दं पश्यत ।

**कोपवेगः** । ऋषिः । **स० ४ । २२** ॥

**कोमलकः** । **आ० ५७ । १७** ॥

**कोलगिरिः** । **स० ३२ । ७७** ॥

**कोलाहलः** । पर्वतः । **आ० ६४ । ४८** ॥

The range hills near Chanderi, which separates Malwa from Bundelkhand, Central India.

**कोल्लः** । पर्वतः । **अश्व० ८४ । ११ ॥**

× **कोशवृद्धेरवश्यकर्तव्यत्वं । शां० १३०॥**

**कोशेश्वरः** । तीर्थविशेषः । **व० ८१ । ५७ ॥**

**कोषा** । नदी । **भी० ९ । ३४ ॥**

**कोसला** । नदी । **व० ८३ । ११ ॥**

**कोसलाः** । देशः । **भी० ९ । ४१ ॥** Ajodhya in Oudh. This was divided into two Provinces by the river Saraju, Uttara and Dakshina Kosala.

**कोहलः** । जनमेजयस्य सर्पसत्रे सदस्य ऋषिः । **आ० ५३ । ९ ॥**

**कौकुट्टकाः** । देशः । **भी० ९ । ६० ॥**

**कौणकुत्स्यः** । ऋषिः । **आ० ८ । २५ ॥**

**कौणपः** । सर्पः । **आ० ५७ । ६ ॥**

**कौणपाशनः** । सर्पः । **आ० ३५ । १४ ॥**

**कौण्डिन्यः** । ऋषिः । **स० ४ । २२ ॥**

**कौत्सः** । ऋषिः । भगीरथस्य जामाता । तद्भार्या हंसी । **अनु० २०० । २६ ॥**

**कौमोदकी** । श्रीकृष्णस्य गदा । **आ० २५१ । २८॥**

**कौरव्यः** । सर्पः । **आ० ३५ । १३ ॥ उ० १०३ । १५ ॥**

१ **कौशिकः** । कश्चन ऋषिः । यः क्रूरदृष्ट्या बलाकां पातयामास । **व० २०९ । १ ॥**

२ **कौशिकः** । **स० ४ । १८ ॥**

३ **कौशिकः** । ब्राह्मणः । यः सत्यवचनेन महान्तमनर्थमाप । **क० ७२ । ४७ ॥**

४ **कौशिकः** । जरासन्धस्य सेनापतिः । **स० २२ । ४२ ॥**

५ **कौशिकः** । विश्वामित्रः ।

**कौशिकी** । नदी । विश्वामित्रभगिनी । या नदी बभूव । **आ० २३५ । ७ ॥ व० ८२ । १४३ ॥ १११ । १ ॥ भी० ९ । १८ ॥ अनु० ६ । १० ॥** The river Kusi is a large tributary of the Ganges from the north. Its confluence with the Ganges in Bengal is called Kausiki Tirtha.

**कौसल्यः** । क्षेमदर्शी । तस्य कालकवृक्षीयेण संवादः । **शां० १०४ ॥**

१ **कौसल्या** । अम्बिका । विचित्रवीर्यभार्या । तत्पुत्रो धृतराष्ट्रः । **आ० ११५ । १८ ॥**

२ **कौसल्या** । कोसलदेशाधिपस्य भानुमतो राज्ञः कन्या । दशरथभार्या । तत्पुत्रो रामचन्द्रः । **व० २७५ । ८ ॥**

३ **कौसल्या** । सो० वं० पूरोर्भार्या । तत्पुत्रो जनमेजयः । **आ० ६३ । ८ ॥**

**कौसवी** । द्रुपदराजस्य भार्या । तस्याः सौत्रामणीति नामान्तरं । **आ० १४९ । ४९ ॥**

**कौस्तुभः** । श्रीमन्नारायणेनोरसा ध्रियमाणो मणिः । **आ० १८ । ५० ॥**

१ **क्रतुः** । ब्रह्मणो मानसः पुत्रः । **आ० ६६ । १० ॥ ६७ । ४ ॥ स० ११ । १९ ॥**

तस्य पुत्राः सूर्यानुचरा वालखिल्याः । **आ० ६७ । ९ ॥** [भा० ४ । १ ॥]

[तस्य भार्या क्रिया । भा० ४ । १ ॥ तस्य भार्या संनतिः । विष्णु० १ । १० ॥]

२ **क्रतुः** । पाञ्चालः । क्षत्रियः । कर्णेन हतः । **क० ५१ । ४६ ॥**

**क्रथकैशिकाः** । देशः । विदर्भदेशान्तर्गतः । **स० १४ । २१ ॥** In Berar, once the capital of Vidarbha.

१ **क्रथनः** । अमृतरक्षको देवः । **आ० ३२ । १८॥**

२ **क्रथनः** । असुरः । **स० ९ । १७ ॥**

३ **क्रथनः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१ । ११ ॥**

**क्रमजित्** । क्षत्रियः । **स० ४ । ३४ ॥**

१ **क्राथः** । क्षत्रियः । **आ० ६८ । ४० ॥**

२ **क्राथः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमसेनेन हतः । **क०** ४६ । १७ ॥

+ **क्रिमिः** । अलर्कनामा । तेन कर्णस्योरुभेदनं । **शां०** ३ । १३ ॥

तस्मै कस्मै चनान्यस्मै व्यासेन राज्यदानं । **अनु०** १८० ॥

**क्रिया** । दक्षप्रजापतिपुत्री । धर्मस्य पत्नी । **आ०** ६७ । १४ ॥

**क्रूरा** । क्रोधाशब्दं पश्यत ।

+ **क्रोधः** । कोपः । तस्य गर्हणं । **आ०** ४२ । ७ ॥ ७३ । ५ ॥ **व०** २९ । ३ ॥ **अनु०** १३ । ५ ॥

**क्रोधवशः** । इन्द्रजितोऽनुयायी राक्षसः । **व०** २८६ । २ ॥

**क्रोधवशा** । मृग्यादीनां माता । क्रोधाशब्दं पश्यत ।

**क्रोधवशाः** । क्रोधायाः पुत्राः काश्यपेया राक्षससौगन्धिकवनरक्षिणः । **व०** १५४ । ११ ॥

तेषां भीमसेनेन वधः । **व०** १५५ । २१ ॥

१ **क्रोधहन्ता** । कालापुत्रोऽसुरः । **आ०** ६६ । ३५

२ **क्रोधहन्ता** । क्षत्रियः । पाण्डवपक्षीयो रथसत्तमः । **उ०** १७१ । अयमेव सेनाबिन्दुरिति भाति ।

**क्रोधा** । दक्षप्रजापतिपुत्री कश्यपभार्या । तस्याः क्रोधवशेति नामान्तरं । तत्पुत्राः क्रोधवशाः । **आ०** ६६ । १२ ॥

तत्पुत्र्यो नव । मृगी मृगमन्दा हरी भद्रमनाः मातङ्गी शार्दूली श्वेता सुरभिः सुरसा चेति । **आ०** ६७ । ६०

**क्रौञ्चः** । पर्वतः । **भी०** १२ । ७ ॥ [ मैनाकस्य पुत्रः । हरि० १ । १८ ॥ ]

तद्दारणं सुब्रह्मण्येन । **श०** ४७ । ८४ ॥

**क्रौञ्चद्वीपः** । **भी०** १२ । ७ ॥

**क्रौञ्चव्यूहः** । पाण्डवानां । **भी०** ५० । ४० कौरवाणां । **भी०** ७५ । १५ ॥

**क्षत्ता** । विदुरः । **आ०** २ । १४६ ॥

**क्षत्रञ्जयः** । क्षत्रियः । धृष्टद्युम्नस्य पुत्रः । **द्रो०** १० । ५३ ॥ द्रोणेन हतः । **द्रो०** १५६ । १४ ॥

१ **क्षत्रदेवः** । क्षत्रियः । शिखण्डिनः पुत्रः । रथोत्तमः । **उ०** १७१ । १० ॥ **भी०** ९३ । १४ ॥ **द्रो०** २३ । ७ ॥ दुर्योधनपुत्रेण लक्ष्मणेन हतः । **क०** ३ । २६ ॥

**क्षत्रधर्मा** । (**क्षत्रवर्मा**) । धृष्टद्युम्नस्य पुत्रः । अर्धरथः । **उ०** १७१ । ७ ॥ द्रोणाचार्येण हतः । **द्रो०** १२५ । ६७ ॥

**क्षत्रियः** । द्वितीयो वर्णः । तस्य ब्राह्मणवर्णादुत्पत्तिः । **आ०** ६५ । ५ ॥

तस्य लक्षणं । **शां०** १८७ । ५ ॥

तस्य महिमा । **व०** १९७ ॥

तस्य धर्माः । **शां०** २७ ॥

तत्रानेकेषां नामानि । **आ०** १ । २५० ॥ युधिष्ठिरसभाप्रवेशे । **स०** ४ । २७ ॥ यमसभायां । **स०** ८ । ८ ॥ द्रौपदीस्वयंवरे । **आ०** २०१ । प्रातस्सायंस्मरणीयाः । **अनु०** २७१ । ४८ ॥

तस्य हृदयं क्षुरसदृशं नवनीतसदृशी वाक् । **आ०** ३ । १२३ ॥

**क्षमा** । गुणः । तस्या आवश्यकत्वं । **आ०** ४२ । ९ ॥

तस्याः प्रशंसनं । **व०** २९ । ३७ ॥

+ **क्षरत्वं जगतः** । **शां०** ३०८ ॥

**क्षीरवती** । नदी । **व०** ८२ । ६८ ॥

**क्षीरोदः** । क्षीरसमुद्रः । **भी०** ११ । १० ॥

तस्य मथनममृतार्थं । **आ०** १८ ॥ [भा० ८ । ६ ॥ रा० १ । ४५ ॥ विष्णु० १ । ९ ॥ पद्मपु० ३ । ९ ॥ ६ । २६० ॥]

**क्षुपः** । क्षत्रियः । **स०** ८ । १३ ॥ **अनु०** १७७ । ७३ ॥

+ **क्षेत्रमहिमा। आ० २३४॥ व० ७९-८२॥ अनु० ६४॥ १७०॥**

+ **क्षेत्रक्षेत्रज्ञसम्बन्धकथनं। अश्व० ५०॥**

१ **क्षेमकः।** क्षत्रियः। **स० ४। २७॥**

२ **क्षेमकः।** सर्पः। **आ० ३५। ११॥**

**क्षेमङ्कर।** क्षत्रियः। त्रिगर्तः। **व० २६६। ७॥**

**क्षेमदर्शी।** क्षत्रियः। कौसल्यनृपसुतः। तस्य कालकवृक्षीयेण सह संवादः। **शां० १०४॥**

१ **क्षेमधूर्तिः।** साल्वस्य सचिवः सेनापतिश्च। **व० १६। ११॥**

तस्य साम्बेन पराजयः। **व० १६। १६॥**

तस्य दुर्योधनपक्षं प्रविष्टस्य बृहत्क्षत्रेण वधः। **द्रो० १०७। १-८॥**

२ **क्षेमधूर्तिः।** क्षत्रियः। करूशाधिपतिः। भीमसेनेन हतः। **क० ९। ३२-४५॥**

३ **क्षेमधूर्तिः।** क्षत्रियः। सो० वं० धृतराष्ट्रस्य पुत्रः। **आ० ६८। १००॥**

४ **क्षेमधूर्तिः।** क्षत्रियः। बृहन्तस्य भ्राता। तस्य सात्यकिना सह युद्धं। **द्रो० २५। ४८॥**

**क्षेमशर्मा।** क्षत्रियः। दुर्योधनपक्षीयः। **द्रो० २०। ७॥**

**क्षेमा।** अप्सराः। **आ० १२२। ४४॥**

## ख.

**खगमः।** विप्रः। यस्तार्णसर्पेणात्मानं भीषितवन्तं स्वसखं सहस्रपादमृषिं त्वं डुण्डुभो भवेति शशाप। **आ० ११। १॥**

+[**खगोलवर्णनं।** भा० ५। २१॥ वायु० ५१-५३॥ विष्णु० २। ८-१२॥ शिवपु० उमासं १९॥]

+ **खड्गः।** असिः। तदुत्पत्तिकथा। **शां० १६४॥**

तद्युद्धे चतुर्दशमण्डलानि। **क० १६। ३१॥**

**खड्गी।** क्षत्रियः। सो० वं० धृतराष्ट्रपुत्रः। भीमेन हतः। **क० ८८। १९॥**

**खनकः।** विदुरसुहृत्। यो वारणावते लाक्षागृहे पाण्डवानां बहिर्गमनाय प्रच्छन्नां सुरङ्गां चकार। **आ० १५९। १॥**

**खनीनेत्रः।** क्षत्रियः। सू० वं० इक्ष्वाकुवंश्यस्य विविंशस्य पुत्रः। तत्पुत्रः सुवर्चाः। **अश्व० ४।७॥**

१ **खरः।** राक्षसः। राकायाः पुत्रः। शूर्पणखाया दूषणस्य च साक्षाद्भ्राता। **व० २७६। ८॥**

तस्य वधः श्रीरामेण। **व० २७८। ५०॥**

२ **खरः।** दूषणभ्रातुरन्यो राक्षसः। **व० २८६। २॥**

**खर्वटाः।** देशः। **स० ७८। ५७॥**

**खलुः।** नदी। **भी० ९। २८॥**

**खषाः।** देशः। **स० ७८। ७९॥**

**खाण्डवं।** सरस्वतीदृषद्वत्योः पूर्वस्यां दिशि विद्यमानं वनं। तद्दाहः। **आ० २५०-२६०॥**

तद्दाहः पञ्चदशदिनानि। **आ० २५४। ४६॥** एकविंशतिदिनानि। **आ० २६०। १५॥**

तद्दाहसमये तक्षकस्य कुरुक्षेत्रे स्थितिः। **आ० २५४। १७॥**

तद्दाहसमयेऽर्जुनस्येन्द्रेण सह युद्धं। **आ० २५३॥**

**खाण्डवदाहपर्व। आ० २४८-२५३॥**

**खाण्डवप्रस्थः।** इन्द्रप्रस्थः। **आ० ६१। ४७॥ २२७। ४५॥**

**खाशीराः।** देशः। **भी० ९। ६८॥**

## ग.

**गगनमूर्धा।** असुरः। दनुपुत्रः। **आ० ६६। २४॥**

**गङ्गा।** नदी। तदभिमानिदेवता च। **आ० ६३।५०॥ भी० ६। ४५॥ ९। १४॥**

तस्याः भूमौ वसेति शापदानं। **आ० १०२। ४॥**

तस्याः शान्तनुना विवाहः। **आ० १०४॥**

तया पुत्रसप्तकहननं। **आ० १०५॥**

तया शान्तनुं त्यक्त्वा शिशुं भीष्ममादाय स्वलोकगमनं। **आ० १०६। ४८॥**

तस्याः भूमौ नदीरूपेणावतरणं। **व० १०९। ८॥** [रा० १। ४३॥ भा० ९। ९॥ मार्कण्डेय० ५३॥]

तस्या भगीरथपुत्रीत्वं। **द्रो० ६०। ८॥**

तस्याः कलियुगे पुण्यतमत्वं । **व० ८३ । ९०** ॥
तस्या आगमनं परशुरामेण सह युध्यतो भीष्मस्य सकाशे । **उ० १८२ । १५** ॥
तस्याः भीष्ममरणदुःखितायाः श्रीकृष्णेन समाश्वासनं । **अनु० २७४ । २०** ॥
तन्महिमा । **अनु० ६५** ॥ [भा० ५ । १७ ॥]
**गङ्गाद्वारं** । हरिद्वारनामकं क्षेत्रं । तस्य मायापुरीत्यपि नाम । तत्र प्रतीपेन तपश्चरणं । तत्र गङ्गाया आगमनं च । **आ० १०३ । १** ॥ Hardwar–this is also called Mayapuri.
तत्र भरद्वाजाद्द्रोणोत्पत्तिः । **आ० १४० । ३४** ॥
तत्र नागकन्यया स्नानार्थं गङ्गायामवतीर्णस्यार्जुनस्य स्वलोकं प्रति नयनं । **आ० २३४ । ६–२०** ॥
**गङ्गाह्रदः** । तीर्थं । **व० ८१ । १७६** ॥
१ **गजः** । वानरः । **व० २८४ । ३** ॥
२ **गजः** । क्षत्रियः । शकुनेर्भ्राता । इरावता हतः । **भी० ९० । ३०** ॥
+ **गजः** । हस्ती । तज्जातेरुत्पत्तिः । **आ० ६७ । ६६** ॥
+ **गजकच्छपोपाख्यानं** । **आ० २९ । १३** ॥ **अनु० २५ । १६** ॥
**गजकर्णः** । यक्षः । **स० १० । १७** ॥
**गणवृद्धिप्रकारः** । **शां० १०७ । १०** ॥
**गणेशः** । उमापुत्रो हेरम्बः । तस्य भारतलेखनाय वेदव्याससमीपे आगमनं । **आ० १ । ११२** ॥
[तस्योत्पत्तिः । लिङ्गपु० १०५ ॥ ब्रह्मवै० गणपतिखं० ८ ॥]
**गण्डकः** । देशः । पाञ्चालदेशात्पूर्वतो विद्यमानः । **स० ३० । ४** ॥
**गण्डकण्डूः** । यक्षः । **स० १० । १६** ॥
**गण्डा । (चण्डा)** । पशुसखस्य भार्या । **अनु० १४१ । ५** ॥
तन्नामनिर्वचनं । **अनु० १४२ । ४१** ॥
**गदः** । श्रीकृष्णस्य वैमात्रेयो भ्राता । **आ० २०१ । १७** ॥ **२३९ । १०** ॥ **स० ४ । ३६** ॥
[वसुदेवस्य पुत्रः । तन्माता रोहिणी । अयं बलरामस्य सगर्भ्यः । भा० ९ । २४ ॥]
तस्य मरणं । **मौ० ४ । ४६** ॥
+ **गदायुद्धं** । भीमदुर्योधनयोः । **श० ३३ । ५८** ॥ भीमजरासन्धयोः । **स० २४** ॥ तत्प्रकाराः । **स० २४ । १३** ॥
१ **गन्धमादनः** । बदरिकाश्रमसमीपस्थः पर्वतः । **भी० ६ । ३४** ॥
तत्रार्जुनेन गमनं । तत्रस्थानां पराजयश्च । **स० २९ । ३८** ॥
तत्र पाण्डवानां गमनं । **व० १४३ । २३** ॥
तत्र सौगन्धिकपुष्पहरणार्थं भीमसेनस्य गमनं । **व० १५३ । ३२** ॥
२ **गन्धमादनः** । वानरः । **व० २८४ । ५** ॥ A part of the Rudra–Himalaya. The range of Gandhamadana commences at a short distance to the north-east of Badarikashrama.
+ **गन्धर्वाः** । देवयोनिविशेषाः । तेषां नामानि । **आ० ६६ । ४७** ॥
**गन्धर्वी** । अश्वानां माता । **आ० ६७ । ६८** ॥
**गन्धवती** । सत्यवती । **आ० ६४ । १२४** ॥
१ **गयः** । क्षत्रियः । अधूर्तरजसः पुत्रः । **स० ८ । १८** ॥ **श० ३९ । २०** ॥
तस्य यज्ञः । **व० ९३ । २०** ॥ **१२२** ॥
तस्य चरित्रं । **द्रो० ६६** ॥ **शां० २८ । १११** ॥
२ **गयः** । क्षत्रियः । सो० वं० आयोः पुत्रः । **६९ । २८** ॥
३ **गयः** । पर्वतः । **व० ८५ । ८** ॥
**गया** । क्षेत्रं । **आ० २३५ । ७** ॥ **व० २८।८१** ॥
[तन्माहात्म्यं । वायुपु० १०६ ॥]
**गयाशिरः** । गयास्थः प्रदेशविशेषः । **व० ८६ । ११** ॥
**गरिष्ठः** । ऋषिः । इन्द्रसभायां । **स० ७ । १३** ॥
**गरुडः** । कश्यपपुत्रः । तन्माता विनता । **आ०**

**२३ । ५ ॥ ६६ । ४० ॥ स० ९ । १५ ॥ ५६ । ३३ ॥ उ० ११२ ॥**
तदुत्पत्तिः । **आ० २३ । ५ ॥ अनु० २१ ॥**
वालखिल्यतपसस्तदुत्पत्तिकारणत्वं । **आ० ३१ ॥**
तस्य पक्षीन्द्रत्वेऽभिषेकः । **आ० ३१ । ३८ ॥**
तस्य स्तुतिः देवैः कृता । **आ० २३ । १५ ॥**
तस्य जातमात्रस्य मातुरन्तिकगमनं । **आ० २५ । १ ॥**
तेन सर्पाणां वहनं । **आ० २५ । ५ ॥**
तेन अमृताहरणार्थं गमनसमये मार्गे निषादानां भक्षणं । **आ० २८ । १९ ॥**
तन्नामनिर्वचनं । **आ० ३० । ७ ॥**
तेनामृतसमीपेऽग्निदर्शनं । **आ० ३२ । २२ ॥ अनु० २७ ॥**
तेनामृतसमीपे चक्रदर्शनं । **आ० ३३ । २ ॥**
तेन विष्णोर्वाहनत्वेन ध्वजत्वेन च भवनं । **आ० ३३ । १८ ॥**
तेनामृतहरणं । **आ० ३४ ॥ अनु० २८ ॥**
तस्य सुपर्ण इति नामप्राप्तिः । **आ० ३३ । २४ ॥**
तस्येन्द्रेण वज्रायुधप्रहारः । **आ० ३३ । १९ ॥**
तस्य पुत्राः । सुमुखः सुनामा सुनेत्रः सुवर्चाः सुरुक् सुबलश्च । तथा सुवर्णचूडादयश्चानेके । **उ० १०१ । २ ॥**
तदंसे विष्णुना स्वबाहुनिक्षेपणेन तद्दर्पखण्डनं । **उ० १०५ । २० ॥**
तेन गालववहनं । **उ० १०७ ॥**
तस्य शाण्डिल्या अध्यापनात्पक्षहानिः । **उ० ११३॥**
तस्य कश्यपेन सह नारायणमहिमविषये संवादः । **अनु० ४० ॥**
तस्य मुनिगणेन सह नारायणमहिमविषये संवादः । **अनु० ४१-४२ ॥**
तस्य बदरिकाश्रमगमनं । **अनु० ४१ ॥**
तदुपाख्यानं परशुरामप्रोक्तं । **अनु० १९ ॥**
**गरुडव्यूहः** । कौरवाणां । भीष्मेण रचितः । **भी० ५६ । २ ॥**
**गर्दभिः** । गार्दभिशब्दं पश्यत ।

**गर्गः** । ऋषिः । **अनु० ४९ । ३८ ॥** [यादवानां पुरोहितः । भा० १० । ८ ॥ दिवोदासस्य पौत्रः प्रतर्दनस्य पुत्रः। तद्भ्राता वत्सः। वायु०९२॥]
**गर्गस्रोतः** । तीर्थं । **श० ३८ । १३ ॥**
**गर्दभीमतङ्गोपाख्यानं । अनु० ३ ॥**
**गर्भः** । तस्योत्पत्तिप्रकारः । **आ० ८४ । ९ ॥** [भा० ३ । ३१ ॥]
तत्प्रवेशो जीवस्य । **अश्व० १९ ॥ स्त्री० ४ ॥ अनु० २२८ ॥** [भा० ३ । ३१ ॥ मार्कण्डे० ११ ॥ विष्णु० ६ । ५ ॥]
तन्नाशकाः ग्रहाः । **व० २३० । २८ ॥**
**गवयः** । वानरः । **व० २८४** । ३ ॥
**गवल्गणः** । धृतराष्ट्रस्य सूतो मन्त्री च । तत्पुत्रः सञ्जयः । **आ० ६४** । १३९ ॥
१ **गवाक्षः** । क्षत्रियः । शकुनिभ्राता । इरावता हतः । **भी० ९०** । ३०-४९ ॥ भीमसेनेन हतः । **द्रो० १५८ । २३ ॥**
२ **गवाक्षः** । गोलाङ्गूलो वानरः । **व० २८४।४ ॥**
**गविजातः** । ऋषिः । यश्च्यवनऋषिसदृशं मूल्यं गौरिति नहुषायाकथयत् । **अनु० ८६ । २२ ॥**
**गाङ्गेयः** । गङ्गापुत्रो भीष्मः । **आ० १०७।९६ ॥**
**गाण्डिवं । गाण्डीवं** । अर्जुनस्य धनुः । **आ० २५१ । २० ॥**
तन्नामनिर्वचनं । **उ० ९८ । १९ ॥**
तेनार्जुनेन रुद्रशिरसि प्रहारः । **व० ३९ । ४८ ॥**
तस्य समुद्रे प्रक्षेपः । **महा० १ ॥**
**गाधिः । गाधी** । क्षत्रियः । सो० वं० कान्यकुब्जदेशाधिपतिः । जह्नुवंशोत्पन्नस्य कुशिकस्य पुत्रः । तन्माता पुरुकुत्सस्य पुत्री । तत्पुत्रो विश्वामित्रः । **आ० १९१** । ३ ॥ [भा० ९ । १५ ॥ हरि० १ । २७ ॥]
तस्य पुत्री सत्यवती । ऋचीकभार्या । **व० ११६ ॥ शां० ४८ ॥ अनु० ७ ॥**
**गान्धर्वग्रहः । व० २३० । ३९ ॥**
**गान्धारराजः** । शकुनिः । **स० ८३ । १३ ॥**

१ **गान्धाराः** । सिन्धुनदीसमीपस्थो देशः । **भी० ९ । ५३** ॥ तस्य राजधानी तक्षशिला पुष्करावती च । The country of Gandhara lies along the Kabul river between the Kunar and the Indus. Its capital was Purushapura now called Peshawar.

२ **गान्धाराः** । शकुन्यादयः ।

**गान्धारी** । सुबलस्य पुत्री । धृतराष्ट्रभार्या । तत्पुत्राः दुर्योधनादयः शतं । पुत्री दुश्शला । एतेषां नामानि धृतराष्ट्रशब्दे द्रष्टव्यानि । **आ० ६३ ।** ५८ ॥

तस्या भ्रातरः शकुन्यादयस्त्रयोदश । तेषां नामानि शकुनिशब्दे द्रष्टव्यानि ।

तस्याः स्वसारः धृतराष्ट्रस्यैव भार्या दश । सत्यव्रता सत्यसेना सुदेष्णा संहिता तेजश्श्रवा सुश्रवा निकृतिः शुभा शम्बठा दशार्णा इति । **आ० ११९ ।** २२ ॥

तस्या धर्महन्तृदेवतांशत्वं । **आ० ६४** । १५३ ॥

तस्या विवाहः । **आ० ११९** ॥

तस्या गर्भोत्पत्तिः । **आ० १२६** । १२ ॥

तया कुन्त्याः पुत्रोत्पत्तिश्रवणेन स्वोदरघातः । **आ० १२९** । २५ ॥

तस्याः दुर्योधनवधं शोचन्त्याः श्रीकृष्णेन समाश्वासनं । **श० ६४** ॥

तया श्रीकृष्णं प्रति स्वपुत्रादिशवप्रदर्शनं । **स्त्री० १८–२५** ॥

तया "इत आरभ्य षट्त्रिंशे वर्षे तव ज्ञातयो विनश्यन्त्विति श्रीकृष्णाय शापदानं । **स्त्री० २५** । ३९ ॥

तस्या भीमसेनेन सह विवादः । दुर्योधनवधस्य युक्तायुक्तताविषये । **स्त्री० १४** ॥

तद्दृष्टिपातेन युधिष्ठिरस्य कुनखीभावः । **स्त्री० १५** । ७ ॥

तया पट्टवस्त्रेण स्वनेत्रपिधानं । **स्त्री० १५** । ७ ।

तया द्रौपदीसमाश्वासनं । **स्त्री० १५** । १७ ॥

तस्या व्यासप्रसादाद्दिव्यचक्षुःप्राप्तिः । **स्त्री० १६** । ३ ॥

तस्या दुर्योधनशवालिङ्गनेन परिदेवनं । **स्त्री० १७** ॥

तस्या मृतबन्धुदर्शनेन श्रीकृष्णसमीपे परिदेवनं । **स्त्री० १७—२५** ॥

तस्या धृतराष्ट्रेण सह तपोवनगमनं । **आश्र० १७** ॥

तस्यास्तपोवने दावाग्नौ प्रवेशः । **आश्र० ३९** ॥

२ **गान्धारी** । अजमीढस्य तृतीया भार्या । **आ० ६३** । ३९ ॥

**गायत्री** । देवता तदभिमन्यमानो मन्त्रश्च । तज्जपमहिमा । **अश्व० ९९** ॥ **११५** । १८ ॥

१ **गार्ग्यः** । ऋषिः । [वेणुहोत्रस्य पुत्रः । वायु० ९२ ॥] तेन धर्मरहस्यकथनं । **अनु० १९०** । ९ ॥

तत्पुत्रहिंसनेन जनमेजयस्य ब्रह्महत्याप्राप्तिः । **शां० १५१** ॥ [हरि० १ । ३० ॥]

२ **गार्ग्यः** । विश्वामित्रऋषेः पुत्रः । **अनु० ७** । ५५ ॥

**गार्दभिः** । विश्वामित्रऋषेः पुत्रः । **अनु० ७**।५९॥

**गार्हस्थ्यं** । गृहस्थशब्दं पश्यत ।

१ **गालवः** । विश्वमित्रशिष्य ऋषिः । **उ० १०६** ॥ इन्द्रसभायां । **स० ७** । १० ॥ युधिष्ठिरसभायां । **स० ४** । २१ ॥

तदुपाख्यानं । **उ० १०६—११९** ॥

तस्य विश्वामित्राय दातव्यैकतश्श्यामकर्णहयरूपगुरुदक्षिणार्जनार्थं गरुडमारुह्य नानादेशगमनं । **उ० १०७** ॥

तस्य ययातिसमीपगमनं । **उ० ११४** ॥

तस्य पुत्रः वृद्धकन्याजानिः शृङ्गवान् । **श० ५३** ॥

तस्य नारदेन सह श्रेयस्साधनविषये संवादः । **शां० २९३** ॥

तेन महादेवकथाकथनं । **अनु० ४९** । ५२ ॥

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३** । ३७ ॥

२ **गालवः** । विश्वामित्रपुत्रः । **अनु० ७** । ५२ ॥ [हरि० १ । १२ ॥ वायु० ८८ ॥ ब्रह्म० ७॥] पूर्वोक्तोप्ययमेवेति भाति ।

२ **गोपतिः** । पाण्डवपक्षीयः पाञ्चाल्यः । **द्रो० २३ । ५१** ॥

३ **गोपतिः** । क्षत्रियः । शिबिपुत्रः । **शां० ४८ । ८५** ॥ श्रीकृष्णेन हतः । **व० १२ । ३४** ॥

४ **गोपतिः** । अग्निविशेषः । तस्य विश्वभुगिति नामान्तरं । **व० २२१ । २७** ॥

**गोपराष्ट्राः** । देशः । **भी० ९ । ४४** ॥

**गोपालकक्षः** । देशः । भीमसेनेन विजितः । **स० ३१ । ३** ॥

**गोप्रतारं** । सरयूसंबन्धितीर्थं । **व० ८२ । ७०** ॥ Gopratara–a place of pilgrimage on the bank of the Saraju at Fyzabad.

**गोमती** । नदी । **स० ९ । २७** ॥ **व० ८२ । ७२** ॥ **भी० ९ । १८** ॥ The river Gomti in Oudh.

**गोमतीगङ्गासङ्गमः** । तीर्थं । **व० ८२ । ८०** ॥

१ **गोमन्तः** । क्रौञ्चद्वीपस्थः पर्वतः । **भी० १२ । ८** ॥

२ **गोमन्तः** । द्वारकासमीपे विद्यमानः पर्वतः । **स० १४ । ५७** ॥ An isolated mountain on the northernside of the western ghats.

[ तमारूढयोः श्रीकृष्णरामयोः दाहनार्थं जरासन्धेन गोमन्तस्य दाहः । हरि० २ । ४२ ॥ ]

**गोमन्ताः** । देशः । **भी० ९ । ४३** ॥

**गोमुखः** । मातलेः पुत्रः । इन्द्रपुत्रस्य जयन्तस्य सारथिः । **उ० १०० । १८** ॥

**गोरथः** । मगधदेशस्थः पर्वतः । **स० २० । ३०** ॥

+ **गोलाङ्गूलः** । वानरजातिविशेषः । तेषां हर्योः उत्पत्तिः । **आ० ६७ । ६४** ॥

**गोलोकः** । ब्रह्मलोकादुपरितनो लोकः । **अनु० ११७** ॥

१ **गोवर्धनः** । पर्वतः । तदुद्धरणं श्रीकृष्णेन । **स० ५३ । २४** ॥ [ भा० १० । २५ ॥ हरि० २ । १८ ॥ विष्णु० ५ । ११ ॥ ]

२ **गोवर्धनः** । बाह्लीकदेशस्थो वटवृक्षः । **क० ३७ । १८** ॥

**गोवासनः** । शैब्यः । क्षत्रियः । दुर्योधनपक्षीयः । **द्रो० ९५ । ३९** ॥

**गोवितत**ः । यज्ञः । अश्वमेधप्रभेदः । **आ० १०१ । ५** ॥

१ **गोविन्दः** । पर्वतः । **भी० १२ । १९** ॥

२ **गोविन्दः** । श्रीकृष्णः । तन्नामनिर्वचनं । **उ० ६९ । १३** । **शां० ३५२ । ५** ॥

**गोवृषध्वजः** । कृपाचार्यः । **द्रो० १०५ । १४** ॥

**गोव्रतिनः** । गोव्रतवन्त ऋषयः । **उ० ९९ । १४** ॥

**गोशृङ्गः** । निषादभूमिसमीपस्थः पर्वतः । **स० ३२ । ५** ॥ तस्य राजा श्रेणिमान् ॥

**गौः** । गोशब्दं पश्यत ॥

१ **गौतमः** । *उचथ्यपुत्रस्य दीर्घतमसः पुत्रः । तन्माता प्रद्वेषी । **आ० ११३ । २४** ॥ **स० ४ । २३** ॥ **११ । १९** ॥

तस्य पत्नी अहल्या । **अश्व० ५६ । २६** ॥

तस्यात्रिणा सह ब्राह्मणमाहात्म्यविषये संवादः । **व० १८८** ॥

तस्याङ्गिरसा सह नदीमाहात्म्यविषये संवादः । **अनु० ६४** ॥

तन्नामनिर्वचनं । **अनु० १४२ । ३३** ॥

तस्य शिष्यः जामाता च उदङ्कः । **अश्व० ५६** ॥

तस्य यमेन सह मातापित्रोः परिचर्यया तदृणापनोदनविषये संवादः । **शां० १२९** ॥

[तेनानावृष्टिकालेऽन्नदानादिना ब्राह्मणरक्षणं । तस्य गोहत्याप्राप्तिः । तेन ब्राह्मणेभ्यः शापदानं । देवीभा० १२ । ९ ॥ शिवपु० कोटिरुद्रसं० २५–२७ ॥]

* दीर्घतमस एव गौतम इति नाम । तत्पुत्रत्वादहल्यापतेरपि गौतम इत्यमुख्यं नामेति संप्रदायविदः ।

२ **गौतमः** । मध्यदेशीयः कश्चन ब्राह्मणः । कृतघ्नमित्रद्रोहिदृष्टान्ततया तत्कथा । **शां० १६७ ॥ १७२ ॥**

तेन राजधर्मनामकबकपक्षिहननं । **शां० १७१ ॥**

३ **गौतमः** । कश्चन ब्राह्मणः । तस्य धृतराष्ट्ररूपिणेन्द्रेण सह हस्तिविषये विवादः । **अनु०१५९॥**

४ **गौतमः** । एकतद्वितत्रितानां पिता । **श० ३७ । ९ ॥**

५ **गौतमः** । गोतमगोत्रोत्पन्नो मेधातिथिः । तत्पुत्रः चिरकारी । **शां० २७२ । ९ ॥**

६ **गौतमः** । दीर्घतमाः । **स० २१ । ५ ॥**

१ **गौतमी** । स्थविरा ब्राह्मणी । तस्या लुब्धकेन संवादः । **अनु० १ । १८ ॥**

२ **गौतमी** । द्रोणाचार्यभार्या कृपी । **आ० १४० । ४९ ॥**

३ **गौतमी** । काचन देवता ब्रह्मसभायां । **स० ११ । ४० ॥**

**गौरकाः** । गौरनामकदेशस्था जनाः । **स०७८।८९॥**

**गौरपृष्ठः** । क्षत्रियः । यमसभायां । **स० ८ । २१ ॥**

**गौरमुखः** । शमीकशिष्यः ऋषिः । **आ० ४२ । १४ ॥ ५० । १३ ॥**

**गौरवाहनः** । क्षत्रियः । **स० ३७ । १५ ॥**

**गौरशिराः** । ऋषिः । **स० ७ । ११ ॥**

**गौराश्वः** । क्षत्रियः । यमसभायां । **स० ८ । १८ ॥**

१ **गौरी** । पार्वती ।

२ **गौरी** । वारुणीदेवी । **स० ९ । ७ ॥**

३ **गौरी** । नदी । **भी० ९ । २५ ॥** A tributary of the Kabul river.

+ **ग्रन्थग्रन्थिः** । व्यासेन गणेशलेखने विलम्बजननाय महाभारते ग्रथिताः कठिनश्लोकाः । **आ० १ । ११६ ॥**

**ग्रन्थिकः** । नकुलस्य विराटनगरे नाम । **वि० १२ । १० ॥**

+ **ग्रहभेदाः** । **व० २३० ॥**

**ग्रहाः** । सूर्यादयो नव । **स० ११ । २९ ॥**

तेषां गतिप्रकारवर्णनं । **व० १६४ । २६ ॥** [भा० ५ । २२ ॥]

तेषां मण्डलप्रमाणवर्णनं । **भी० १२ । ३९–४७ ॥**

**ग्राहः** । नक्रः । तेन द्रोणाचार्यग्रहणं । अर्जुनेन तद्धननं च । **आ० १४३ । १२ ॥** तद्रूपाणामप्सरसामर्जुनेन नारीतीर्थादुद्धरणं । **आ० २३७॥**

## घ.

**घटजानुकः** । ऋषिः । **स० ४ । १९ ॥**

**घटस्नञ्जयाः** । देशः । **भी० ९ । ६३ ॥**

**घटोत्कचः** । भीमसेनपुत्रः । भैमसेनिः । हैडिम्बः । राक्षसः । तन्माता हिडिम्बा । **आ० ६१ । २६ ॥ ६३ । ७२ ॥ ६४ । १६६ ॥** रथयूथपयूथपः । **उ० १७२ । ६ ॥**

तन्नामनिर्वचनं । **आ० १६९ । १३ ॥**

तस्योत्पत्तिः । **आ० ६१ । २६ ॥ ६४ । १६६ ॥ १६९ । ६ ॥**

तेन राजसूययागकरग्रहणार्थं लङ्कागमनं । **स० ३२ । ७६ ॥ ३४ । २ ॥**

तत्पुत्रः अञ्जनपर्वा । अश्वत्थाम्ना हतः। **द्रो०१५७।८९**

तस्यागमनं पाण्डवसमीपे । **व० १४७ । ४ ॥**

तेन द्रौपदीवहनं । **व० १५६ ॥**

तस्य युद्धं । **भी० ६४ ॥**

तस्य वङ्गेश्वरेण सह युद्धं । **भी० ९२ ॥**

तेनालायुधवधः । **द्रो० १७९ । ३२ ॥**

तेनालम्बुसवधः । **द्रो० १०९ । ७५ ॥**

तस्याश्वत्थाम्ना सह युद्धं । **द्रो० १५७ ॥**

तस्य कर्णेन सह युद्धं । **द्रो० १७४ ॥**

तेनालंबलवधः । **द्रो० १७५ । २४ ॥**

तस्य वधः कर्णेनार्जुनमारणार्थं संरक्षितया ऐन्द्या शक्त्या । **द्रो० १८० । ५८ ॥**

तदयोग्यताकथनं श्रीकृष्णेन युधिष्ठिरं प्रति । **द्रो० १८२ । २६–२७ ॥**

**घटोत्कचवधपर्व** । **द्रो० १५४—१८४ ॥**

**घटोदरः** । असुरः । **स० ९ । १७** ॥
**घण्टाकर्णः** । स्कन्दपार्षदः । **श० ४६ । २४** ॥
**घूकः** । दिवान्धः । चतुर्थमुलूकशब्दं पश्यत ।
**घूर्णिका** । देवयान्या धात्री । **आ० ७२ । ३५**॥
**घृतवती** । नदी । **भी० ९ । २३** ॥
**घृताची** । अप्सराः । **आ० १८० । २** ॥ **१३२ । ४७** ॥ **स० १० । ११** ॥ **अनु० ५० । ४७** ॥ **२७१ । १५** ॥
तद्दर्शनाद्भरद्वाजऋषेः रेतस्स्खलनं । तस्माद्द्रोणोत्पत्तिश्च । **आ० १४० । ३६** ॥
तस्यां शुकपक्षिरूपिण्यां व्यासाच्छुकोत्पत्तिः । **शां० ३३२** ॥
तस्यां प्रमतिऋषेः रुरोरुत्पत्तिः । **आ० ५ । ९** ॥
**घोरः** । ऋषिः । अङ्गिरसः पुत्रः । **अनु० १३२ । ४३** ॥
**घोषयात्रापर्व** । **व० २३७—२५८** ॥

## च.

**चक्रः** । सर्पः । **आ० ५७ । ६** ॥
**चक्रं** । श्रीकृष्णायुधं सुदर्शनं । **आ० २५१ । २३** ॥
[ तत्स्तुतिर्दुर्वाससो रक्षणार्थमम्बरीषकृता । भा० ९ । ५ ॥ ]
**चक्रकः** । विश्वामित्रपुत्रः । **अ० ७ । ५४** ॥
**चक्रदेवः** । यादवः । **स० १४ । ६०** ॥
**चक्रधर्मा** । विद्याधरः । **स० १० । २८** ॥
**चक्रव्यूहः** । कौरवाणां । **द्रो० ३३ । १४** ॥
अस्य पद्मव्यूह इत्यपि नाम । **द्रो० ३४ । २** ॥
**चक्राः** । देशः । **भी० ९ । ४५** ॥
**चक्रातयः** । देशः । **भी० ९ । ४५** ॥
**चण्डकौशिकः** । ऋषिः । कक्षीवतः पुत्रः । यस्य प्रसादाद्बृहद्रथस्य जरासन्धोत्पत्तिः । **स० १७ । २४** ॥
**चण्डतुण्डकः** । गरुडपुत्रः । **उ० १०१ । ९** ॥
**चण्डभार्गवः** । च्यवनवंश्यः ऋषिः । तेन जनमेजयस्य सर्पसत्रे हौत्रकरणं । **आ० ५३ । ५** ॥
**चण्डा** । गण्डाशब्दं पश्यत ।
**चण्डालः** । चतुर्वर्णबहिष्कृतो नीचजातीयः ।
तस्य राज्ञा सह ब्रह्मस्वापहारस्यानर्थहेतुतायां संवादः । **अनु० १५८** ॥
तेन सह विश्वामित्रस्य संवादः । अभक्ष्यभक्षणेनाप्यात्मरक्षणविषये । **शां० १४१** ॥
+ **चण्डालत्वापादकानि कर्माणि** । **अनु० २२३** ॥
**चतुर्थदिवसयुद्धारंभः** । **भी० ६०** ॥ तत्समाप्तिः । **भी० ६४** ॥
**चतुर्दशदिवसयुद्धारंभः** । **द्रो० १** ॥ तत्समाप्तिः । **द्रो० १८७** ॥
+ **चतुर्युगवर्णनं** । युगशब्दं पश्यत ।
१ **चन्द्रः** । नवग्रहेष्वन्यतमः । [ अत्रिऋषिपुत्रः । भा० ४ । १॥] अयं स्वायंभुवमन्वन्तरीयः ॥
सः धर्मप्रजापतेर्वसुम्यां पत्न्यां जातः । अष्टवसुष्वन्यतमः । **आ० ६७ । १८** ॥ अस्य ग्रहत्वं वसुत्वं चास्ति । अयं वैवस्वतमन्वन्तरीयः । तत्पुत्रो वर्चाः ।
तस्य पत्न्यः अश्विन्यादयो दक्षप्रजापतिपुत्र्यः सप्तविंशतिः । **आ० ६७ । १६** ॥
तस्य दक्षप्रजापतिशापाद्यक्ष्मरोगप्राप्तिः । प्रभासतीर्थे निमज्जनेन तन्निवृत्तिश्च । **श० ३६** ॥
[ तेन बृहस्पतिभार्यायास्तारायाः परिग्रहः । तस्यां बुधोत्पादनं च । भा० ९ । १४ ॥ हरि० १ । २५ ॥ पद्म० ५ । १२ ॥ ब्रह्म० ९ ॥ वायु० ९० ॥ मत्स्य० २३ ॥ देवीभा० १ । ११ ॥]
२ **चन्द्रः** । असुरः । दनुपुत्रः । **आ० ६६ । २७** ॥
१ **चन्द्रकेतुः** । क्षत्रियः । दुर्योधनपक्षीयः । **द्रो० ४८ । १५** ॥
**चन्द्रकेतुः** । कृपाचार्यस्य चक्ररक्षकः । **वि० ६१ । १६** ॥
**चन्द्रदेवः** । क्षत्रियः । पाञ्चाल्यः । कर्णेन हतः । **क० ४४ । २९** ॥

**चन्द्रभागा** । नदी । **स० ९ । २३ ॥ भी० ९ । १५ ॥ अनु० ६४ । ७**

+ **चन्द्रमण्डलं । भी० १२ । ४२** ॥ तत्र द्वीपानां सत्वं । **भी० ५ । १६** ॥

**चन्द्रमा** । नदी । **भी० ९ । २९** ॥

**चन्द्रमाः** । दनुपुत्रोऽसुरः । **आ० ६६ । २७** ॥

+ **चन्द्रवंशः । आ० ६९** ॥ [विष्णु० ४ । ६ ॥ भा० ९ । १४ ॥ वायु० ९१ ॥ मत्स्य० २४ ॥]

**चन्द्रवर्मा** । क्षत्रियः । काम्भोजराजः । **आ० ६८ । ३२** ॥

१ **चन्द्रसेनः** । क्षत्रियः । **स० ३१ । २५** ॥ रथोदारः । **उ० १७१ । १९** ॥ अश्वत्थाम्ना हतः । **द्रो० १५७ । १८३** ॥

२ **चन्द्रसेनः** । शल्यस्य चक्ररक्षकः । युधिष्ठिरेण हतः । **श० ११ । ५३** ॥

३ **चन्द्रसेनः** । क्षत्रियः । समुद्रसेनराजपुत्रः । **आ० २०१ । ११ ॥ द्रो० २३ । ६१** ॥ अश्वत्थाम्ना हतः । **द्रो० १५७ । १८३** ॥

**चन्द्रहर्ता** । सिंहिकापुत्रोऽसुरः । **आ० ६६ । ३१** ॥

**चन्द्रोदयः** । क्षत्रियः । विराटभ्राता । **द्रो० १५९ । ४१** ॥

**चमसोद्भेदं** । सरस्वत्याः प्रकाशस्थानं तीर्थं । **व० ८६ । २० ॥ १३२ । ५** ॥

**चम्पकारण्यं । व० ८२ । १३३** ॥

**चम्पा** । अङ्गदेशस्य राजधानी । **व० ८३ । १४ ॥ ११४ । १५** ॥ [हरिश्चन्द्रप्रपौत्रेण चम्पनाम्ना राज्ञा निर्मिता । भा० ९ । ८ ॥] Champanagar near Bhagalpur. It was the ancient capital of Anga.

**चर्मण्वती** । दक्षिणपाञ्चालेषु विद्यमाना नदी । **स० ९ । २५ ॥ ३२ । ७** ॥ सा चम्पानगर्यां गङ्गायां मिलति । **व० ३०९ । २६** ॥ The river Chambal.

तदुत्पत्तिः रन्तिदेवयज्ञीयचर्मराशितः । **द्रो० ६७ । ५ ॥ अनु० १२३ । १३** ॥

तस्या महिमा । **व० ८० । ५६** ॥

+ **चर्मपादुकादानफलं । अनु० १४५ । १४** ॥

**चर्मवान्** । क्षत्रियः । शकुनेरनुजः । इरावता हतः । **भी० ९०** ॥

**चाक्षुषी** । चित्ररथेनार्जुनायोपदिष्टा काचन विद्या । **आ० १८६ । ४३ ॥ १९९ । ५** ॥

१ **चाणूरः** । कंसभृत्यो मल्लः । श्रीकृष्णेन हतः । **स० ५३ । ३०** ॥ [भा० १० । ४४ ॥]

२ **चाणूरः** । युधिष्ठिरसभास्थः क्षत्रियः । **स० ४ । ३२** ॥

+ **चातुराश्रम्यं** । आश्रमशब्दं पश्यत ।

**चातुर्वर्ण्यं** । ब्राह्मणक्षत्रियवैश्यशूद्राः । तेषां धर्माः हनुमता भीमं प्रत्युक्ताः । **व० १५२ । २४** ॥ विदुरेण धृतराष्ट्रं प्रत्युक्ताः । **उ० ४० । २५** ॥ भीष्मेण युधिष्ठिरं प्रत्युक्ताः । **शां० ५९** ॥ भृगुणा भरद्वाजं प्रत्युक्ताः । **शां० १८९** ॥ पार्वत्या परमेश्वरं प्रति । **अनु० २८** ॥ श्रीकृष्णेन युधिष्ठिरं प्रत्युक्ताः । **अश्व० ९७** ॥

+ **चान्द्रायणविधिः । अनु० १७२ ॥ अश्व० ११२** ॥

**चाम्पेयः** । विश्वामित्रपुत्रः । **अनु० ७ । ५८** ॥

**चारुः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९५** ॥

**चारुचित्रः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ४** ॥ भीमसेनेन हतः । **द्रो० १३६ । २०** ॥

**चारुचित्राङ्गदः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९५** ॥

**चारुदेष्णः** । श्रीकृष्णस्य पुत्रः । तन्माता रुक्मिणी । **आ० २०१ । १७ ॥ २३९ । १० ॥ स० १४ । ६० ॥ व० १६ । ९** ॥ [तस्य स्वसा चारुमती । कृतवर्मसुतस्य बलेर्भार्या । भा० १० । ६१ ॥ विष्णु० ५ । २८ ॥]

तस्य वधः । **मौ० ४ । ४५ ॥**

**चारुनेत्रा** । अप्सराः । **स० १० । ११ ॥**

**चारुमत्स्यः** । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५९ ॥**

**चार्वाकः** । परिव्राड्रूपधारी दुर्योधनसखो राक्षसः । **शा० ६५ । ३८ ॥**

तस्य पूर्वजन्मवृत्तान्तः । **शां० ३८ ॥**

तस्य ब्राह्मणैर्हुङ्कारेणैव भस्मीकरणं । **शां० ३७ ॥**

**चिकुरः** । आर्यकस्य पुत्रः । सर्पः । सुमुखस्य पिता । **उ० १०३ । २४ ॥**

१ **चित्रः** । सर्पः । **स० ९ । ८ ॥**

२ **चित्रः** । दुर्योधनपक्षीयः क्षत्रियः । प्रतिविन्ध्येन हतः । **क० ११ । ३४ ॥**

३ **चित्रः** । क्षत्रियः पाण्डवपक्षीयश्चैद्यः । कर्णेन हतः । **क० ५१ । ४९ ॥**

४ **चित्रः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९५ ॥ १३१ । ४ ॥**

**चित्रकुण्डलः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ६ ॥**

**चित्रकूटः** । प्रयागक्षेत्रसमीपस्थः पर्वतः । **व० ८३ । ५८ ॥** तत्र मन्दाकिनीनाम नदी । तत्र रामस्य वासः । **व० २७८ । ४० ॥** A hill on the river Payoshni or Mandakini, fifty miles south east of Banda in Bundelkhand.

१ **चित्रकेतुः** । द्रुपदस्य पुत्रः । द्रोणेन हतः । **द्रो० १२२ । ४३–४८ ॥** तत्पुत्रः सुकेतुः । कृपाचार्येण हतः । **क० ४९ । २१ ॥**

२ **चित्रकेतुः** । गरुडस्य पुत्रः । **उ० १०१ । १२ ॥**

**चित्रगुप्तः** । यमस्य लेखकः । तेन धर्मरहस्यकथनं । **अनु० १९३ । १३ ॥**

**चित्रचापः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९८ ॥**

**चित्रदर्शनः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **भी० ७९ । २२ ॥**

**चित्रधर्मा** । क्षत्रियः । **आ० ६८ । २३ ॥**

**चित्रबर्हः** । गरुडपुत्रः । **उ० १०१ । १२ ॥**

**चित्रबाणः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१ । ६ ॥**

**चित्रबाहुः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९७ ॥**

**चित्रमुखः** । प्रथमं वैश्यो भूत्वा पश्चाद्ब्राह्मणो जातः । तत्पुत्री अदृश्यन्ती शक्तिऋषेर्भार्या । **अनु० ५३ । १७ ॥**

१ **चित्ररथः** । काश्यपभार्यायां मुनेः पुत्रो देवगन्धर्वः । **आ० ६६ । ४३ ॥ स० १० । २७ ॥**

तस्याङ्गारपर्ण इति नामान्तरं । तद्भार्या कुम्भीनसी । **आ० १८६ । १४ ॥**

तेनार्जुनाय चाक्षुषीनामकविद्यादानं । तस्या एव संमोहनास्त्रमिति नामान्तरं । **आ० १८६ । ४३ ॥ १९९ । ५ ॥** तेनार्जुनाय राजसूयकरत्वेन हयानां दानं । **स० ७८ । १०२ ॥**

२ **चित्ररथः** । क्षत्रियः । द्रुपदपुत्रः पाञ्चालः । द्रोणेन हतः । **द्रो० १२२ । ४३ ॥**

३ **चित्ररथः** । क्षत्रियः । मार्तिकावतको नृपः । नर्मदायां स्त्रीभिः सह क्रीडन्तं यं दृष्ट्वा तत्र जलाहरणार्थमागता रेणुका स्पृहयामास । **व० ११७॥**

४ **चित्ररथः** । क्षत्रियः । अङ्गराजः । तद्भार्या प्रभावती । **अनु० ७७ । ८ ॥**

५ **चित्ररथः** । पाण्डवपक्षीयः कश्चन क्षत्रियः । **द्रो० २३ । ६२ ॥**

**चित्ररथा** । नदी । **भी० ९ । ३४ ॥**

**चित्रलेखा** । अप्सराः । **व० ४३ । ३० ॥**

१ **चित्रवर्मा** । क्षत्रियः । द्रुपदपुत्रः पाञ्चाल्यः । द्रोणेन हतः । **द्रो० १२२ । ४३ ॥**

२ **चित्रवर्मा** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९७ ॥ १३१ । ६ ॥** भीमेन हतः । **द्रो० १३६ । २१ ॥**

३ **चित्रवर्मा** । क्षत्रियः । पाञ्चालस्य सुचित्रस्य पुत्रः । द्रोणेन हतः । **क० ३ । २७** ॥

**चित्रवाहनः** । क्षत्रियः । मणलूराधिपः पाण्ड्यः । चित्राङ्गदायाः पिता । अर्जुनस्य श्वशुरः । **आ० २३५ । १७** ॥ अस्य मलयध्वज इति प्रवीर इति च नामान्तरे । **स० ३३ । २९** ॥ अश्वत्थाम्ना हतः । **क० ५६** ॥

**चित्रवाहा** । नदी । **भी० ९ । १७** ॥

**चित्रवेगिकः** । सर्पः । **आ० ५७ । १८** ॥

**चित्रशिखण्डिनः** । सप्तर्षयः । **शां० ३४३ । ३०** ॥

**चित्रशिला** । नदी । **भी० ९ । ३०** ॥

१ **चित्रसेनः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६३ । ५८** ॥ भीमेन हतः । **क० २ । २४** ॥

२ **चित्रसेनः** । गन्धर्वः । **स० ४ । ४३** ॥ **१० । २७** ॥

तेन देवलोकेऽर्जुनाय गान्धर्वविद्यादानं । **व० ४३ । ३८** ॥

तेनेन्द्रसन्देशेनार्जुनं प्रत्युर्वश्याः प्रेषणं । **व० ४४** ॥

तेन वने घोषयात्रार्थमागतस्य दुर्योधनस्य समीपे इन्द्रसन्देशेन तदपमानकरणार्थं तत्र गमनं । **व० २४१ । २१** ॥

तेन सह युद्धे पराजितस्य कर्णस्य पलायनं । **व० २४३** ॥

तेन दुर्योधनस्य बन्धनेन इन्द्रलोकं प्रति नयनं । **व० २४३** ॥

तस्य पराजयोऽर्जुनेन । **व० २४५–२४७** ॥

३ **चित्रसेनः** । क्षत्रियः । अभीसारराजः । अर्जुनेन पराजितः । **स० २८ । १९** ॥ दुर्योधनपक्षीयः । श्रुतकर्मणा हतः । **क० ११ । १५** ॥

४ **चित्रसेनः** । पाण्डवपक्षीयः क्षत्रियः । समुद्रसेनेन हतः । **क० ३ । १५** ॥

५ **चित्रसेनः** । कर्णपुत्रः । नकुलेन हतः । **श० ९ । १९** ॥

६ **चित्रसेनः** । क्षत्रियः । द्रुपदपुत्रः । कर्णेन हतः । **क० ४३ । १५** ॥

७ **चित्रसेनः** । जरासन्धस्य सेनापतिः । **स० २२ । ४२** ॥

**चित्रसेना** । नदी । **भी० ९ । १७** ॥

**चित्रा** । अप्सराः । **अनु० ५० । ४७** ॥

**चित्राक्षः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९५** ॥ **१३१ । ४** ॥ भीमेन हतः । **द्रो० १३६ । २०** ॥

**चित्राङ्गः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ६** ॥ **भी० ७९ । २२** ॥

१ **चित्राङ्गदः** । क्षत्रियः । सो० वं० शान्तनोः पुत्रः । तन्माता सत्यवती । **आ० ६३ । ५२** ॥

तस्योत्पत्तिः । **आ० १०८ । ३** ॥

तस्य वधः । चित्राङ्गदनाम्ना गन्धर्वेण । **आ० १०८ । १४** ॥

२ **चित्राङ्गदः** । द्रौपदीस्वयंवरार्थमागतः कश्चन क्षत्रियः । **आ० २०१ । २२** ॥

३ **चित्राङ्गदः** । क्षत्रियः । दशार्णाधिपः । अर्जुनेन पराजितः । **अश्व० ८४ । ६** ॥ अयं द्वितीय एव वाऽन्यो वेति न ज्ञायते ।

४ **चित्राङ्गदः** । गन्धर्वः । यः स्वसनामानं शान्तनुराजपुत्रं वने जघान । **आ० १०८ । ८** ॥

५ **चित्राङ्गदः** । क्षत्रियः । दुर्योधनस्य श्वशुरः । कलिङ्गराजः । तस्य राजधानी राजपुरं । **शां० ४ । २** ॥

१ **चित्राङ्गदा** । अप्सराः । **अनु० ५० । ४७** ॥

२ **चित्राङ्गदा** । मणलूराधिपतेर्मलयध्वजापरनामधेयस्य चित्रवाहनस्य कन्या । अर्जुनस्य भार्या । तत्पुत्रो बभ्रुवाहनः । **आ० ६३ । ८१** ॥

तस्या विवाहः । **आ० २३५ । १५** ॥

तस्यां बभ्रुवाहनोत्पत्तिः । **आ० २३७ । २६** ॥

तया राजसूयार्थं करदानं । **स० ३३ । २५** ॥

तया स्वपुत्रेण हतस्यार्जुनस्य समीपे आगमनं। सञ्जीवनमणिना अर्जुनस्योज्जीवनं च। **अश्व० ७९ ८१** ॥

तया हास्तिनपुरगमनं। **अश्व० ८९** ॥

तया पाण्डवानां महाप्रस्थानगमनसमये स्वपितृगृहगमनं। **महाप्र० १** । २९ ॥

१ **चित्रायुधः**। पाञ्चालः। क्षत्रियः। **आ० २०१** । १० ॥ महारथः। **उ० १७१** । १७ ॥ कर्णेन हतः। **क० ५१** । ४९ ॥

२ **चित्रायुधः**। क्षत्रियः। सो० वं० धृतराष्ट्रस्य पुत्रः। **आ० १३१** । ८ ॥ भीमेन हतः। **द्रो० १३६** । २०१ ॥

**चित्राश्वः**। क्षत्रियः। द्युमत्सेनपुत्रस्य सावित्रीजानेः सत्यवतो नामान्तरं। **व० २९५** । १३ ॥

**चित्रोपचित्रः**। क्षत्रियः। सो० वं० धृतराष्ट्रपुत्रः। भीमेन हतः। **द्रो० १३६** । २० ॥

**चित्रोपला**। नदी। **भी० ९** । ३४ A river in Orissa.

**चिरकारिकः**। (**चिरकारी**)। ऋषिः। गौतमस्य मेधातिथेर्यवीयान्सुतः। **शां० २७२** । ९ ॥

+ **चिरजीविनां दुःखं**। **व० १९६** । १७ ॥

**चिरान्तकः**। गरुडस्य पुत्रः। **उ० १०१** । १३॥

**चीनाः**। देशः। **आ० १९१** । ४० ॥ **स० ७८** । ५५ ॥ **भी० ९** । ६६ ॥ China.

१ **चीरवासाः**। यक्षः। **स० १०** । १९ ॥

२ **चीरवासाः**। क्षत्रियः। **आ० ६८** । ६१ ॥

**चीरिणी**। नदी। **व० १९०** । ६ ॥

**चुलुका**। नदी। **भी० ९** । २० ॥

**चेकितानः**। वृष्णिप्रवरः क्षत्रियः। पाण्डवपक्षीयः। **स० ७९** । ९ ॥ **उ० २५** । २ ॥ **५७** । २ ॥ **१९६** । २३ ॥ **भी० १९** । १४ ॥ दुर्योधनेनः हतः। **श० ११** । ३१ ॥

**चेदयः**। (**चेदि**) देशः। **भी० ९** । ४० ॥ The country comprised the southern portion of Bundelkhand and the northern portion of Jubbalpore REWA.

**चैत्यकः**। मगधदेशस्थः पर्वतः। **स० २१** । २ ॥

**चैत्ररथः**। क्षत्रियः। सो० वं० कुरुराजस्य पुत्रः। **आ० १०१** । ३८ ॥

**चैत्ररथं**। कुबेरोद्यानं। **उ० १११** । ११ ॥

**चैत्ररथपर्व**। **आ० १७९-१९९** ॥

**चोलः**। क्षत्रियः। द्रमिडदेशाधिपतिः। **स० ३३** । २० ॥

**चोलाः**। देशः। **भी० ९** । ६० ॥

**चौण्डिकाः**। देशः। **स० ७८** । ९१ ॥

**च्यवनः**। ऋषिः। वरुणपुत्रस्य भृगोः पुत्रः। तन्माता पुलोमा। **आ० ५** । १३ ॥ **स० ११** । २२ ॥

तदुत्पत्तिः। **आ० ६** । २ ॥ **६७** । ४५ ॥

तस्य सगर्भ्यो भ्राता शुक्राचार्यः। **आ० ६७** । ४२॥

तस्य भार्या आरुषी मनुपुत्री। तत्पुत्रः और्वः। **आ० ६७** । ४६ ॥

तस्यान्या भार्या सुकन्या शर्यातेः पुत्री। तत्पुत्रः प्रमतिः। **आ० ८** । १ ॥

तस्य चरित्रं। **व० १२२** । २५ ॥ **अनु० २६१** । १४ ॥ [ भा० ९ । ३ ॥ देवीभा० ७ । ३—७ ॥ ]

तस्य तपश्चरणं। **व० १२३** ॥

तस्य सुकन्यया विवाहः। **व० १२३** । २४ ॥

तस्याश्विनोः प्रसादाद्युवशरीरप्राप्तिः। **व० १२४** । १४ ॥

तेनाश्विभ्यां शर्यातियज्ञे सोमग्राहणं। तस्मै इन्द्रस्य कोपश्च। **व० १२५** । ८ ॥ **अनु० २६१** । २३ ॥

तेनेन्द्रमारणाय मदनामककृत्यासर्जनं। **व० १२५** । १८ ॥ **अनु० २६१** । २५ ॥

तेन जले निमज्ज्य तपःकरणं। दाशैर्मीनैः सह जालैस्तस्य ग्रहणं। **अनु० ८५** ॥

तेन नहुषं प्रति दाशेभ्यः स्वसदृशमूल्यदाननियोगः। **अनु० ८६** ॥

तस्य शुश्रूषा सभार्येण कुशिकराजेन। **अनु० ८७**॥

तेन कुशिकाय वरदानं। **अनु० ८८** ॥

तद्वरप्रसादात्कुशिकवंशे ब्राह्मणोत्पत्तिः। **अनु० ९०**। ३० ॥

तेन कुशिकं प्रति स्वयोगप्रभावसृष्टस्वर्गप्रदर्शनं। **अनु० ८९** ॥

## छ.

**छत्रवती**। द्रुपदराजनगरं। **आ० १८०**। २१॥

**छत्रोत्पादनं**। सूर्येण। **अनु० १४५** ॥

**छन्दोदेवः**। मतङ्गस्य जन्मान्तरीयं नाम। **अनु० ५**। २६ ॥

## ज.

+ **जगत्सृष्टिकथा**। **आ० १**। ४२ ॥ **स० ४३**। १९ ॥ **शां० १८०** ॥ **३४७** ॥

**जङ्घाबन्धुः**। ऋषिः। युधिष्ठिरसभायां। **स० ४**। २२ ॥

**जङ्घारिः**। विश्वामित्रपुत्रः। **अनु० ७**। ५७ ॥

**जटायुः**। अरुणस्य पुत्रः पक्षिराजः। तन्माता श्येनी। तद्भ्राता संपातिः। **आ० ६७**। ७५॥ **व० २७५**। २ ॥ **२८०**। १ ॥ **२८३**। ४९॥

तस्य वधो रावणेन। **व० २८०**। ७ ॥ [रा० ३। ५१ ॥]

१ **जटासुरः**। राक्षसः। तेन वने वसतां युधिष्ठिरादीनां हरणं। भीमसेनेन तद्वधश्च। **व० १५८** ॥

तत्पुत्रः अलम्बलः। घटोत्कचेन हतः। **द्रो० १७५**। २२ ॥

२ **जटासुरः**। क्षत्रियः। मद्राधिपः। **स० ४**।३०॥

+ **जटासुरवधपर्व**। **व० १५८** ॥

**जटिला**। गौतमवंशोत्पन्ना काचन स्त्री। तस्याः पतयः सप्तर्षयः। **आ० २११**। १४ ॥

**जठराः**। देशः। **भी० ९**। ४२ ॥

**जतुगृहं**। दुर्योधनेन पाण्डवदाहार्थं निर्मितं भवनं। **आ० १५४—१५६** ॥ तस्य दाहो भीमेन। **आ० १६०** ॥

+ **जतुगृहपर्व**। **आ० १५४—१६३** ॥

**जनकः**। विदेहराजः। सीतायाः पिता। **व० २७५**। ९ ॥ **स० ८**। १९ ॥

तस्य पञ्चशिखेन सहाध्यात्मविषये संवादः। **शां० २२१** ॥ **३२४** ॥

[तस्य वंशः। रा० १। ७१ ॥ भा० ९। १३ ॥ वायु० ८९ ॥]

तस्य स्वभार्यया संवादः क्षत्रियस्य प्रजापालनस्यावश्यकर्तव्यत्वे। **शां० १८** ॥

तस्याश्मनामकब्राह्मणेन संवादः। **शां० २७** ॥

तेन स्वयोधेभ्यः स्वर्गनरकप्रदर्शनं। **शां० ९९** ॥

**जनककूपः**। तीर्थं। **व० ८२**। १११ ॥

**जनकसमीपे कहोलागमनं**। तस्य जले निमज्जनं च। **व० १३४** ॥

तस्योपाख्यानं। मिथिलादाहेऽपि तस्याविकृतमनस्त्वप्रतिपादकं। **शां० २२३** ॥

तत्समीपे शुकऋषेरागमनं। **शां० ३३३** ॥ [बृहन्नार० ५८—६० ॥

तस्य माण्डव्येन सह संवादः तृष्णात्यागस्य सुखसाधनतायां। **शां० २८२** ॥

तस्य पराशरमहर्षिणा सह संवादः। **शां० २९६–३०४** ॥ इयमेव पराशरगीता।

तस्य याज्ञवल्क्येन संवादः भूतसृष्टिविषये। **शां० ३१५–३२३** ॥

तस्य ब्राह्मणेन संवादः। **अश्व० ३२** ॥

**जनदेवः**। जनकवंशीयो ज्ञानी राजा। **शां० २२०**। ३ ॥

१ **जनमेजयः**। क्षत्रियः। पाण्डवानां प्रपौत्रः। तत्पिता परीक्षित्। तन्माता भद्रवती। **आ० १**। १५ ॥

तेन दीर्घसत्रकरणं । तत्र सरमागमनं तया शापदानं च । **आ० ३** । १–११ ॥

तस्य राज्याभिषेकः । **आ० ४४** । ६ ॥

तस्य भार्या वपुष्टमा काशीश्वरस्य सुवर्मणः पुत्री । **आ० ४४** । ८ ॥ **६३** । ८७ ॥

तस्य पुत्रौ शतानीकः शङ्कुकर्णश्च । **आ० ६३** । ८७ ॥

तस्य भ्रातरः । श्रुतसेनः उग्रसेनः भीमसेन इति त्रयः । **आ० ३** । १ ॥

तस्य पुरोहितः श्रुतश्रवस ऋषेः पुत्रः सोमश्रवाः । **आ० ३** । १३ ॥

तस्य सर्पसत्रारम्भः । **आ० ५१** ॥

तत्समीपे उत्तङ्कऋषेरागमनं । **आ० ३** । १७१ ॥

२ **जनमेजयः** । क्षत्रियः । दुष्यन्तपुत्रः । तन्माता लाक्षी । **आ० ६३** । ३० ॥ लाक्ष्या लक्षणेति नामान्तरं । **आ० ८८** । १८ ॥

३ **जनमेजयः** । क्षत्रियः । सो० वं० कुरुपुत्रः । तन्माता वाहिनी । **आ० १०१** । ३९ ॥ तत्पुत्राः धृतराष्ट्रादयः । **आ० १०१** । ४३ ॥

४ **जनमेजयः** । क्षत्रियः । सो० वं० पूरोः पुत्रः । तन्माता कौसल्या । तद्भार्या सुनन्दा । तत्पुत्रः प्राचीन्वान् । **आ० ६३** । ८ ॥

तस्य गार्ग्यपुत्रहिंसनाद्ब्रह्महत्याप्राप्तिः । **शां० १४९** । ३ ॥ इन्द्रोतनाम्ना शौनकेनाश्वमेधयाजनेन तत्परिहारश्च । **शां० १५१** । ३९ ॥ [हरि० १ । ३० ॥ ब्रह्म० १२]

तस्य स्त्रीवधप्राप्तिः । **अनु० ९** । ३८ ॥

५ **जनमेजयः** । क्षत्रियः । पार्वतीयो राजा । पाण्डवपक्षीयः । दुर्मुखेन हतः । **क० ३** । १९ ॥

६ **जनमेजयः** । क्षत्रियः । पाञ्चालः । **द्रो० २३** । ५२ ॥ **क० ४४** । ३७ ॥

**जनस्थानं** । राक्षसावासभूतं वनं । **व० २७८** । ४८ ॥ **रा० ४०** । १० ॥ Aurangabad—This was formerly a jungle inhabited by Rakshasas.

**जन्तुः** । सोमकराजपुत्रः । तस्योपाख्यानं । **व० १२८** । ४ ॥

+ **जपफलं** । **शां० १९४** ॥

**जमदग्निः** । ऋषिः । ऋचीकस्य पुत्रः । तन्माता गाधिराजपुत्री सत्यवती । **आ० ६७** । ४७ ॥ **अनु० ७** । ३६ ॥

तस्योत्पत्तिः । **व० ११६** । ४४ ॥ **अनु० ७** । ४६ ॥

तस्य भार्या प्रसेनजित्पुत्री रेणुका । **व० ११७** । २ ॥

तत्पुत्राः । रुमण्वान् सुषेणः वसुः विश्वावसुः परशुरामश्चेति । **आ० ६७** । ४८ ॥ **व० ११७** । ११ ॥

तेन धर्मोपदेशः । **अनु० १९०** । १७ ॥

तन्नामनिर्वचनं । **अनु० १४२** । ३७ ॥

तस्य सूर्येण सह छत्रोपानद्विषये संवादः । **अनु० १४४** ॥

**जमदग्न्याश्रमः** । **व० ११७** । ३ ॥

+ **जम्बुकगृध्रसंवादः** । **शां० १५२** ॥

+ **जम्बुकोपाख्यानं** । कणिकप्रोक्तं । **आ० १५३** । ३५ ॥

१ **जम्बूः** । मेरुपर्वतप्रभवा नदी । **भी० ६** । ४९ ॥

२ **जम्बूः** । मेरोर्दक्षिणपार्श्वस्थो जम्बूवृक्षः । **स० २९** । २२ ॥

+ **जम्बूखण्डविनिर्माणपर्व** । **भी० १** ॥

**जम्बूद्वीपः** । **स० २९** । २४ ॥

तद्वर्णनं । **भी० ५** ॥ [भा० ५ । १६ ॥ वायु० ३४ ॥]

**जम्बूमार्गं** । क्षेत्रं । पुष्करक्षेत्रस्य समीपे । **व० ८०** । ४० ॥ **८७** । १३ ॥

**जम्बूवनं** । मेरुपर्वतस्थं वनं । तत्प्रदेशस्य ल्यत्वं । **अनु० २४०** ॥

**जम्भः** । राक्षसः । **व० २८६** । २ ॥

**जम्भकः** । क्षत्रियः । **स० ३२** । ७ ॥

१ **जयः** । महाभारतं । **स्वर्गा० ५ । ६४ ॥**

२ **जयः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **भी० ७७ । ७ ॥** भीमसेनेन हतः । **द्रो० १३५ । ३०—३६ ॥**

३ **जयः** । युधिष्ठिरस्य विराटनगरे रहस्यं नाम । **वि० ७ । ६६ ॥ २७ । १९ ॥**

४ **जयः** । क्षत्रियः । यमसभायां । **स० ८ । १५ ॥**

१ **जयत्सेनः** । नकुलस्य विराटनगरे रहस्यं नाम । **वि० ७ । ६६ ॥ २७ । १९ ॥**

२ **जयत्सेनः** । क्षत्रियः । सो० वं० सार्वभौमस्य पुत्रः । तन्माता कैकयी सुन्दरा । तद्भार्या सुश्रवा । तत्पुत्रोऽपराचीनः । **आ० ६३ । १५ ॥ ६८ । ४८ ॥**

३ **जयत्सेनः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **भी० ७७ । ७९ ॥** भीमसेनेन हतः । **श० २५ । १० ॥**

**जयद्बलः** । सहदेवस्य विराटनगरे प्रच्छन्नं नाम । **वि० ७ । ६६ ॥ २७ । १९ ॥**

**जयद्रथः** । क्षत्रियः । सिन्धुदेशाधिपस्य वृद्धक्षत्रस्य पुत्रः । तद्भार्या धृतराष्ट्रपुत्री दुश्शला । **आ० ६८ । ११० ॥ १३१ । १८ ॥ द्रो० १४८ ॥** द्विगुणरथः । **उ० १२५ । ३० ॥**

तत्पुत्रेष्वेकस्य वधः अर्जुनेन द्रौपदीस्वयंवरे । **आ० २१८ । ३२ ॥**

तत्पुत्रस्यान्यस्य सुरथनाम्नोऽश्वमेधयागार्थं स्वस्मात्कर-ग्रहणार्थमर्जुनागमनश्रवणमात्रेण मरणं । **अश्व० ७८ । २३—२९ ॥**

तस्य द्रौपद्या संवादः । **व० २६८ । ८ ॥**

तेन वनस्थाया द्रौपद्या अपहारः । **व० २६९ । २३ ॥**

तद्भ्रातरः । अङ्गारकः कुञ्जरः गुप्तः शत्रुञ्जयः सञ्जयः सुप्रवृद्धः प्रभङ्करः भ्रमरः रविः शूरः प्रतापः कुहनः बलाकः अनीकविदारणः इत्यादयः । **व० २६६ । ११—१३ ॥**

तस्यार्जुनवर्जं युद्धे सर्वपाण्डवानां सकृज्जये रुद्राद्वर-प्राप्तिः । **व० २७३ । ७८ ॥ द्रो० ४२ । २० ॥**

तस्यार्जुनेन पञ्चचूडीकरणं । **व० २७३ । १० ॥**

तस्य युद्धं । **द्रो० १४ ॥**

तद्वधप्रतिज्ञाऽर्जुनेन । **द्रो० ७३ । २७ ॥**

तस्य शिरश्छेदोऽर्जुनेन । **द्रो० १४७ । ७१—७५ ॥**

तच्छिरसोऽर्जुनेन वृद्धक्षत्रोत्सङ्गे पातनं । **द्रो० १४८ । १८—२० ॥**

**जयद्रथविमोक्षणपर्व । व० २७३ ॥**

१ **जयन्तः** । क्षत्रियः । पाञ्चाल्यः । महारथः । **उ० १७१ । ११ ॥**

२ **जयन्तः** । इन्द्रस्य पुत्रः । तन्माता पौलोमी । **आ० १२३ । ४ ॥**

**जयरातः** । क्षत्रियः । दुर्योधनपक्षीयः । भीमेन हतः । **द्रो० १५६ । ३१ ॥**

+ **जयसूचकानि चिह्नानि । भी० ३ । ६५—७५ ॥ शां० २०२ ॥**

**जयसेनः** । क्षत्रियः । मागधः । **स० ४ । ३२॥**

१ **जयानीकः** । क्षत्रियः । विराटस्य भ्राता । **द्रो० १५९ । ४१ ॥**

२ **जयानीकः** । क्षत्रियः । पाञ्चाल्यः । अश्वत्थाम्ना हतः । **द्रो० १५७ । १८१ ॥**

१ **जयाश्वः** । क्षत्रियः । विराटराजस्य भ्राता । **द्रो० १५९ । ४१ ॥**

२ **जयाश्वः** । क्षत्रियः । पाञ्चाल्यः । अश्वत्थाम्ना हतः । **द्रो० १५७ । १८१ ॥**

**जयेशः** । विराटनगरे वसतो भीमसेनस्य गूढनाम । **वि० ७ । ६६ ॥ २७ । १९ ॥**

**जरः** । व्याधः । तेन मृगबुद्ध्या श्रीकृष्णस्य पाद-तले बाणेन वेधः । **मौ० ५ । २२—२५ ॥**

१ **जरत्कारुः** । भृगुवंशान्तर्गतयायावरवंशोत्पन्न ऋषिः । आस्तीकस्य पिता । **आ० १३ । ११ ॥ ३८ । १४ ॥**

तन्नामनिर्वचनं । **आ० ४० । ३ ॥**

तेन विवाहार्थं स्वसनाम्न्याः कन्याया अन्वेषणं । **आ० ४६ । १८ ॥**

तस्य वासुकिभगिन्या जरत्कार्वा विवाहः । **आ० १४ ॥ ४७ । ५ ॥**

तस्य गर्ते लम्बमानैः स्वपितृभिः सह विवाहविषये संवादः । **आ० ४५ ॥**

२ **जरत्कारुः** । वासुकेर्भगिनी । जरत्कारुऋषेः पत्नी । तत्पुत्र आस्तीकः । **आ० ३९ । २ ॥ ५४ । १ ॥ ३८ । २० ॥**

तस्य गर्भोत्पत्तिः । **आ० ४७ । १३ ॥**

१ **जरा** । वार्द्धकं । तद्दोषाः । **आ० ७८ ॥**

२ **जरा** । जरासन्धस्योपमाता राक्षसी । **स० १७ । ५२ ॥**

तस्या वधः । श्रीकृष्णादिहननार्थं जरासन्धप्रयुक्तया गदया तत्प्रतिघातार्थं बलभद्रप्रयुक्तेन स्थूणाकर्णास्त्रेण च । **द्रो० १८२ । १४ ॥**

तत्स्वरूपकथनं । **स० १८ ॥**

१ **जरासन्धः** । बार्हद्रथः । क्षत्रियः । सो० वं० मगधराजस्य उपरिचरवसुपुत्रस्य बृहद्रथस्य पुत्रः । **आ २०१ । २३ ॥ स० १७ । १२ ॥**

तस्योत्पत्तिः । चण्डकौशिकप्रसादात् । **स० १७ । २१ ॥** [भा० ९ । २२ ॥]

तन्नामनिर्वचनं । **स० १८ । ११ ॥**

तस्य श्रीकृष्णेन सह वैरकारणं । **स० २३ ॥**

तस्य विप्रचित्त्यंशत्वं । **आ० ६८ । ४ ॥**

तच्छौर्यकथनं । **स० १४ । ७ ॥ द्रो० १८२ ॥**

तेन रुद्रोद्देशेन पुरुषमेधकरणार्थं षडशीतिसहस्रनृपाणां पशुत्वेन मेलनं । **स० १५ । २४—२६ ॥**

तस्य राज्याभिषेकः । **स० १९ । १७ ॥**

तस्य भीमेन सह युद्धारम्भः । **स० २४ ॥**

तस्य भीमसेनेन वधः । **स० २५ । २०** [भा० १ । ७२ ॥]

तस्य पुत्रः सहदेवः । **स० २५ । ५३ ॥** द्रोणेन हतः । **द्रो० १२५ । ४५ ॥**

तत्पौत्रो मेघसन्धिः । **अश्व० ८३ । ३—४ ॥**

तत्पुत्री पाण्डुपुत्रस्य सहदेवस्य भार्येति भाति । **आश्र० १ । २४ ॥**

तेन सह कर्णस्य युद्धं । **शां० ५ । १ ॥**

तस्यावासः गिरिव्रजनाम्नी पुरी । **स० २१ । १८ ॥ २५ । ४२ ॥**

[तस्य वंशः । भा० ९ । २२ ॥ गरुडपु० १४०॥]

२ **जरासन्धः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । १०० ॥ १३१ । २ ॥**

+ **जरासन्धवधपर्व । स० २०–२५ ॥**

**जरिता** । शार्ङ्गी पक्षिणी । मन्दपालऋषेर्भार्या ॥ तत्पुत्राः जरितारिः सारिसृक्कः द्रोणः स्तम्बमित्रः इति चत्वारः । **आ० २५५ । १६ ॥**

**जरितारिः** । शार्ङ्गकः । मन्दपालऋषितो जरितायां जातः पुत्रः । **आ० २५८ । १ ॥ अनु० ५३ । २२ ॥**

**जलं** । उदकं । द्वितीयं भूतं । तस्य गुणाः । **व० २१५ । ६ ॥ भी० ५ । ६ ॥ शां० २५८ । ६ ॥ २६१ । ४ ॥**

तद्दानप्रशंसा । **अनु० १०० । ३ ॥ १०२ । ३ ॥ १०३ । १९ ॥ अश्व० १०१ ॥**

**जलक्रीडा** । सस्त्रीकयोः कृष्णार्जुनयोर्यमुनायां । **आ० २४८ ॥**

**जलन्धरा** । काशिराजसुता । भीमसेनभार्या । तत्पुत्रः शर्वत्रातः । **आ० ६३ । ७६ ॥**

+ **जलप्रदानिकपर्व । स्त्री० १–१५ ॥**

१ **जलसन्धः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९४ ॥ १३१ । २ ॥** भीमेन हतः । **भी० ६४ । ३३ ॥ क० ८८ । १९ ॥**

२ **जलसन्धः** । क्षत्रियः । मागधः । रथवरः । **उ० १६७ । २४ ॥ आ० २०१ । १२ ॥** सात्यकिना हतः । **द्रो० ११५ । ५३ ॥**

+ **जलस्तम्भनं दुर्योधनेन । उ० ६१ ।** १४ ॥ **श० ३० ।** ५७ ॥

**जलेयुः ।** क्षत्रियः । सो० वं० रौद्राश्वपुत्रः । **आ० ८८ ।** ९ ॥

१ **जह्नुः ।** क्षत्रियः । सो० वं० सुहोत्रपुत्रस्याजमीढस्य पुत्रः । तन्माता केशिनी । तद्वंश्याः कुशिकाः । **आ० १०१ ।** २० ॥ [ अयमेव भगीरथरथानुगां स्वयज्ञवाटं प्लावयन्तीं गङ्गां पीत्वा पुनः स्वश्रोत्रविवरादुत्सृष्टवान् । तस्मात्सा जाह्नवी समभवत् । वायु० ९१ ॥ ]

२ **जह्नुः ।** मिथिलस्य पुत्रः । तत्पुत्रः सिन्धुद्वीपः । **अनु० ७ ।** २ ॥

**जह्नुसुता ।** गङ्गा । **आ० १०५ ।** १३ ॥ **अनु० ७ ।** ३ ॥

**जाङ्गलाः ।** देशः । **भी० ९ ।** ५६ ॥

**जाजलिः ।** द्विजः । तस्य तुलाधारेण सह संवादः । **शां० २६७—२७० ॥**

**जातिस्मरह्रदः ।** तीर्थं । **व० ८२ ।** १२८ ॥ **८३ ।** ३८ ॥

+ **जातुषगृहं । आ० ६१ ।** २२ ॥ जतुगृहशब्दं पश्यत ।

**जातूकर्ण्यः ।** ऋषिः । **स० ४ ।** २० ॥

**जानकिः ।** क्षत्रियः । **आ० ६८ ।** ३९ ॥

**जानुजङ्घः ।** क्षत्रियः । **आ० १ ।** २६१ ॥ **अनु० २७१ ।** ५९ ॥

+ **जापकोपाख्यानं । शां० १९५—१९८॥**

**जाबालिः ।** विश्वामित्रऋषेः पुत्रः । **अनु० ७ ।** १५५ ॥

**जामदग्न्यः ।** परशुरामशब्दं पश्यत ।

**जामाता ।** दुहितुः पतिः । तस्मिन् श्वश्वाः प्रीत्याधिक्यं । **आ० १३० ।** १२ ॥

**जाम्बवती ।** श्रीकृष्णमहिषी । ऋक्षराजस्य जाम्बवतो दुहिता । **स० ५७ ।** २३ ॥
[तस्या विवाहः । भा० १० । ५६ ॥ विष्णु० ४ । १३ ॥]
[ तत्पुत्रः साम्बः । भा० १० । ६१ ॥ ]
तस्या अग्निप्रवेशः । **मौ० ८ ।** ७४ ॥

**जाम्बवान् ।** ऋक्षराजः । **व० २८१ ।** २४ ॥ **२८४ ।** ८ ॥
तत्पुत्री जाम्बवती । श्रीकृष्णमहिषी । **स० ५७ ।** २३ ॥
[तस्य कथा । भा० १० । ५६ । विष्णु० ४ । १३॥]

**जाम्बूनदी ।** नदी । **भी० ९ ।** ३० ॥

**जायाशब्दनिर्वचनं । आ० ९८ ।** १८ ॥

**जारूथिः ।** नगरी । तदधिपतेः आहुतिनामकस्य श्रीकृष्णेन पराजयः । **व० १२ ।** ३१ ॥

**जालवती । (जानपदी) ।** देवकन्या । यद्दर्शनस्खलिताच्छरद्वदृषिरेतसः कृपः कृपी चाभवतां । **आ० १४० ।** ६ ॥

**जितवती ।** उशीनरस्य पुत्री । यस्या हेतोर्द्युनामा वसुर्वसिष्ठस्य नन्दिनीमपहृत्य तस्माच्छापमाप । **आ० १०६ ।** २२ ॥

**जितशत्रुः ।** क्षत्रियः । **स० ११ ।** २४ ॥

+ **जितारिः ।** क्षत्रियः । सो० वं० अविक्षितः पुत्रः । **आ० १०१ ।** ४१ ॥

**जिष्णुः ।** अर्जुनः । तन्नामनिर्वचनं । **वि० ४३ ।** २१—३६ ॥

१ **जीमूतः ।** महामल्लः । विराटनगरे भीमेन हतः । **वि० १५ ।** ५३ ॥

२ **जीमूतः ।** विप्रर्षिः । उशीरबीजक्षेत्रनिवासी । **उ० १११ ।** २३ ॥

**जीवः ।** तत्स्वरूपकथनं । **शां० १८४॥**
तस्य पारतन्त्र्यं । **अनु० १ ।** १६—८४ ॥
तस्य गर्भवासप्रकारः । **आ० ८४ ॥ स्त्री० ४ ॥ अनु० १७३ ॥ अश्व० १९ ॥** [भा० ३ । ३१ ॥]
तस्य देहाद्विलक्षणत्वं । **शां० १८५ ॥**

## झ.



## ड.



## त.

तेन खाण्डवदाहकाले कुरुक्षेत्रे स्थितिः । **आ० २५४ । १७ ॥**

**तक्षशिला ।** श्रीरामचन्द्रस्य भ्रातुर्भरतस्य पुत्रेण तक्षनाम्ना निर्मितः सिन्धुवितस्तयोर्नद्योर्मध्ये अभिसारिदेशाद्दक्षिणतो विद्यमानो देशः । **आ० ३ । २० । १७२ ॥** [रा० ७ । १०१ ॥] सा कदाचिद्गान्धारदेशस्य राजधान्यभूत् । Taxila, one mile north-east of Kalaka-serai, between Attock and Rawalpindi. 2. It is on the bank of the Vitasta ( Jhelum ).

**तङ्कणाः ।** देशः । **स० ७८ । ७९ ॥ भी० ९ । ६४ ॥**

**तटाकादिप्रतिष्ठा । अनु० ९३ ॥**

**तण्डिः ।** ब्राह्मणः । शिवभक्तः । **शां० २५० । १६ ॥**

तत्कृता शिवस्तुतिः । **अनु० ४७ ॥** [ लिङ्गपु० ६५ ॥]

**+ तत्त्वविभागः । शां० ३२६-३२८ ॥ अनु० ३८ ॥ २४५ ॥** तेषां सृष्टिः । **अनु० १६५ ॥ २४५ ॥** तेषां तारतम्यं । **अनु० १६८ ॥**

**तनुः ।** कृशनामा ऋषिः । तस्य ऋषभकूटपर्वतवासिना ऋषभनाम्ना ऋषिणा संवादः । **शां० १२७ ॥**

**तन्तुमान् ।** अग्निविशेषः । **व० २२३ । २९ ॥**

**तन्त्रीपालः ।** अज्ञातवासे गोपालरूपस्य सहदेवस्य नाम । **वि० ४ । १५ ॥**

**तपः ।** अस्य शब्दस्य नानार्थकत्वं । **शां० २२८ ॥**

तस्य महिमा । **शां० ३०१ ॥**

**तपती ।** सूर्यपुत्री । संवरणस्य भार्या । तत्पुत्रः कुरुः । **आ० ६३ । ४१ ॥**

तस्याः ज्येष्ठा स्वसा सावित्री । **आ० १८८ । २६ ॥**

तदुपाख्यानं गन्धर्वेणार्जुनाय कथितं । **आ० १८७ । १८९ ॥**

तस्याः संवरणेन विवाहः । **आ० १८९ । ३०-३३ ॥**

[तन्माता छायादेवी । तद्भ्रातरौ शनैश्चरः सावर्णिश्च । भा० ६ । ६ ॥]

**१ तपनः ।** अमृतरक्षको देवः । **आ० ३२ । १८ ॥**

**२ तपनः ।** पाञ्चाल्यः । कर्णेन हतः । **क० ४३ । १५ ॥**

**१ तमः ।** गृत्समदवंशोद्भवस्य श्रवसः पुत्रो ब्राह्मणः । तत्पुत्रः प्रकाशः । **अनु० ८ । ६३ ॥**

**२+तमः ।** गुणः । तत्कार्यं । **शां० ३१८ । २६-२८ ॥ अश्व० ३७ ॥**

**तमसा ।** नदी । **भी० ९ । ३१ ॥** [रा० १ । २ ॥] The river Tonse between the Saraju and the Goomti, which flowing through Azamharh, falls into the Ganges.

**तरन्तुकः ।** तीर्थं । **श० ५४ । २८ ॥**

**तरुणकः ।** सर्पः । **आ० ५७ । १९ ॥**

**तंसुः ।** क्षत्रियः । सो० वं० मतिनारपुत्रः । तत्पुत्रः ईलिनः । **आ० ८८ । १३ ।** अस्य त्रसुरिति नामान्तरं । **आ० ६३ । २७-२८ ॥**

**ताडकायनः ।** ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५६ ॥**

**ताण्डः ।** ऋषिः । **स० ७ । १२ ॥**

**ताण्ड्यः ।** ऋषिः । **शां० २५० । १७ ॥**

**ताम्रद्वीपः ।** तत्र सहदेवेन राजसूयदिग्विजये गमनं । **स० ३२ । ७० ॥**

**ताम्रपर्णी ।** नदी । **स० ३३ । ३१ ॥ व० ८६ । १४ ॥** The river Tamraparni in Tinnevelly ( South-India ).

**ताम्रलिप्तः ।** क्षत्रियः । **आ० २०१ । १३ ॥ स० ३१ । २५ ॥**

**ताम्रलिप्तकाः ।** ( **दामलिप्तकाः** ) । देशः । **भी० ९ । ५७ ॥** Tamluk on the river

Salai, just above its junction with the river Hugli.

१ **ताम्रा** । कश्यपभार्या । तस्याः पुत्र्यः काकी श्येनी भासी धृतराष्ट्री शुकी इति पञ्च । **आ०** ६७ । ५६ ॥

२ **ताम्रा** । नदी । **भी०** ९ । २८ ॥

**ताम्रारुणं** । तीर्थं । **व०** ८२ । १५३ ॥

**ताम्रौष्ठः** । यक्षः । **स०** १० । १७ ॥

**तारकः** । असुरः । तत्पुत्राः ताराक्षः कमलाक्षः विद्युन्माली चेति त्रयः ब्रह्माणं प्रति तपस्तप्त्वा त्रिपुरत्वं प्रापुः । तत्र ताराक्षस्य काञ्चनं पुरं । कमलाक्षस्य राजतं । विद्युन्मालिन आयसं । **क०** २४ । ७ ॥

तस्य वधः स्कन्देन । **शा०** ४७ । ७३ ॥ **अनु०** १३३ । २९ ॥

१ **तारा** । वालिभार्या । **व०** २८१ । १९ ॥

२ **तारा** । चान्द्रमसी । बृहस्पतिभार्या । **व०** २२१ । ९ ॥

[ तस्यां चन्द्रात् बुधोत्पत्तिः । भा० ९ । १४ ॥ ]

**ताराक्षः** । असुरः । तारकासुरपुत्रः । **क०** २४ । ७ ॥

१ **तार्क्ष्यः** । ऋषिः । तस्य सरस्वत्या संवादः । **व०** १८९ ॥

२ **तार्क्ष्यः** । गरुडः । विनतापुत्रः । **आ०** ६६ । ४० ॥

**तालकेतुः** । भीष्मः । **भी०** ४७ । ९ ॥ **उ०** १५० । ५ ॥

**तालजङ्घः** । शर्यातिपुत्रः । **अनु०** ८ । ८ ॥

**तालध्वजः** । भीष्मः । **वि०** ५६ ॥

**तितिक्षा** । क्षान्तिनामको गुणः । तत्प्रशंसा । **शां०** ११४ ॥

१ **तित्तिरिः** । ऋषिः । **स०** ४ । १८ ॥

२ **तित्तिरिः** । सर्पः । **आ०** ३५ । १५ ॥ **उ०** १०३ । १३ ॥

**तिमिरापहः** । अग्निवंशे मुख्योग्निः । **व०** २२० । १४ ॥

**तिर्यग्योनिजननकारणं** । **अनु०** १७३ ॥

**तिलाः** । पवित्रधान्यविशेषः । तदुत्पत्तिः । **शां०** ३५९ । १६ ॥

तद्दानफलं । **अनु०** २३६ । ७ ॥ **अश्व०** १०२ । ५९–६८ ॥

तत्पीडननिषेधः । **अश्व०** १०९ । ३७ ॥

**तिलभाराः** । जनपदः । **भी०** ९ । ५३ ॥

**तिलोत्तमा** । अप्सराः । अरिष्टायाः पुत्री । **आ०** ६६ । ४९ ॥ **१३२** । ४४ ॥ **अनु०** २७१ । १५ ॥

तत्सृष्टिः सुन्दोपसुन्दवधार्थं विश्वकर्मणा । **आ०** २३१ । ११–२१ ॥

तस्याः सुन्दोपसुन्दसमीपगमनं । तद्दर्शनात्क्षुब्धहृदययोस्तयोः परस्पराभिघातान्मरणं च । **आ०** २३२ ॥

**तिष्यं** । कलियुगं । **भी०** १० । ३ ॥

**तीरग्रहाः** । देशः । **भी०** ९ । ५२ ॥

+ **तीर्थक्षेत्रमहिमा** । **आ०** २३४—२३८ ॥ **व०** ७९–८३ ॥ **शा०** ४२ ॥ **अनु०** ६४॥ १७० ॥ [ पद्म० १ । १३ ॥ भा० १० । ७९ ॥ ]

+ **तीर्थयात्रापर्व** । **व०** ७८—१५७ ॥

**तुङ्गकारण्यं** । क्षेत्रं । **व०** ८३ । ४६ ॥

**तुङ्गवेणा** । नदी । **भी०** ९ । २७ ॥

**तुण्डिकेराः** । देशः । **द्रो०** १७ । १९ ॥

**तुम्बकाः** । देशः । **स०** ७८ । ९९ ॥

**तुम्बुरुः** । अरिष्टायाः पुत्रो देवगन्धर्वः । **आ०** ६६ । ५१ ॥ ११० । २५ ॥ **स०** ७ । १४ ॥ १० । २७ ॥

**तुरायणः** । क्रतुविशेषः । **व०** १२ । २४ ॥

;ः । क्षत्रियः । सो० वं० ययातिपुत्रः । तन्माता देवयानी । **आ०** ६३ । ७ ॥ ६९ । ३८ ॥

[तस्य वंशः। भा० ९। २३॥]

**तुलाधारः।** वाराणसीस्थो ज्ञानी वणिक्। **शां० २६७॥**

तेन जाजलिऋषये धर्मोपदेशः। **शां० २६८॥**

१ **तुहुण्डः।** दनुपुत्रोऽसुरः। **आ० ६६। २५॥**

२ **तुहुण्डः।** क्षत्रियः। सो० वं० धृतराष्ट्रपुत्रः। **आ० २०१। ३॥**

**तृणकः।** क्षत्रियः। **स० ८। १७॥**

**तृणबिन्दुसरः।** सूर्यवंश्यस्य मरुत्तस्य सन्ततावुत्पन्नेन तृणबिन्दुनाम्ना क्षत्रियेण निर्मितं तीर्थं। **व० २५९। १३॥**

**तृतीयदिवसयुद्धारम्भः। भी० ५६॥** तत्समाप्तिः। **भी० ५९।**

**तृष्णा।** आशाशब्दं पश्यत।

**तेजः।** अग्निशब्दं पश्यत।

**तेजेयुः।** क्षत्रियः। रौद्राश्वपुत्रः। **आ० ८८। १०॥**

**त्रयोदशदिवसयुद्धारम्भः। द्रो० ३३॥** तत्समाप्तिः। **द्रो० ५०॥**

**त्रसदस्युः। (त्रसद्दस्युः)।** सू० वं० मान्धातृपुत्रस्य पुरुकुत्सस्य पुत्रः। [भा० ९। ७॥] अगस्तेन धनयाचनार्थं तत्समीपगमनं। **व०९६।१२॥**

**त्रसुः। (तंसुः)।** क्षत्रियः। सो० वं० अन्त्यनारपुत्रः। तन्माता सरस्वती। तद्भार्या कालिन्दी। तत्पुत्रः इलिलः। **आ० ६३। २८॥**

**त्रिगङ्गं।** तीर्थं। **व० ८२। २९॥**

**त्रिगर्तराजः।** सुशर्मा। **भी० ८५। ४॥**

**त्रिगर्ताः।** वाह्लीकदेशस्य दक्षिणपश्चिमतो विद्यमानः विपाशानदीसमीपस्थो देशः। **भी० ९। ६१॥** Jalandhar, a part of the district of Lahore.

**त्रिगर्तिः।** क्षत्रियः। **स० ८। २०॥**

**त्रिजटा।** राक्षसी। **व० २८१। ५५॥**

**त्रितः।** गौतमस्य पुत्रः। तद्भ्रातरौ एकतो द्वितश्च। **स० ७। ११॥** कूपे पतितेन तेन मानसयज्ञकरणं। **श० ३७॥**

**त्रिदिवा।** नदी। **भी० ९। १७॥**

**त्रिपुरासुराः।** तारकासुरस्य पुत्राः। ते च ताराक्षः कमलाक्षः विद्युन्माली च। **क० २४। ७॥** विशेषस्तारकशब्दे द्रष्टव्यः।

तेषां दहनं रुद्रेण। **क० २७। ३५–३७॥ अनु० २६५। ३१॥** [भा० ७। १०॥ मत्स्य० १३०–१३७॥]

**त्रिरावः।** गरुडपुत्रः। **उ० १०१। ११॥**

**त्रिवर्गः।** धर्मार्थकामाः। तन्निरूपणं। **अनु०२१६॥**

**त्रिविक्रमावतारः। स० ४७। १२॥** [भा० ८। २१॥]

**त्रिशङ्कुः।** सू० वं० इक्ष्वाकुवंश्यः क्षत्रियः। **स० १२। ११॥** तत्पुत्रो हरिश्चन्द्रः। **व० ७७। २६॥**

[तस्य सत्यव्रत इति नामान्तरं। तस्य भार्या सत्यव्रता। तस्य कथा। भा० ९। ७॥ रा० १। ५७॥ ब्रह्म० ८॥ हरि० १। १३॥ वायु० ८८। देवीभा० ७। १०–१२॥]

**त्रिशिराः।** विश्वरूपाचार्यः। **उ० ९। ३॥**

**त्रिशूलखातं।** तीर्थं। **व० ८२। ११॥**

**त्रिस्रोतसी।** नदी। **स० ९। २७॥**

**त्रेता।** द्वितीयं युगं। तद्धर्माः। **व० १५१। २५॥ शां० ६९। १४॥**

१ **त्वष्टा।** शुक्राचार्यपुत्रः। **आ० ६६। ३७॥**

२ **त्वष्टा।** द्वादशादित्येष्वन्यतमः। **आ० ६६। १६॥ १३२। ४९॥ शां० २०७। १८॥ अनु० २५५। १८॥**

तत्पुत्रो विश्वरूपाचार्यः। **उ० ९। ३॥ शां० २०७। २०॥**

तस्य पुत्री संज्ञा सवितुर्भार्या। **आ० ६७। ३५॥**

[तस्य भार्या दैत्यानुजा रचना। तत्पुत्रो विश्वरूपाचार्यः। भा० ६। ६॥]

[तस्य विश्वकर्मेति नामान्तरं । भा० ८ । १३ ॥]

**त्वाष्ट्री ।** त्वष्टृपुत्री सवितुर्भार्या । तत्पुत्रावश्विनौ देवभिषजौ । **आ० ६७ । ३५ ॥**

## द.

१ **दक्षः ।** गरुडस्य पुत्रः । **उ० १०१ । १२ ॥**

१ **दक्षः ।** प्रजापतिः । ब्रह्मणो दक्षिणाङ्गुष्ठादुत्पन्नः । **आ० ६३ । २ ॥ ६७ । १० ॥** तद्भार्या ब्रह्मणो वामाङ्गुष्ठाज्जाता । **आ० ६७ । ११ ॥ आ० १ । ४६ ॥ स० ११ । १८ ॥**

तस्य प्रचेतोभ्य उत्पत्तिः । **शां० २९० । १ ॥ आ० ६९ । ८ ॥** [गरुडपु० ५ ॥ भा० ४ । ३० ॥ ६ । ४ ॥ ब्रह्म० २ ॥ विष्णु० १ । १५ ॥]

तस्य भार्या वीरिणी । **आ० ६९ । ९ ॥**

तस्य प्रजोत्पत्तिः । **आ० ६९ । १० ॥ ६६ । ११ ॥**

तस्य कन्याः पञ्चाशत् । **आ० ६७ । ११ ॥ ६९ । ११ ॥**

तद्यज्ञविनाशो वीरभद्रेण । **शां० २९० । ४९ ॥ अनु० २६५ । ११ ॥** [भा० ४ । २ ॥ वायु० ३० ॥]

तेन चन्द्राय यक्ष्मरोगप्राप्तिशापदानं । **श० ३६ । १८–१९ ॥**

[तत्पुत्राः हर्यश्वाः । भा० ६ । ५ ॥ हरि० १ । ३ ॥]

[तस्य वंशः । हरि० १ । ३ ॥ भा० ६ । ६ ॥ विष्णु० १ । ७ ॥ वायु० १० ॥

[सः दशानां प्रचेतसां पुत्रः । तन्माता मारिषा कण्डुनाम्न ऋषेः प्रमोचानाम्न्यामप्सरसि जाता । सैव वार्क्षी । विष्णु० १ । १५ ॥ हरि० १ । २ ॥ ब्रह्म० २ ॥ भा० ४ । ३० ॥]

तत्रेदं बोध्यं । दक्षौ द्वौ । प्रथमः स्वायंभुवमन्वन्तरीयः ब्रह्मणः पुत्रः । तद्भार्या स्वायंभुवमनुपुत्री प्रसूतिः । तस्याः षोडश कन्याः । तासु धर्मप्रजापतिपत्न्यस्त्रयोदश । तासां नामानि । श्रद्धा मैत्री दया शान्तिः तुष्टिः पुष्टिः क्रिया उन्नतिः बुद्धिः मेधा तितिक्षा ह्रीः मूर्तिः इति धर्मप्रजापतेः पत्न्यः ॥ चतुर्दशी कन्या स्वाहा अग्नेर्भार्या । पञ्चदशी स्वधा अग्निष्वात्तानां पितॄणां भार्या । षोडशी कन्या सती भवस्य पत्नी । भा० ४ । १ ॥ स ब्रह्मपुत्रो दक्षः स्वजामातुर्भवस्यापध्यानात्स्वयमेव स्वदेहं तत्याज । भा० ४ । ३० ॥

द्वितीयस्तु चाक्षुषमन्वन्तरे दशप्रचेतोभ्यो वार्क्ष्यां मारिषायां जातः । तद्भार्या पञ्चजनप्रजापतिपुत्री असिक्नी । सैव वीरिणी । पञ्चजनप्रजापतेर्वीरिण इति नामान्तरं । तस्याः पुत्राः हर्यश्वाः शबलाश्वाश्च । ते नारदोपदेशाद्यतयोऽभूवन् । ततो दक्षः षष्टिं कन्या अजीजनत् । तासां धर्मप्रजापतये दश । कश्यपाय त्रयोदश । तस्मा एव तार्क्ष्यनाम्ने पुनश्चतस्रः । एवं कश्यपाय । आहत्य १७ । चन्द्राय २७ ॥ भूताय द्वे । अङ्गिरसे द्वे । कृशाश्वाय द्वे । आहत्य पुत्र्यः षष्टिः । भा० ६ । ५—६ ॥

\+ **दक्षिणगोग्रहणं ।** **वि० ३२ । ६३ ॥**

\+ **दक्षिणदिग्वर्णनं ।** **उ० १०९ ॥**

**दग्धरथः ।** चित्ररथशब्दं पश्यत । **आ० १८६ । ४० ॥**

१ **दण्डः ।** क्षत्रियः । मागधः । **आ० २०१ । १२ ॥** भीमसेनेन राजसूयदिग्विजये जितः । **स० ३१ । १७ ॥** अर्जुनेन हतः । **क० ५४ । २० ॥**

२ **दण्डः ।** चतुर्थोपायः । तस्य श्रैष्ठ्यं । **शां० १५ ॥ १२२ ॥**

**दण्डका ।** वनं । **व० ८३ । ४१ ॥ २७८ । ४७ ॥**

**दण्डकेतुः ।** क्षत्रियः । पाण्डवपक्षीयः पाण्ड्यः । **द्रो० २३ । ६९ ॥**

**दण्डतीर्थं ।** **व० ८३ । १४ ॥**

१ **दण्डधारः ।** क्षत्रियः । मागधः । **आ० ६८ ।**

४६ ॥ **२०१** । ७ ॥ एकरथः । **उ० १६६** । **१७** ॥ अर्जुनेन हतः । **क० ५४** । १५ ॥ भीमसेनेन जितः । **स० ३१** । १७ ॥

२ **दण्डधारः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । १०३॥ भीमसेनेन हतः । **क० ८८** । १९–२३ ॥

३ **दण्डधारः** । क्षत्रियः । पाञ्चाल्यः । कर्णेन हतः । **क० ४४** । २९ ॥

४ **दण्डधारः** । क्षत्रियः । पाण्डवपक्षीयश्चैद्यः । कर्णेन हतः । **क० ५१** । ४९–५० ॥

**दण्डार्तं** । तीर्थं । **व० ८२** । १६२ ॥

**दण्डी** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । १०३ ॥

**दत्तात्रेयः** । विष्णोरवतारः । अत्रिपत्न्यामनसूयायां जातः । **स० ४८** । १ ॥ **अनु० २५७** । ५ ॥

तत्पुत्रो निमिर्नाम ऋषिः । **अनु० १३८** । ५ ॥

[तदवतारकथा । भा० ४ । १ ॥ मार्क० १६ ॥]

१ **दधिमुखः** । सर्पः । **आ० ३५** । ८ ॥ **उ० १०३** । १२ ।

२ **दधिमुखः** । वानरः । **व० २८४** । ७ ॥

**दधिवाहनः** । क्षत्रियः । दिविरथस्य पुत्रः । **शां० ४८** । ८७ ॥

**दधीचः** । ( **दध्यङ् दधीचिः** ) । आथर्वणऋषेः पुत्रः । तद्देहास्थिभिरिन्द्रार्थं त्वष्ट्रा वज्रायुधनिर्माणं । **व० ९९** । ७॥ [भा० ६ । १० ॥]

[तस्य भार्या प्रातिथ्येयी । तत्पुत्रः पिप्पलादः । ब्रह्म० ११० ॥ शिवपु० शतरुद्रसं० २४ ॥]

[तत्पत्नी सुवर्चा । तत्पुत्रः पिप्पलादः । स्कान्दं० केदारखं० १७ ॥]

तस्य पुत्रः सारस्वतऋषिः । अलम्बुषादर्शनेन क्षुभितात् सरस्वतीनद्यां पतितात्तद्रेतसो जातः । **श० ५२** । ५ ॥

**दधीचतीर्थं** । **व० ८१** । १८६ ॥

**दध्यङ्** । दधीचशब्दं पश्यत ॥

**दनायुः** । दक्षप्रजापतिपुत्री कश्यपभार्या । तत्पुत्राश्चत्वारः । विक्षरः बलः वीरः वृत्रश्चेति । **आ० ६६** । १२—३३ ॥

**दनुः** । दक्षप्रजापतिपुत्री कश्यपभार्या । तत्पुत्रा विप्रचित्त्यादयश्चत्वारिंशत् । **आ० ६६** । १२—२६ ॥

**दन्तवक्रः** । क्षत्रियः । कलिङ्गदेशान्तर्गताधिराजदेशाधिपः । सहदेवेन तस्य पराजयः । **स० ३१** । ३ ॥ [तन्माता श्रुतदेवा श्रीकृष्णस्य पितृष्वसा । तत्पिता कारूशो वृद्धशर्मा । भा० ९ । २४ ॥]

[तस्य वधः श्रीकृष्णेन । भा० १० । ७८ ॥]

+ **दन्तोलूखलिकाः** । ऋषयः । **अनु० ४५** । ४१ ॥

१ **दमः** । क्षत्रियः । दमयन्त्या भ्राता । **व० ५०** । ९ ॥ शेषं दमयन्तीशब्दे पश्यत ।

२ **दमः** । ऋषिः । **अनु० ६५** । ५ ॥

३ + **दमः** । इन्द्रियनिग्रहः । तत्प्रशंसा । **उ० ६३** । १२–२७ ॥ **शां० १५८** । २२५ ॥

**दमघोषः** । क्षत्रियः । सो० वं० यदुवंशोत्पन्नस्य ज्यामघस्य सन्ततावुत्पन्नस्य चेदिनाम्नो राज्ञः पुत्रः । चेदिदेशस्य राजा । शिशुपालस्य पिता । तत्पत्नी श्रीकृष्णस्य पितृष्वसा श्रुतश्रवाः । **व० १४**।३॥

[तस्य वंशः । हरि० १ । ३१ ॥ २ । ९३ ॥ भा० ९ । २४ ॥]

**दमघोषसुतः** । शिशुपालः । **स० ७०** । ३८॥

१ **दमनः** । ऋषिः । तत्प्रसादाद्विदर्भराजस्य भीमस्य दमयन्त्याद्यपत्योत्पत्तिः । **व० ५०** । ६ ॥

२ **दमनः** । दमयन्त्या भ्राता । **व० ५०** । ९ ॥

३ **दमनः** । क्षत्रियः । पौरवस्य पुत्रः । कौरवपक्षीयः । **भी० ६१** । २० ॥

**दमयन्ती** । विदर्भदेशाधिपस्य भीमराजस्य पुत्री । नैषधस्य नलराजस्य पत्नी । तस्य पुत्रः इन्द्रसेनः ।

पुत्री इन्द्रसेना । तद्भ्रातरः दमः दमनः दान्तश्च । **व० ५०** ॥

तस्याः स्वयंवरः । **व० ५४** ॥

तस्याः पुनःस्वयंवरप्रथा । **व० ६८ । २५** ॥

तस्याश्चेदिपुरप्रवेशः । **व० ६२ । ४५** ॥

तस्या वने अजगरेण ग्रहणं । **व० ६० । २१** ॥

तया सार्थवाहदर्शनं । **व० ६१ । १११** ॥

**दम्भोद्भवः** । डम्भोद्भवशब्दं पश्यत ।

**दया** । करुणानामा गुणः । तत्प्रशंसा । **अनु० १७८ । २४** ॥

**दरदः** । बाह्लीकः । **आ० ६८ । ५८** ॥

**दरदाः** । देशः । **स० ७८ । ८८** ॥ **भी० ९ । ६७** ॥ Dardistan, north of Kashmir, on the upper bank of the Indus.

**दरिः** । सर्पः । **आ० ५७ । १६** ॥

**दर्दाः** । देशः । **स० ७८ । ९७** ॥

**दर्दुरः** । पर्वतः । **स० १० । ३३** ॥ **७८ । ११३** ॥ **व० २८३ । ४३** ॥ **अनु० २७१ । ३२** ॥ The Southern portion of the Eastern Ghats.

**दर्वाः** । देशः । **स० ७८ । ८८** ॥

**दर्वीसंक्रमणं** । तीर्थं । **व० ८२ । ४५** ॥

**दर्शकाः** । देशः । **भी० ९ । ५३** ॥

**दलः** । तृतीयस्य परीक्षितः पुत्रः । तन्माता मण्डूककन्या सुशोभना नाम । **व० १९५ । ३८** ॥

**दशग्रीवः** । रावणः । **स० ९ । १८** ॥

**दशज्योतिः** । सुभ्राजः पुत्रः । **आ० १ । ५७** ॥

**दशमदिवसयुद्धारम्भः** । **भी० १०७** ॥ तत्समाप्तिः । **भी० १२०** ॥

**दशमालिकाः** । देशः । **भी० ९ । ६६** ॥

**दशरथः** । क्षत्रियः । सू० वं० श्रीरामचन्द्रस्य पिता । अजराजस्य पुत्रः । **व० २७५ । ६** ॥

**दशार्णाः** । दक्षिणकोसलेषु विद्यमानो देशः । **भी० ९ । ४१** ॥ तस्याधिपतिः १ सुधर्मा । **स० ३० । ५** ॥ २ हिरण्यवर्मा । शिखण्डिनः श्वशुरः । **उ० १८९ । ९** ॥ A part of the Chhatisgarh district.

**दशार्णा** । गान्धारराजस्य सुबलस्य पुत्री । गन्धार्याः स्वसा । **आ० ११९ । २४** ॥ शेषं गान्धारीशब्दे पश्यत ।

+ **दशावतारकथा । शां० ३४८** ॥

**दशाश्वः** । क्षत्रियः । सू० वं० इक्ष्वाकोर्दशमः पुत्रः । माहिष्मतीपुराधिपः । तत्पुत्रो मदिराश्वः । **अनु० २ । ६** ॥

**दशाश्वमेधिकं** । तीर्थं । **व० ८१ । ६४** ॥

+ **दस्युधर्माः । शां० ६४ । १५** ॥ **१३३** ॥ **१३५** ॥ **१६७** ॥

**दहनः** । एकादशरुद्रेष्वन्यतमः । **आ० ६७ । ३** ॥

**दानधर्मपर्व । अनु० १—२७१** ॥

**दानपतिः** । अक्रूरः । अक्रूरशब्दं पश्यत ।

+ **दानपात्राणि । अनु० ६०** ॥ **६२** ॥ **अश्व० ९८ । १०८** ॥

+ **दानफलं । ध० २६० । २८** ॥ **२०३ । २०—५४** ॥ **शां० २४०** ॥ **अनु० १०१—१०४** ॥ **१८२** ॥ **२००** ॥ **२३४—२३६** ॥ **अश्व० १०३** ॥

+ **दानवांशा राजानः । आ० ६८ । ३** ॥

**दान्तः** । क्षत्रियः । दमयन्त्या भ्राता । **व० ५० । ९** ॥

**दान्ता** । अप्सराः । **अनु० ५० । ४८** ॥

**दामग्रन्थी** । अज्ञातवासे अश्वाध्यक्षीभूतस्य नकुलस्य नाम । **वि० ४ । ५** ॥

**दामचन्द्रः** । क्षत्रियः । पाण्डवपक्षीयः । **द्रो० १५९ । ३९** ॥

**दामलिप्ताः । (ताम्रलिप्ताः)** । देशः । सुह्मदेशान्तर्गतः । **स० ७८ । ५२** ॥

**दामोदरः** । श्रीकृष्णः । तन्नामनिर्वचनं । **उ० ६९ । ८** ॥

**दामोष्णीषः ।** ऋषिः । **स० ४ । १९ ॥**
**+ दायविभागप्रकाराः । अनु० ८२ ॥**
**+ दारिद्र्यप्रशंसा । शां० १७५ ॥**
**दारुकः ।** श्रीकृष्णसारथिः । **व० २२ । २० ॥ द्रो० १४५ । २६ ॥**
तस्य श्रीकृष्णेन सह सम्भाषणं । **द्रो० ७९ । २३—४७ ॥**
तस्य पाण्डवान्प्रति गमनं ॥ **मौ० ५ । ३ ॥**
**दारुकिः ।** दारुकपुत्रः । प्रद्युम्नसारथिः । **व० १८ । ३ ॥**
**दारुणः ।** गरुडपुत्रः । **उ० १०१ । ९ ॥**
**दाल्भ्यः ।** बकनामा ऋषिः । **व० २६ । ५ ॥ २९९ । १७ ॥**
**दाशरथिः ।** श्रीरामचन्द्रः ।
**दाशराजः ।** सत्यवत्याः पिता उच्चैःश्रवाः । **आ० १०७ । ५७ ॥**
**दाशार्हाः ।** क्षत्रियाः । दशार्हवंशोत्पन्नाः । **आ० २२४ । २८ ॥ स० १२ । ३७ ॥**
**दाशार्ही ।** कुरुभार्या शुभाङ्गी । **आ० ६३ । ४२॥**
**दाशेयी ।** सत्यवती । **आ० १०७ । ५१ ॥**
**दासी ।** नदी । **भी० ९ । ३१ ॥**
**दिगम्बरायाः** स्त्रिया अदर्शनीयत्वं । **शां० २१६ । १२ ॥**
**+ दिग्देवता ।** रात्रिदेवता । उपश्रुतिः । तस्या अष्टावक्रेण ऋषिणा सह स्त्रीस्वभावविषये संवादः । **अनु० ५०—५२ ।**
**+ दिग्विजयपर्व । स० २६—३५ ॥**
**दितिः ।** दक्षप्रजापतिपुत्री कश्यपभार्या । **आ० ६६ । १२ ॥ स० ११ । ३९ ॥**
तत्पुत्रः हिरण्यकशिपुः । **आ० ६६ । १७ ॥**
[ तस्या द्वौ पुत्रौ हिरण्यकशिपुर्हिरण्याक्षश्च । तथा एकोनपञ्चाशन्मरुतश्च । भा० ६ । १८ ॥ हरि० १ । ३ ॥ ]
१ **दिलीपः ।** क्षत्रियः । सू० वं० सगरपौत्रस्यांशुमतः पुत्रः । **व० १०७ । ४० ॥ स० ८ । १४॥ वि० ५३ । १५ ॥** तत्पुत्रो भगीरथः ।
तस्य चरित्रं । **द्रो० ६१ ॥ शां० २८ । ७१ ॥**
[ रा० १ । ४२ ॥ मत्स्यपु० १२ ॥ ]
तत्कृतः पुष्करास्तेये शपथः । **अनु० १४३ । २३ ॥**
[ तेन तद्भार्यया सुदक्षिणया च पुत्रोत्पत्त्यर्थं वसिष्ठाज्ञया कामधेनुसेवा । तस्याः प्रसादेन रघुनामकपुत्रोत्पत्तिः । पद्म० १९७ ॥ ]
२ **दिलीपः ।** सर्पः । **उ० १०३ । १५ ॥**
**दिवाकरः ।** गरुडपुत्रः । **उ० १०१ । १४ ॥**
**दिविरथः ।** दधिवाहनस्य पिता । **शां० ४८ । ८७ ॥**
१ **दिवोदासः ।** काशीपतेर्भीमसेनस्य पुत्रः । तत्पुत्रः प्रतर्दनः । ययातिपुत्र्यां माधव्यां जातः । **उ० ११७ । १ ॥ स० ८ । १२ ॥ अनु० २७१ । ५७ ॥**
तस्य वीतहव्यैः सह युद्धं । **अनु० ८ । १७—३७ ॥**
२ [ **दिवोदासः ।** मुद्गलाचार्यस्य पुत्रः । तत्स्वसा शतानन्दमाताऽहल्या । भा० ९ । २१ ॥ तद्वंश्यः सोमकः ॥ ]
३ [ **दिवोदासः ।** वध्र्यश्वस्य मेनकायां जातः पुत्रः । तत्स्वसाऽहल्या । हरि० १ । ३२ ॥ ]
४ [ **दिवोदासः ।** वाराणस्यधिपः । धन्वन्तरिपुत्रस्य केतुमतः पुत्रः । तस्य भीमरथ इति नामान्तरं । वायु० ९२ ॥ ]
**दीपकः ।** गरुडपुत्रः । **उ० १०१ । ११ ॥**
**+ दीपदानफलं । अनु० १५५ । ४५ ॥**
**दीप्तकीर्तिः ।** स्कन्दः । **व० २३३ । ३ ॥**
**दीप्तलोचनः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **भी० ९६ । २७ ॥**
**दीर्घः ।** क्षत्रियः । मगधराजः । पाण्डुना हतः । **आ० १२२ । २७ ॥**
**दीर्घजिह्वः ।** दनुपुत्रोऽसुरः । **आ० ६६ । ३० ॥ ६८ । ३९ ॥**

**दीर्घतमाः ।** ब्रह्मऋषिः । उचथ्यस्य पुत्रः । तन्मातरि ममतायां तेन सगर्भायां सत्यां तां यब्धुमारब्धवतो ज्येष्ठपितृव्यस्य बृहस्पतेः शापादन्धो जातः । तत्पत्नी प्रद्वेषी । तत्पुत्रा गौतमादयः । **आ० ११३ । २२** ॥ **स० ७ । ११** ॥ **२१ । ५** ॥ **शां० ३५० । ५४** ॥ **अनु० २७१ । ४२** ॥ तद्भ्राता भरद्वाजः ।

तेन सो० वं० अनुकुलोत्पन्नस्य बलिनामकस्य राज्ञो भार्यायां सुदेष्णायां अङ्गवङ्गादिपञ्चपुत्रोत्पादनं । **आ० ११३ । ५२** ॥ सुदेष्णाया दास्यां च कक्षीवदादीनां एकादशानां पुत्राणामुत्पादनं । **आ० ११३ । ४७** ॥

**दीर्घनेत्रः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १२७ । ४२** ॥

**दीर्घप्रज्ञः ।** क्षत्रियः । **आ० ६८ । १६** ॥

**दीर्घबाहुः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **भी० ९६ । २७** ॥

**दीर्घरोमः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । १३** ॥

**दीर्घलोचनः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । १०४** ॥ **१४८ । २१** ॥

**दीर्घायुः ।** क्षत्रियः । श्रुतायुषः पुत्रः । तद्भ्राता नियुतायुः । अर्जुनेन हतः । **द्रो० ९३ । २७–२९** ॥

+ **दुःखं ।** तत्स्वरूपकथनं । **व० १९६ । १६—३५** ॥ तस्य पापफलत्वं । **व० २१३** ॥

**दुराधनः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । १०१** ॥

**दुराधरः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । १०** ॥

**दुर्गा ।** तमोऽभिमानिनी लक्ष्मीः । तत् धाष्ठरक्कृता । **वि० ८** ॥

ततस्तुतिरर्जुनकृता । **भी० २३** ॥

**दुर्गाणि षट् । शां० ८६ । ५** ॥

[तत्स्तुतिः । हरि० २ । ३ ॥ अनिरुद्धकृता । हरि० २ । १२० ॥ तत्स्तुतिः प्रद्युम्नकृता । हरि० २ । १०७ ॥]

+ **दुर्गातितरणोपायः । शां० ११०** ॥

**दुर्गालाः ।** देशः । **भी० ९ । ५२** ॥

१ **दुर्जयः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १३३ । ४०** ॥

२ **दुर्जयः ।** क्षत्रियः । सू० वं० इक्ष्वाकुवंश्यस्य सुवीरस्य पुत्रः । तत्पुत्रो दुर्योधनः । **अनु० २ । ११** ॥

३ **दुर्जयः ।** क्षत्रियः । पाञ्चाल्यः । कर्णेन हतः । **क० ५१ । ४६** ॥

**दुर्जया ।** वातापिदानवपुरी । अस्या मणिमतीति नामान्तरं । **व० ९४ । १—४** ॥

**दुर्धरः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १३५ । ३०** ॥

**दुर्निमित्तानि ।** उत्पातशब्दं पश्यत ।

**दुर्मदः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १५६ । ४२** ॥

**दुर्मर्षणः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **श० २५ । ५—८** ॥

१ **दुर्मुखः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । तत्पराजयः सहदेवेन । **द्रो० १०७ । १९** ॥ भीमेन हतः । **द्रो० १३४ । २०** ॥ तस्य पुत्रो यशोधरः । **द्रो० १८५ । ५** ॥

२ **दुर्मुखः ।** असुरः । **स० ९ । १७** ॥

३ **दुर्मुखः ।** क्षत्रियः । **स० ४ । २७** ॥

१ **दुर्योधनः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य प्रथमः पुत्रः । तन्माता गान्धारी । **आ० ६३ । ५८** ॥ रथोदारः । **उ० १६५ । १९** ॥

तस्य कल्यंशत्वं । **आ० ६८ । ८७** ॥

तस्योत्पत्तिः । **आ० ६४ । १६०** ॥ **१२९ । ६८** ॥

तद्भ्रातॄणां नामानि धृतराष्ट्रशब्दे द्रष्टव्यानि ।

तस्य द्रोणाचार्याद्विद्याभ्यासः । **आ० १४२** ॥

[तस्य बलरामाद्गदाविद्याप्राप्तिः । भा० १० । ५७ ॥ विष्णु० ४ । १३ ॥]

तद्भार्या काशिराजसुता । आ० २२७ । १ ॥ तस्य विवाहः । आ० १३१ । १७ ॥

तस्य श्वशुरः । कलिङ्गदेशाधिपश्चित्राङ्गदः । शां० ४ । २ ॥

तस्य भार्या भानुमती इति प्रसिद्धिः ।

तस्य पुत्रो लक्ष्मणः । भी० ७३ । ३२ ॥ द्रो० ४६ । ११ ॥

[तस्य पुत्री लक्ष्मणा । श्रीकृष्णपुत्रस्य जाम्बवतेयस्य साम्बस्य भार्या । भा० १० । ६८ ॥]

तस्य द्रुपदनगरे द्रुपदेन पराजयः । आ० १४८।२३॥

तस्य पराजयो युधिष्ठिरेण । आ० २०५ । ४३ ॥

तस्य पराजयो भीमसेनेन । आ० २१८ । ५८ ॥ भी० ७९ । १७ ॥

तस्य पराजयः सात्यकिना । द्रो० ११६ । २५ ॥

तस्य पराजयोऽर्जुनेन । वि० ६६ । ४४ ॥ द्रो० १०३ । ३१ ॥

तस्य पाण्डवसमृद्धिदर्शनेन संतापः । आ० १५२ । १० ॥

तस्य धृतराष्ट्रेण संवादः । आ० १५४ । २८ ॥

तस्य पतनं युधिष्ठिरसभायां जले स्थलभ्रमेण । स० ७४ । ६ ॥

तस्य द्वैतवनगमनं घोषयात्राव्याजेन । व० २४० । २३ ॥

तस्य चित्रसेनेन गन्धर्वेण बद्धा नयनं । व० २४३ ।७॥

तस्य प्रायोपवेशः । व० २५० । २० ॥

तस्य पाताललोकप्रापणं दैत्यसृष्टया कृत्यया । व० २५२ । २९ ॥

तद्गृहं प्रति दुर्वासस आगमनं । व० २६३ । ७ ॥

तेन दुर्वाससं प्रति वने वसतः पाण्डवान्प्रति तेभ्यः शापदानेच्छया अकाले गमनप्रार्थना । व० २६३ । १९–२३ ॥

तेन वैष्णवयज्ञकरणं । व० २५६ । २० ॥

तं प्रति चारैः कीचकवधकथनं । वि० २९ । २७॥

तेन सुशर्मणो विराटनगरप्रेषणं । वि० ३२ ॥

तस्य द्वारकागमनं युद्धे श्रीकृष्णस्य स्वसाहाय्यप्रार्थनार्थं । उ० ७ । ५ ॥

तेन शल्यं प्रति युद्धे स्वस्य साहाय्यकरणप्रार्थना । उ० ८ । १८ ॥

तस्य जलस्तंभनादिसमर्थमन्त्रवत्त्वं । उ० ६१ ॥

तेन सन्ध्यर्थमागच्छतः श्रीकृष्णस्य मार्गे सभानिर्मापणं । उ० ८५ ॥

तेन पाण्डवसाहाय्यार्थं गच्छतः शल्यस्य मार्गे सभानिर्मापणं । उ० ८ । ८ ॥

तेन श्रीकृष्णस्य भोजनायामन्त्रणं । उ० ९१ । १३ ॥

तेन कण्वापहासः । कण्वेन तस्मै शापदानं च । उ० १०५ । ४०–४३ ॥

तेन श्रीकृष्णं प्रति स्वेषां निरपराधत्वकथनं । उ० १२७ । ६ ॥

तत्सेनायां भीष्मेण रथातिरथसंख्यानं । उ० १६५॥

तस्य द्रोणाचार्येणाभिमन्त्रितकवचबन्धः । द्रो० ९४। ३९ ॥

तं प्रति कृपाचार्येण सन्धिविधानं । श० ३ ॥

तं प्रति परशुरामेण सन्धिविधानं । उ० ९६ । ३॥

तं प्रति द्रोणाचार्येण सन्धिविधानं । उ० १३९ । २२ ॥

तं प्रति भीष्माचार्येण सन्धिविधानं । भी० १२१ । ५१ ॥

तं प्रत्यश्वत्थामाचार्येण सन्धिविधानं । क० ९४ । २० ॥

तस्य वधकथा संक्षेपेण । श० १ । २९ ॥

तस्यार्जुनेन निन्दा । श० २३ । २०—५२ ॥

तस्य श्रीकृष्णेन निन्दा । तेन श्रीकृष्णगर्हणं च । शां० ६२ । १७–२६ ॥

तेनात्मस्तुतिः । श० ६१ । ५९ ॥

तस्य युद्धात्पलायनं । श० २४ । २३ ॥

तस्यान्वेषणमश्वत्थाम्ना । **श० २५ । ४० ॥**
तस्य द्वैपायनह्रदप्रवेशः । **श० २९ । ४४ ॥**
तं प्रति युधिष्ठिरेण निष्ठुरवचनं । **श० ३१ । १६ ॥**
तेन ह्रदादुत्थानं । **श० ३२ । ४८ ॥**
तस्य गदायुद्धोपक्रमः । **श० ३३ । ५२ ॥**
तस्योरुभेदनं भीमेन । **श० ५९ । ४६ ॥**
तस्य समाश्वासनं युधिष्ठिरेण । **श० ६० । २१ ॥**
तच्छिरसि पुष्पवृष्टिः । **श० ६१ । ६४ ॥**
तं भग्नसक्थिकं दृष्ट्वाऽश्वत्थामादीनां शोकः । **श० ६६ । ९ ॥**
तस्य प्राणत्यागः । **सौ० ९ । ५७ ॥**

**२ दुर्योधनः** । क्षत्रियः । सू० वं० इक्ष्वाकुवंश्यस्य दुर्जयस्य पुत्रः । तत्पुत्री सुदर्शना अग्नेर्भार्या । **अनु० २ । १२–५० ॥**

**दुर्वासाः** । महर्षिः । **आ० ६८ । १३३ ॥ स० ७ । ११ ॥ ११ । २३ ॥** [अत्रेः पुत्रः । शङ्करस्यांशभूतः । तन्माता अनसूया । तद्भ्रातरौ दत्तात्रेयः सोमश्च । भा० ४ । १ ॥]
तस्य कुन्त्या परिचर्या । तेन तस्या मन्त्रोपदेशश्च । **आ० ६८ । १३२ ॥ १२० । ५ ॥ १२८ । ६२ ॥ व० ३०५ । २० ॥**
तस्य परिचर्या दुर्योधनेन । **व० २६३ । १० ॥**
तस्य वने वसत्सु पाण्डवेषु दुर्योधनप्रार्थनया द्रौपदीभोजनकालानन्तरं गमनं । **व० २६४ । १ ॥** [शिवपु० शतरुद्रसं० ३७ ॥]
तस्य सशिष्यवर्गस्य पाण्डवभयात्पलायनं । **व० २६४ । ३४ ॥**
[ तेनाम्बरीषमारणेच्छया कृत्योत्पादनं । तस्य अम्बरीषरक्षणार्थं विष्णुना स्थापितात्सुदर्शनायुधाद्भिया पलायनं । भा० ९ । ४ ॥]
[ तस्य शापादिन्द्रस्य राज्यभ्रंशः । ब्रह्मवैवर्त० प्रकृतिखं० ३६ ॥ ]
तस्य परिचर्या श्रीरुक्मिणीकृष्णाभ्यां । **अनु० २६४ ॥**
तस्य परिचर्या कुशिकेन । **अनु० ८७ ॥**
तेन श्वेतकिराजयाजनं । **आ० २४९ । ५९ ॥**
तेन श्रीहिद्रोणापरनाम्नो मुद्गलस्य परीक्षणार्थं तत्समीपगमनं । **व० २६१ । ११ ॥**

**दुर्विभागाः** । देशः । **स० ७८ । ८८ ॥**

**दुर्विमोचनः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **द्रो० १२७ । ४४ ॥ श० २५ । ४ ॥**

**दुर्विरोचनः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९७ ॥**

**दुर्विषहः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० २०१ । १ ॥ भी० ७७ । ७ ॥**
भीमसेनेन हतः । **श० २५ । १७ ॥**

**दुलिदुहः** । क्षत्रियः । **आ० १ । २५८ ॥**

**+ दुश्शकुनानि** । उत्पातशब्दं पश्यत ।

**दुश्शलः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९३ ॥ १३१ । २ ॥**

**दुश्शला** । धृतराष्ट्रस्य पुत्री । जयद्रथस्य भार्या । **आ० ६८ । १०९ ॥**
तदुत्पत्तिः । **आ० १३० । १९ ॥**
तस्या विवाहः । **आ० ६८ । १०९ ॥**
तयाऽर्जुनप्रसादनं । **अश्व० ७८ । ३३ ॥**

**दुश्शासन** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य द्वितीयः पुत्रः । **आ० ६३ । ५८ ॥ २०१ । १ ॥ वि० ३७ । २ ॥ भी० ७७ । ७ ॥**
रथोदारः । **उ० १६५ । १९ ॥**
तेन द्रौपदीवस्त्रापहारः । **स० ९० । ४० ॥**
तस्य पराभवोऽर्जुनेन । **वि० ६५ । ३० ॥ द्रो० ९० ॥**
तस्यार्जुनेन सह युद्धं । **भी० ११० । १९ ॥**
तस्याभिमन्युना सह युद्धं । **द्रो० ३९ । २७ ॥**
तस्य द्रोणेनोपालम्भः । **द्रो० १२२ । १–२७ ॥**
तत्पुत्रेणाभिमन्योर्वधः । **द्रो० ४९ । १३ ॥**
तत्पुत्रस्य द्रौपदेयेन वधः । **क० २ । १६ ॥**
तस्य पराभवः सात्यकिना । **द्रो० १२३ । १० ॥**
तस्य भुजोत्पाटनं भीमसेनेन । **क० ८७ । २८ ॥**

तस्य वक्षोविदारणं भीमसेनेन । **क० ८७ । २९ ॥**
तस्य प्राणत्यागः । **क० ८८ । १८ ॥**
तच्छववर्णनं गान्धार्या । **स्त्री० १८ । १९ ॥**
**दुष्कर्णः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९५॥ **१३१ ।** ३ ॥ **भी० ७७ ।** ८ ॥ तस्य शतानीकेन पराभवः । **भी० ७९ ।** ५२ ॥ भीमसेनेन हतः । **द्रो० १५६ ।** ४३ ॥
**+ दुष्कर्म ।** पापशब्दं पश्यत ।
**+ दुष्कुलादपि स्त्रीग्रहणं । शां० १६३ ।** ३२ ॥
**+ दुष्टेष्वपि गुणग्रहणं । आ० ९९ ।** १६ ॥
**दुष्पराजयः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ ।** २ ॥
**दुष्प्रधर्षः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भी० **६४ ।** २९ ॥ **क० ४६ ।** ८ ॥ भीमेन हतः । **श० २५ ।** १६ ॥
**दुष्प्रधर्षणः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९४ ॥ **१३१ ।** ३ ॥ **२०१ ।** १॥
**दुष्प्रहर्षः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९६ ॥
**१ दुष्यन्तः ।** क्षत्रियः । सो०वं० इलिलस्य पुत्रः । तस्य प्रथमा भार्या लाक्षी । तस्या लक्षणेति नामान्तरं । तत्पुत्रो जनमेजयः । द्वितीया भार्या शकुन्तला । तत्पुत्रो भरतः । **आ० ६३ ।** २९ ॥ **८८ ।** १८ ॥
तस्य भ्रातरः । शूरो भीमो वसुः प्रवसुश्च । **आ० ८८ ।** १७ ॥
तस्योपाख्यानं । **आ० ८९-१०१** ॥ [भा० ९ । २० ॥ ब्रह्म० १३ ॥ ]
तस्य मृगयार्थं गमनं । **आ० ९० ॥**
तस्य कण्वाश्रमगमनं । **आ० ९१ ।** ३७ ॥
तस्य शकुन्तलया संवादः । **आ० ९२ ।** ९७ ॥
तं प्रति शकुन्तलायाः परुषसान्त्ववचने । **आ० ९९ ॥**
तेन शकुन्तलायास्तद्भार्यात्वे आकाशवाणीश्रवणं । **आ० १०० ।** २ ॥
स शकुन्तलया विवाहः । **आ० ९४ ।** ३४ ॥
**२ दुष्यन्तः ।** क्षत्रियः । सो० वं० अजमीढस्य पुत्रः । तन्माता नीली । तद्भ्राता परमेष्ठी । **आ० १०१ ।** २० ॥
**दुस्सहः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९३ ॥ **१३१ ।** २ ॥ **भी० ७७ ।** ७ ॥ भीमसेनेन हतः । **द्रो० १३५ ।** ३६ ॥
**दूषणः ।** खरस्य बन्धू राक्षसः । **व० २७८ ।** ५० ॥
**दृढः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १३७ ।** ३० ॥ **१५८ ।** १९ ॥
**दृढक्षत्रः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ ।** ९९ ॥ **१३१ ।** ८ ॥
**दृढधन्वा ।** क्षत्रियः । **आ० २०१ ।** १५ ॥
**दृढरथः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ ।** १०४ ॥ भीमेन हतः । **द्रो० १५८ ।** १९ ॥
**दृढरथाश्रयः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ ।** १२ ॥
**दृढवर्मा ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६७ ।** ९९ ॥ **१३१ ।** ८ ॥
**दृढव्यः ।** ऋषिः । **अनु० २५५ ।** ३४ ॥
**दृढसन्धः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ ।** १०० ॥ **१३१ ।** ९ ॥
**दृढसेनः ।** पाण्डवपक्षीयः क्षत्रियः । द्रोणेन हतः । **द्रो० २१ ।** ५२ ॥
**दृढस्युः । (दृढास्यः) ।** अगस्त्यऋषेः पुत्रः । तन्माता लोपामुद्रा । तस्य इध्मवाह इति नामान्तरं । **व० ९७ ।** ३१ ॥
**दृढहस्तः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ ।** १०२ ॥ **१३१ ।** १० ॥
**दृढायुः ।** क्षत्रियः । सो० वं० ऐलस्य पुरूरवसः

पुत्रः । तन्माता उर्वशी अप्सराः । तद्भ्रातरः आयुः धीमान् अमावसुः वनायुः शतायुश्च । **आ० ६९ । २८ ॥**

**दृढायुधः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ । ९९ ॥**

**दृढाश्वः** । क्षत्रियः । सू० वं० कुवलाश्वपुत्रः । **व० २०७ । ३७ ॥** [तत्पुत्रो हर्यश्वः । भा० ९ । ६ ॥]

**दृढेयुः** । ऋषिः । **अनु० २५५ । ३६ ॥**

**दृषद्वती** । नदी । **व० ८१ । ८७ ॥ ८८ । ११ ॥ भी० ९ । १५ ॥ शां० ५७ ॥ ३० ॥** The Caggar which flowed through Ambala and Sirhind, now lost in the sands of Rajaputana.

**देवाः** । सुराः । तेषां दैत्यैर्युद्धं । **आ० १९ ॥ स० ५२ । १० ॥** तेषां गरुडेन सह युद्धं । **आ० ३२ । १ ॥**

तदंशा राजानः । **आ० ६८ । ६८ ॥**

तेषां चातुर्वर्ण्यं । **शां० २०७ । २६ ॥**

तैर्नैमिषारण्ये यज्ञकरणं । **आ० २१४ । १ ॥ सौ० १८ । १ ॥**

तेषां मनुष्यचित्तस्थविज्ञानसामर्थ्यं । **अनु० २३७ । २० ॥**

**देवकः** । क्षत्रियः । पूर्वजन्मनि गन्धर्वपतिः । देवक्याः पिता । आहुकस्य पुत्रः । उग्रसेनस्य भ्राता । **आ० ६८ । ६८ ॥** [भा० ९ । २४ ॥ विष्णु० ४ । १४ ॥]

१ **देवकी** । देवकपुत्री वसुदेवभार्या । श्रीकृष्णस्य माता । **स० २३ । ९ ॥**

तस्या विवाहः । **स० २३ । ९ ॥** [भा० १० । १ ॥]

तस्या नारदेन संवादः । **अनु० ९९ । २ ॥**

तस्या भर्त्रा सह सहगमनं । **मौ० ८ । १८–२४ ॥**

२ **देवकी** । शैब्यस्य पुत्री । युधिष्ठिरभार्या । तत्पुत्रो यौधेयः । **आ० ६३ । ७५ ॥**

**देवकूटतीर्थं** । **व० ८२ । १४१ ॥**

**देवगन्धर्वाः** । तेषां नामानि । **आ० ६६ । ४२ ॥ १२२ । ३६ ॥**

**देवदत्तः** । अर्जुनस्य शङ्खः । **स० ३ । ९ ॥**

**देवप्रस्थः** । देशः । **स० २८ । १३ ॥**

**देवभ्राट्** । **आ० १ । ५६ ॥**

**देवयानी** । शुक्राचार्यपुत्री । ययातेर्भार्या । **आ० ६३ । ६ ॥ ६९ । ३७ ॥** [तन्माता प्रियव्रतपुत्री ऊर्जस्वती । भा० ५ । १ ॥]

तस्याः कथा । **आ० ७०—७७ ॥** [भा० ९ । १८ ॥ मत्स्य० २७—३५ ॥]

तस्या वनक्रीडा । **आ० ७२ । ४ ॥**

तस्याः शर्मिष्ठया कूपे प्रक्षेपः ययातिनोद्धरणं च । **आ० ७२ । १३—२३ ॥**

तस्या विवाहः । **आ० ७५ । ४७ ॥**

तस्याः पुत्रोत्पत्तिः । **आ० ७६ । ८ ॥** [मत्स्य० ३१ ॥]

तत्पुत्रौ यदुः तुर्वसुश्च । **आ० ७७ । १२ ॥**

१ **देवरातः** । ऋषिः । शुनश्शेपः । **अनु० ६ । ८ ॥** स विश्वामित्रपुत्रोप्यभवत् । **अनु० ७ । ५० ॥**

२ **देवरातः** । क्षत्रियः । **स० ४ । ३२ ॥**

**देवलः** । प्रत्यूषस्य पुत्रो देवर्षिः । **आ० ६७ । २६ ॥ स० ४ । १६ ॥** असित इत्यस्यैव नामान्तरमिति भाति । **शां० २८१ । १ ॥**

तेन देवलोके पितॄन्प्रति महाभारतकथनं । **आ० १ । १२४ ॥**

तेन जैगीषव्ययोगप्रभावदर्शनं । **श० ५१ । ७ ॥**

तस्य नारदेन संवादः । **शां० २८१ । १ ॥**

**देवव्रतः** । भीष्मः । **आ० ६३ । ५० ॥ १०७ । ७३ ॥**

१ **देवशर्मा** । ऋषिः । तद्भार्या रुचिः यामिन्द्रश्चकमे । **अनु० ७५ । १८ ॥**

२ **देवशर्मा** । ऋषिः । सर्पसत्रे सदस्यः । **आ० ५३ । ९ ॥**

**देवश्रवाः** । ऋषिः । **शां० ४६** । ६ ॥
**देवसेना** । दक्षप्रजापतिकन्या । **व० २२६** । १ ॥ स्कन्दस्य भार्या । **व० २२९** । ५२ ॥
**देवसेनाप्रियः** । सुब्रह्मण्यः । **व० २३३** । ८ ॥
**देवस्थानः** । ब्रह्मर्षिः । **शां० २०** । १ ॥ **४६** । ६ ॥
**देवहव्यः** । ऋषिः । **स० ७** । १९ ॥
**देवह्रदः** । तीर्थविशेषः । **व० ८३** । ३८ ॥
**देवातिथिः** । क्षत्रियः । सो० वं० पूरुवंश्यस्याक्रोधनस्य पुत्रः । तन्माता कालिङ्गी कण्डूः । तद्भार्या वैदर्भी मर्यादा । तत्पुत्रः ऋचः । **आ० ६३** । २२ ॥
१ **देवापिः** । क्षत्रियः । सो० वं० प्रतीपपुत्रः । तन्माता सुनन्दी । तद्भ्रातरौ शन्तनुः बाह्लीकश्च । अयं बाल्य एव प्रवव्राज । **आ० ६३** । ४७ ॥ **१०१** । ४९ ॥ [ तेन योगमास्थाय कलापग्रामे वासः । भा० ९ । २२ ॥ १२ । २२ ॥ ]
२ **देवापिः** । क्षत्रियः । सः पृथूदकतीर्थे तपस्तप्त्वा ब्राह्मणो बभूव । **श० ४१** । १० ॥
३ **देवापिः** । चैद्यः क्षत्रियः । कर्णेन हतः । **क० ५१** । ४९ ॥
**देवारण्यं** । क्षेत्रं । **आ० २४५** । ३२ ॥
**देवावृधः** । **शां० २४०** । २१ ॥ **अनु० २००** । ७ ॥
**देविका** । नदी । **भी० ९** । १६ ॥
**देविकातीर्थं** । **व० ८०** । १०३ ॥
**देवी** । वरुणस्य भार्या । **आ० ६७** । ५२ ॥ तत्पुत्रो बलः । पुत्री मद्याभिमानिनी सुरा ।
**देवीतीर्थं** । **व० ८१** । ५१ ॥
**देशाः** । जनपदाः । तेषां नामानि । **भी० ९** ॥ [ मत्स्य० ११४ ॥ ]
**दैत्यः** । असुरशब्दं पश्यत ।
**दैत्यद्वीपः** । गरुडस्य पुत्रः । **उ० १०१** । ११ ॥
**दैत्यसेना** । दक्षप्रजापतिसुता । **व० २२६** । १ ॥
+ **दैवपुरुषकारयोर्मिलितयोः कार्यनिर्वाहकत्वं** । **सौ० २** । ९ ॥ **अनु० ९** । १ ॥
+ **दैवस्य श्रैष्ठ्यं** । उ० २९ । २० ॥ **द्रो० २४** । ५ ॥ **श० ६४** । ४६ ॥
+ **दौहित्रप्रशंसा** । **आ० ८७** । २८–३० ॥
**द्युः** । अष्टवसुष्वन्यतमः । यो वसिष्ठशापाद्भीष्मोऽजनि । **आ० १०६** । १५ ॥
१ **द्युतिमान्** । क्षत्रियः । सू० वं० इक्ष्वाकुवंश्यस्य मदिराश्वस्य पुत्रः । तत्पुत्रः सुवीरः । **अनु० २** । ९ ॥
२ **द्युतिमान्** । क्षत्रियः । साल्वराजः । यः ऋचीकाय स्वराज्यं दत्तवान् । **शां० २४०** । **अनु० २००** । २३ ॥
१ **द्युमत्सेनः** । क्षत्रियः । प्राक्कालीनः साल्वराजः । सत्यवतः पिता । सावित्र्याः श्वशुरः । तस्य पश्चादन्धत्वप्राप्तिः राज्यनाशश्च । **व० २९५** । ७ ॥
तस्य चक्षुःप्राप्तिः । **व० २९९** । १ ॥
तस्य राज्यप्राप्तिः । **व० ३००** । ११ ॥
तस्य सत्यवता संवादः । **शां० २७३** । २ ॥
२ **द्युमत्सेनः** । क्षत्रियः । साल्वदेशाधिपः । राजसूयदिग्विजयेऽर्जुनेन जितः । **स० ४** । ३७ ॥ **२७** । ११ ॥
३ **द्युमत्सेनः** । क्षत्रियः । श्रीकृष्णेन हतः । **स० ६१** । ७ ॥ अयं द्वितीयद्युमत्सेनादनन्य इति भाति ।
+ **द्यूतं** । देवनं । युधिष्ठिरस्य । **स० ८४** । २१ ॥
,, नलराजस्य । **व० ५६** । ९ ॥
,, विराटराजस्य । **वि० ७०** । १२ ॥
**द्यूतपर्व** । **स० ७३—९९** ॥
**द्यौः** । ( **द्युः** ) । अष्टवसुष्वन्यतमः । यो वसिष्ठशापाद्भूमौ भीष्मोऽभूत् । **आ० १०६** । १७–४० ॥
**द्रमिडाः** । (**द्रविडाः**) । देशः । **भी० ९** ।

५८ ॥ Part of the Deccan from Madras to Seringapatam and cape Comorin. Its capital was Kanchipura modern name Conjeevaram.

**द्रविणः** । धरनामकवसोः पुत्रः । **आ० ६७ ।** २१ ॥

**द्रुपदः** । क्षत्रियः । पाञ्चालराजः । यज्ञसेनः । **आ० १८० ।** ६ ॥ महारथः । **उ० १७० ।** ८ ॥ [सोमकस्य पौत्रः । पृषतस्य पुत्रः । भा० ९ । २२ ॥ हरि० १ । ३२ ॥ गरुडपु० १४० ॥ तस्य वंशोप्यत्र द्रष्टव्यः ।]

तस्योत्पत्तिः । **आ० १४० ।** ४३ ॥ **१५० ।** १२ ॥ **१८० ।** ६ ॥

तस्योत्पत्तिः । मेनकादर्शनक्षुभितात्पृषतराजस्य रेतसः । **आ० १५० ।** १० ॥

तद्राजधान्याः माकन्दीति नाम । **आ० १४८ ।** ७८ ॥

सोग्निवेश्यस्य शिष्यः । द्रोणाचार्यस्य सतीर्थ्यश्च । **आ० १४० ।** ४४ ॥

तं प्रति धनयाचनार्थं द्रोणाचार्यस्य गमनं । **आ० १४० ।** ६९ ॥

तस्य ग्रहणार्थं कुरुपाण्डवानां पाञ्चालनगरगमनं । **आ० १४८ ।** ७ ॥

तस्य जीवग्राहग्रहणमर्जुनेन । **आ० १४८ ।** ६३ ॥

तस्य पत्नी सौत्रामणी (कौसवी) । **आ० १४९ ।** ४९ ॥

तस्य पुत्रार्थं तपश्चरणं । शिखण्डिनामकपुत्रोत्पत्तिश्च । **उ० १८८ ।** ३ ॥

तेन पुनः पुत्रोत्पत्तिं प्रति यागकरणं । **आ० १४९ ।** ४८ ॥

तस्य धृष्टद्युम्ननामकपुत्रस्य कृष्णानामकपुत्र्याश्च यज्ञकुण्डादुत्पत्तिः । **आ० १८१ ।** ४०–४५ ॥

तस्यार्धराज्यापहारो द्रोणाचार्येण । **आ० १४८ ।** ७३ ॥

तन्नामनिर्वचनं । **आ० १५० ।** १२–१४ ॥

तस्यान्ये पुत्राः सुमित्रादयः । तेषु सुमित्रः (सौमित्रः) जयद्रथेन हतः । प्रियदर्शनः कर्णेन हतः । **आ० २१८ ।** ३० ॥ वीरकेतुः द्रोणाचार्येण हतः । **द्रो० १२२ ।** ४० ॥ सुरथः शत्रुञ्जयश्च द्रोणाचार्येण हतौ । **द्रो० १५७ ।** १८० ॥ ध्वजकेतुः । **आ० २१८ ।** १९ ॥

तेन धृतराष्ट्राय पाण्डवैः साकं सन्ध्यर्थं पुरोहितप्रेषणं । **उ० ६ ।** १७ ॥

तस्य वधः द्रोणाचार्येण । **द्रो० १८७ ।** ४२ ॥

१ **द्रुमः** । सूतस्य अधिरथस्य पुत्रः । कर्णस्य भ्राता । भीमसेनेन हतः । **द्रो० १५६ ।** २७ ॥

२ **द्रुमः** । क्षत्रियः । **आ० ६८ ।** ८ ॥

३ **द्रुमः** । किंपुरुषाचार्यः । **स० १० ।** ३० ॥ **६७ ।** १६ ॥

१ **द्रुमसेनः** । क्षत्रियः । **आ० ६८ ।** ३५ ॥ धृष्टद्युम्नेन हतः । **द्रो० १७१ ।** २२ ॥

२ **द्रुमसेनः** । शल्यस्य चक्ररक्षकः । युधिष्ठिरेण हतः । **श० ११ ।** ५३ ॥

१ **द्रुह्युः** । क्षत्रियः । सो० वं० ययातेः पुत्रः । तन्माता शर्मिष्ठा । **आ० ६३ ।** ७ ॥ **६९ ।** ३८ ॥ तद्भ्रातरौ अनुः पूरुश्च । [तस्य वंशः । भा० ९ । २३ ॥]

२ **द्रुह्युः** । क्षत्रियः । सो० वं० मतिनारपुत्रः । **आ० ८८ ।** १३ ॥

१ **द्रोणः** । अङ्गिरसां वरः । आचार्यः । भरताचार्यः । भारद्वाजः । भरद्वाजस्य पुत्रः । शोणाश्वः । रुक्मरथः । रथयूथपयूथपः । **उ० १६७ ।** १४ ॥

तस्योत्पत्तिः । घृताचीदर्शनक्षुभितात् द्रोणे धृताङ्कुरद्राजरेतसः । **आ० ६४ ।** १४८ ॥ **१४० ।** ३९ ॥ **१८० ।** ५ ॥

तत्पितृव्यस्याग्निवेश्यस्य शिष्यः । **आ १४० ।** ४३ ॥

तस्य बृहस्पत्यंशत्वं । **आ० ६८ ।** ६९ ॥

तस्य भार्या शरद्वतः पुत्री कृपी । **आ० १४० ।** ४८ ॥

तत्पुत्रोऽश्वत्थामा । **आ० १४० ।** ४९ ॥

तस्य धनयाचनार्थं द्रुपदसमीपगमनं। **आ० १४०।** ६९॥

तस्य स्नानार्थं गङ्गामवतीर्णस्य ग्राहेण ग्रहणं। **आ० १४२।** १२॥

तस्य परशुरामाच्छस्त्रविद्याभ्यासः। **आ० १८०।** १२॥

तेन पञ्चाहानि युद्धकरणं। **आ० २।** ३०॥

तेन द्रुपदस्यार्धराज्यापहारः। **आ० १४८।** ७३॥

तद्राज्यस्याहिच्छत्रमिति नाम। **आ० १४८।** ८१॥

तस्य प्रशंसा भीष्मेण। **वि० ५१।** ११॥

तस्यार्जुनेन सह युद्धे पराजयः। **वि० ५९।** ९७॥

तेन दुर्योधनं प्रति पाण्डवैः सह सन्धिविधानं। **उ० १३९।** २२॥

तत्पराक्रमवर्णनं। **भी० ७७।** ८४॥ **द्रो० १२५।** ५९॥

तेन द्रुपदपुत्रस्य शङ्खस्य वधः। **भी० ८२।** २३॥

तस्य सैनापत्येऽभिषेकः। **द्रो० ७।** ६॥

तेन वसुदानस्य वधः। **द्रो० २१।** ५५॥

तद्धनुश्शतस्य सात्यकिना छेदः। **द्रो० ९८।** ३९॥

तेन सह युधिष्ठिरस्य युद्धं। **द्रो० १०६॥**

तद्रथाष्टकभञ्जनं भीमसेनेन। **द्रो० १२७।** २२॥

तत्सारथिवधो भीमेन। **भी० ७५।** ३१॥

तेन दुश्शासनाधिक्षेपः। **द्रो० १२२।** १–२७॥

तेन विराटद्रुपदयोर्वधः। **द्रो० १८७।** ४२॥

तेनार्जुनप्रशंसनं दुर्योधनाधिक्षेपश्च। **द्रो० १८६॥**

तद्वधकथनं संक्षेपेण। **द्रो० ८।** ३०॥

तच्छिरश्छेदो धृष्टद्युम्नेन। **द्रो० १९३।** ६४॥

तच्छववर्णनं। **स्त्री० २३।** ३१॥

तस्यौर्ध्वदैहिकं। **शां० ४१।** ३॥ **स्त्री० २३।** ४२॥

२ **द्रोणः**। पर्वतः। **शां० ३२५।** १८४॥

३ **द्रोणः**। मन्दपालऋषेः पुत्रः शार्ङ्गकः। तन्माता जरिता। **आ० २५८।** १५॥ **अनु० ५३।** २२॥

+ **द्रोणवधपर्व। द्रो० १८५—१९३॥**

**द्रोणशत्रुः**। धृष्टद्युम्नः। **आ० १८५।** ८॥

**द्रौणायनिः**। अश्वत्थामा। **भी० ९४।** २०॥

**द्रौणिः**। अश्वत्थामा। **आ० १५२।** ३०॥

**द्रौपदी**। द्रुपदपुत्री। पाण्डवानां भार्या। तस्याः कृष्णेति नामान्तरं। तद्भ्रातरो द्रुपदशब्दे द्रष्टव्याः। तस्या उत्पत्तिः। **आ० ६४।** १५२॥ **१४९।** ६०॥ **१८५।** ११॥

तस्याः श्रियोंशत्वं। **आ० ६८।** १५६॥

तत्स्वयंवरश्रवणं पाण्डवैः। **आ० १७९।** ७॥

तस्याः स्वयंवरः। **आ० ६१।** ३१॥ **६३।** ७३॥ **२००।** ५५॥

तत्स्वयंवरार्थमागतानां राज्ञां नामानि। **आ० २०१॥**

तयाऽर्जुनकण्ठे मालाप्रक्षेपः। **आ० २०३।** ३१॥

तस्याः पञ्चपत्नीत्वं। **आ० २१०।** २३॥

तस्याः पञ्चपत्नीत्वे व्यासेन कारणकथनं। **आ० २११।** २३॥

तस्याः पञ्चपाण्डवैः पाणिग्रहणं। **आ० २१५।** २२॥

तस्याः पुत्रोत्पत्तिः तेषां नामानि च। प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिः शतानीकः श्रुतसेनः इति। **आ० ६३।** ७३–७४॥ **६४।** १६४॥ **६८।** १२८॥ **२४७।** ७४॥

तस्याः प्रातिकामिना संवादः। **स० ८९।** १७॥

तस्या द्यूतसभानयनं। **स० ८९।** ४३॥

तद्वस्त्रापहारो दुश्शासनेन। **स० ९०।** ४०॥

तया सभ्यान्प्रति प्रश्नाः। **स० ९१।** ११॥

तस्यै धृतराष्ट्रेण वरदानं। **स० ९२।** २६॥

तस्याः समाश्वासनं श्रीकृष्णेन। **व० १२।** १३१॥

तस्या युधिष्ठिरेण सह दुर्योधनादीन्युद्धे जित्वा स्वराज्य-

**द्वीपाः ।** जम्बूद्वीपादयः । तेषां नामानि वर्णनं च । **भी० ११—१२ ॥** [भा० ५ ॥]

**द्वैपायनः ।** व्यासः । तन्नामनिर्वचनं । **आ० १ । २३ ॥ ६४ । १२८ ॥**

**द्वैपायनह्रदः ।** तीर्थं । **श० ३० । ५६ ॥ ५५ । ३० ॥ अश्व० ६० । २७ ॥**

तस्मिन्दुर्योधनेन निमज्ज्य स्थितिः । **श० २९।४४॥**

१ **द्वैतवनं ।** सरस्वतीतीरस्थं मरुधन्वदेशसमीपस्थं वनं । **श० ३७ ॥**

तत्र पाण्डवानां वासः । **व० २४ ॥ २६ ॥ ३६॥ १७९ ॥ २३९ ॥ २४७ ॥ २५७ ॥३११॥ वि० ५ । ५ ॥**

२ **द्वैतवनं ।** सरः । **व० २४ । १० ॥**

## ध.

**धनदः ।** कुबेरः । **स० ११ । ५१ ॥**

१ **धनञ्जयः ।** अर्जुनः । तन्नामनिर्वचनं । **वि० ४३ । २६ ॥**

२ **धनञ्जयः ।** सर्पः । **आ० ३५ । ५ ॥ स० ९। १० ॥ उ० १०३ । ९ ॥**

**धनिकत्वनिन्दा । शां० १७५ । ११ ॥**

**धनुर्धरः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **क० ८८ । १९–२३ ॥**

**धनुषाक्षः ।** ( **धनुषाख्यः** ) । ऋषिः । **व० १३७ । ५० ॥ शां० ३४४ । ७ ॥**

**धन्वन्तरिः ।** तस्योत्पत्तिः । **आ० १८ । ५३ ॥** [ भा० ८ । ८ ॥]

१ **धरः ।** अष्टवसुष्वन्यतमः । तन्माता धूम्रा । **आ० ६७ । १८ ॥ अनु० २५५ । १७ ॥**
तत्पुत्रौ द्रविणो हुतहव्यवहश्च । **आ० ६७ । २१ ॥**

२ **धरः ।** पाण्डवपक्षीयः क्षत्रियः । **द्रो० १५९ । ३८ ॥**

३ **धरः ।** शुक्राचार्यस्य पुत्रः । **आ०६६ । ३७ ॥**

१ **धर्मः ।** प्रजापतिः । ब्रह्मणो दक्षिणस्तनाज्जातः । रूपान्तरं प्राप्तो यम एवायं । **आ० ६७ । ३१ ॥**

तस्य भार्याः दश दक्षप्रजापतिपुत्र्यः । कीर्तिः लक्ष्मीः धृतिः मेधा पुष्टिः श्रद्धा क्रिया बुद्धिः लज्जा मतिः इति । **आ० ६७ । १४ ॥**

तस्य पुत्राः । **आ० ६७ । ३२ ॥**

तस्य पुत्री सत्या । शंयुनामकाग्नेर्भार्या । **व० २२१ । १२ ॥**

तेन धर्मविशेषकथनं । **अनु० १८९ । २३ ॥**

२ **धर्मः ।** यमः ।

३ **धर्मः ।** युधिष्ठिरः ।

४ + **धर्मः ।** प्रथमपुरुषार्थः । तत्फलभोगः । **व० १८६ । ३९ ॥**

तद्वतां पराभवो नास्ति । **आ० १८२ । २० ॥**

तस्य समृद्धिकारणत्वं । **व० ९२ । ५ ॥**

तदुत्पत्तिप्रकारः । **शां० २७९ । १२–२२ ॥**

**धर्मतीर्थं । व० ८२ । १ ॥**

**धर्मध्वजः ।** जनकराजः । तस्य सुलभया संवादः । **शां० ३२५ । ४ ॥**

**धर्मपुत्रः ।** युधिष्ठिरः । **स० ४ । १३ ॥**

**धर्मप्रस्थः ।** क्षेत्रं । **व० ८२ । ९८ ॥**

**धर्मराजः ।** युधिष्ठिरः । **स० १ । २२ ॥**

**धर्मव्याधः ।** ज्ञानी व्याधः । **व० २१० । १० ॥**

तेन कौशिकब्राह्मणाय धर्मोपदेशः । **व० २१८ । १४ ॥**

तस्य शूद्रत्वप्राप्तिकारणं । **व० २१८ । २२ ॥**

१ **धर्मारण्यः ।** ब्राह्मणः । **शां० ३७१ । ५ ॥**

२ **धर्मारण्यं ।** गयासमीपस्थं क्षेत्रं । **व० ८० । ४७ ॥ अनु० ६४ । ५९ ॥** Four miles from Buddha-Gaya in the district of Gaya.

**धर्मेयुः ।** क्षत्रियः । रौद्राश्वपुत्रः । **आ० ८८ । १० ॥**

१ **धाता ।** द्वादशादित्येष्वन्यतमः । **आ० ६६ । १५ ॥**

**२ धाता।** भृगुऋषिपुत्रः। **आ० ६७।५०॥**
[तन्माता ख्यातिः। तद्भार्या मेरुपुत्री आयतिः। तत्पुत्रो मार्कण्डेयस्य पिता मृकण्डः। भा० ४। १॥]

**धारणः।** सर्पः। **उ० १०३। १६॥**

**धारातीर्थं। व० ८२। २३॥**

**धार्तराष्ट्राः।** धृतराष्ट्रपुत्राः दुर्योधनादयः। धृतराष्ट्रशब्दं पश्यत।

**धीः।** बुद्धिः। तद्गुणाः। **व० २। १९॥**

**धीमान्।** क्षत्रियः। सो० वं० पुरूरवसः पुत्रः। तन्माता उर्वशी। **आ० ६९। २७॥**

**१ धुन्धुः।** मधुकैटभयोः पुत्रः। **व० २०७। १॥**

**२ धुन्धुः।** क्षत्रियः। **अनु० १७७। ७३॥**

**धुन्धुमारः।** क्षत्रियः। सू० वं० बृहदश्वस्य पुत्रः। तस्य पितृकृतं नाम कुवलाश्व इति। **व० २०४–२०५॥**

तस्योपाख्यानं। **व० २०७॥** [हरि० १। ११॥ भा० ९। ६॥ वायु० ८८॥ ब्रह्म० ७॥]

तस्य जराप्राप्तिः। **अनु० ९। ४१॥**

तेन पुष्करस्तैन्ये शपथकरणं। **अनु० १४३। २१॥**

**धूतपापा।** नदी। **भी० ९। १८॥**

**धूमावती।** नदी। **व० ८२। २१॥**

**धूमिनी।** सो० वं० अजमीढस्य भार्या। तत्पुत्रः ऋक्षः। **आ० १०१। २०॥**

**१ धूमोर्णा।** मार्कण्डेयऋषेः पत्नी। **अनु० २४८। ४॥**

**२ धूमोर्णा।** यमस्य भार्या। **अनु० २७१। ११॥**

**धूम्रा।** वसोर्भार्या। तत्पुत्रौ धरो ध्रुवश्च। **आ० ६७। १९॥**

**धूम्राक्षः।** रावणमन्त्री राक्षसः। हनूमता हतः। **व० २८७। १४॥**

**धूर्तः।** क्षत्रियः। **आ० १। २६३॥**

**धूर्तकः।** सर्पः। **आ० ५७। १३॥**

**१ धृतराष्ट्रः।** क्षत्रियः। सो०वं० पूरुवंशोत्पन्नस्य विचित्रवीर्यस्य क्षेत्रजः पुत्रः। व्यासवीर्याज्जातः। तन्माता अम्बिका। आम्बिकेयः। वैचित्रवीर्यः। प्रज्ञाचक्षुः। आजमीढः। इत्यादीनि तस्य नामानि। **आ० ६३। ५७॥**

तस्योत्पत्तिः। **आ० ६४। १५५॥ ११५। १८॥**

तस्य गन्धर्वांशत्वं। **आ० ६८। ८३॥**

तस्य गान्धार्या विवाहः। **आ० ११९। १२–१६॥**

तस्य पाण्डवानां जतुगृहे दाहश्रवणेन मृषा विलापः। **आ० १६२। १३॥**

तस्य सञ्जयेन संवादः। **स० १०३॥**

तेन द्रौपद्यै वरदानं। **स० ९३। ३०॥**

तस्य भार्या गान्धारी तद्भगिन्यश्च काश्चन। **आ० ११९। २२॥**

तस्य श्यालाः शकुन्यादयः। शकुनिशब्दे द्रष्टव्याः।

तेन विदुरधिक्कारः। **व० ४। २२॥**

तेन पाण्डवप्रतापवर्णनं। **उ० ५०॥**

तस्य श्रीकृष्णेन विश्वरूपदर्शनार्थं चक्षुर्दानं। **उ० १३१। २०॥**

तस्य मूर्च्छा दुर्योधनवधश्रवणेन। **श० २। ५३॥**

तस्य विलापः दुर्योधनवधात्। **श० २। ५४॥ स्त्री० १॥**

तस्य विदुरेण शास्त्रार्थकथनेन समाधानं। **स्त्री० २। ३॥**

तस्य समीपे व्यासागमनं। **स्त्री० ८। २॥**

तेन मृतपुत्रादिशयनस्थानभूतरणाङ्गणगमनं। **स्त्री० ९॥**

तेन लोहमयभीमसेनप्रतिमाया आलिङ्गनेन चूर्णीकरणं। **स्त्री० ११। १७॥**

तदनुवर्तनं पाण्डवैः। **आश्र० १। २६॥**

तस्य भीमसेनपरुषभाषणश्रवणेन निर्वेदाधिगमः। **आश्र० ३। ११॥**

तेन युधिष्ठिराय राजनीत्युपदेशः। **आश्र० ६–८॥**

तस्य तपोवने दावाग्निप्रवेशः । **आश्र० ३९।** ३१ ॥ [भा० १ । १३ ॥]

तस्य कुबेरलोकप्राप्तिः । **आश्र० ३२ । ११ ॥**

तस्य पुत्राः दुर्योधनादयः व्यधिकं शतं । तेषु गान्धार्यां जाताः पुत्रा दुर्योधनादयः शतं । दुश्शलानाम्न्येका पुत्री च। दास्यां वैश्यायां जातो युयुत्सुरेक इति विवेकः। **आ० ६३ । ५८ ॥ ६८** । ९३ ॥ **१३१ ।** २ ॥

अत्रेदमाकूतं । अस्मिन्महाभारते तत्रतत्रागतानां नाम्नां मेलनेन गणने सङ्ख्या कृप्तादप्यधिका भवति । तत्रतत्रोक्तानामेव नाम्नां गणने संख्या न्यूना भवति । क्वचिदेकमेव नाम द्विस्त्रिर्वोक्तं वर्तते । तत्रापि कानिचिद्विशेषणानि कानिचिद्विशेष्याणि। कानिचित्पर्यायाणि । तेषु पर्यायत्वविशेषणत्वादीनि केषांचिदेव नाम्नामस्मादृशैर्विवेचयितुं शक्यानि । कतिचन बहुज्ञानामपि श्रमसाध्यानि । तस्मात्सुधियः स्वयमेव विवेचयन्त्विति यथोपलब्धि लिख्यते ।

तद्यथा—

**अग्रयायी । आ० १३१ ।** ११ ॥

**अनाधृष्टिः ।** भीमेन हतः । **भी० ९६ ।** २७॥

**अनाधृष्यः । आ० ६८ ।** १०४ ॥ **१३१ ।** १३ ॥

**अनुयायी । आ० ६८ ।** १०२ ॥ तस्य वधः । **द्रो० १५८ ।** १७ ॥

**अनुविन्दः । आ० ६८ ।** १०२ ॥

**अनूदरः । आ० ६८ ।** ९९ ॥ **१३१ ।** ८ ॥

**अपराजितः । आ० ६८ ।** १०१ ॥ **१३१ ।** १० ॥ तस्य वधो भीमसेनेन । **भी० ८८ ।** २२ ॥

**अभयः । आ० ६८ ।** १०४ ॥ **१३१ ।** १२ ॥ तस्य वधो भीमसेनेन । **द्रो० १२७ ।** ४४ ॥

**अयोबाहुः । आ० ६८ ।** ९८ ॥ **१३१ ।** ६ ॥

**अयोभुजः ।** तस्य वधः । **द्रो० १५८ ।** १७ ॥

**अलम्बुः ।** तस्य वधो भीमसेनेन । **क० ८८ ।** १९–२३ ॥

**अलोलुपः । आ० ६८ ।** १०३ ॥ **१३१ ।** १२ ॥

**आदित्यकेतुः । आ० ६८ ।** १०२ ॥ **१३१ ।** ११ ॥ तस्य वधो भीमसेनेन । **भी० ८८ ।** २८ ॥

**उग्रः । आ० ६८ ।** १०३ ॥ **१३१ ।** १२ ॥ तस्य वधो भीमेन । **भी० ६४ ।** ३४ ॥ **द्रो० १५८ ।** १९ ॥

**उग्रश्रवाः। आ० ६८ ।** १०० । **१३१ ।** ९ ॥

**उग्रसेनः । आ० ६८ ।** १०० ॥ **१३१ ।** ९ ॥

**उग्रायुधः । आ० ६८ ।** ९९ ॥ **१३१ ।** ७ ॥ **२०१ ।** २ ॥

**उपचित्रः । आ० ६८ ।** ९५ ॥ **१३१ ।** ४ ॥

**उपनन्दः ।** तस्य वधो भीमसेनेन । **क० ४६ ।** १९ ॥

**उपनन्दकः । आ० ६८ ।** ९६ ॥ **१३१ ।** ५ ॥ **भी० ७९ ।** २२ ॥

**ऊर्णनाभः । आ० ६८ ।** ९६ ॥ **१३१ ।** ५॥

**कनकध्वजः । आ० १३१ ।** १४ ॥ **२०१ ।** ३ ॥

**कनकाङ्गदः । आ० ६८ ।** १०५ ॥

**कनकायुः । आ० ६८ ।** ९९ ॥

**करकायुः । आ० २०१ ।** २ ॥

**कर्णः । आ० ६८ ।** ९५ ॥ **१३१ ।** ३ ॥ **भी० ७७ ।** ८ ॥

**कवची । आ० ६८ ।** १०३ ॥ **१३१ ।** ११ ॥ **क० ४६ ।** ७ ॥ तस्य वधो भीमसेनेन । **क० ८८ ।** १९–२३ ॥

**कुण्डकः । आ० २०१ ।** ३ ॥

**धृतिमान्** । अग्निविशेषः । अस्य विष्णुरिति नामान्तरं । **व० २२३ । १२** ॥

**धृष्टकेतुः** । क्षत्रियः । चेदिराजस्य शिशुपालस्य पुत्रः । शुक्तिमतीपुरनिवासी । पाण्डवपक्षीयः । **व० २२ । ५०** ॥ **उ० १७१ । ८** ॥ द्रोणाचार्येण हतः । **द्रो० १२५ । ३९** ॥

तस्य पुत्रोपि द्रोणेन हतः । **द्रो० १२५ । ४१** ॥

तस्य स्वसा रेणुमती । नकुलस्य भार्या । **आ० ६३ । ७८** ॥

तस्य युद्धं । **द्रो० १०७ । १०** ॥

**धृष्टद्युम्नः** । क्षत्रियः । द्रुपदपुत्रः । द्रोणशत्रुः । याज्ञसेनिः । अयोनिजः । अतिरथः । **उ० १७१ । ४** ॥

तस्योत्पत्तिः अग्निकुण्डात् । **आ० ६४ । १५०** ॥ **१४९ । ५३** ॥ **१८१ । ४०** ॥

तस्याग्न्यंशत्वं । **आ० ६८ । १२६** ॥

तन्नामनिर्वचनं । **आ० १४९ । ७१** ॥ **१८१ । ५६** ॥

तस्य पाण्डवजातिजिज्ञासया कुलालगृहगमनं । **आ० २०७ । १** ॥

तस्य पाण्डवैः सेनापतित्वकरणं । **उ० १५१ । ३७** ॥

तेन द्रोणाचार्यशिरश्छेदः । **द्रो० १९३ । ६४** ॥

तद्वधोद्योगः सात्यकिना । **द्रो० १९९ । ४९** ॥

तस्य पराजयः कृपाचार्येण । **क० १७ । २०** ॥

तस्य वधोऽश्वत्थाम्ना । **सौ० ८ । २४** ॥

तस्य भ्रातरः द्रुपदशब्दे द्रष्टव्याः ।

तस्य पुत्राः । क्षत्रञ्जयः क्षत्रदेवः क्षत्रवर्मा च । **द्रो० १० । ५३** ॥ सर्वे द्रोणाचार्येण हताः । **द्रो० १५६ । १४** ॥ तस्यान्यः पुत्रः क्षत्रधर्मा । द्रोणेन हतः । **द्रो० १२५ । ५७** ॥

**धृष्णुः** । वैवस्वतमनुपुत्रः । **आ० ६९ । १८** ॥

**धेनुकः** । गर्दभरूपी असुरः । बलरामेण हतः । **स० ५३ । १६** ॥ **उ० १३० । ६१** ॥ [भा० १० । १५ ॥ हरि० २ । १३ ॥ विष्णु० ५ । ८ ॥]

**धेनुमतीतीर्थं** । **आ० २४५ । ३०** ॥

**धैर्यं** । गुणः । तस्य सुखसाधनत्वं । **शां० २३४**॥

१ **धौम्यः** । आपोदनामा ऋषिः । **आ० ३ । २१** ॥

तस्य शिष्याः उपमन्युः आरुणिः बैदश्च । **आ० ३ । २२** ॥

२ **धौम्यः** । ऋषिः । व्याघ्रपादऋषेः पुत्रः । तस्य भ्राता शिवभक्त उपमन्युः । **अनु० ४५ । ९६** ॥ अयं प्रथमधौम्य एवेति यस्तस्य शिष्यः उपमन्युः सः तस्य भ्राता चेति च भाति ।

३ **धौम्यः** । ऋषिः पाण्डवपुरोहितः । असितस्य देवलस्य भ्राता । **आ० १९९ । २** ॥ **स० २ । ७** ॥ **व० ३ । १** ॥ **वि० १ । २१** ॥ **आश्र० १६ । ८** ॥

तेन पाण्डवेभ्यो नानातीर्थमाहात्म्यकथनं । **व० ८४—८८** ॥

तेन पाण्डवेभ्यो राजगृहे वासप्रकारकथनं । **वि० ५ । ८** ॥

तस्य पाण्डवाग्निहोत्राग्निरक्षणार्थं वने वासः । **वि० ६ । १३** ॥

तेन धर्मोपदेशः । **अनु० १९० । १५** ॥

**धौम्रः** । ऋषिः । **शां० ४६ । १२** ॥

\+ **ध्यानयोगः** । **शां० १९३** ॥

१ **ध्रुवः** । अष्टवसुष्वन्यतमः । धूम्रायाः पुत्रः । **आ० ६७ । १८** ॥ तत्पुत्रः कालः । **आ० ६७ । २१** ॥

२ **ध्रुवः** । क्षत्रियः । पाण्डवपक्षीयः । **द्रो० १५९ । ३८** ॥

३ **ध्रुवः** । क्षत्रियः । सो० वं० नहुषपुत्रः । **आ० ६९ । ३३** ॥

४ **ध्रुवः** । क्षत्रियः । स्वायंभुवमनुपौत्रस्योत्तानपादस्य पुत्रः । **अनु० ६ । १५** ॥

[तस्य कथा । भा० ४ । ८—१३ ॥ विष्णु० १ । ११ ॥ मत्स्य० ४ ॥ लिङ्गपु० ६२ ॥ स्कान्दपु० वैष्णवखं० काशीखं० पूर्वार्धे २० ॥]

[तन्मण्डलं । भा० ५ । २३ ॥ ]

**ध्वजकेतुः** । क्षत्रियः । द्रुपदपुत्रः । **आ० २१८ ।** १९ ॥

**ध्वजवती** । हरिमेधसः पुत्री । **उ० ११० ।** १३ ॥

**+ ध्वजादिवर्णनं । वि० ५६ ॥ द्रो० २३ ।** १०५ ॥

## न.

**नकुलः** । क्षत्रियः । पाण्डुपुत्रः । माद्यामश्विभ्यां जातः । **आ० ६३ ।** ६६ ॥ **१३३ ।** १८ ॥ एकरथः । **उ० १६९ ।** ५ ॥

तन्नामनिर्वचनं । **वि० ७ ।** ३३ ॥

तस्य विराटनगरे प्रसिद्धं नाम दामग्रन्थीति । **वि० ४ ।** ५ ॥

तस्य विराटनगरे प्रच्छन्नं नाम जयत्सेन इति । **वि० ७ ।** ६६ ॥

तस्य शङ्खः सुघोषः । **भी० २५ ।** १६ ॥

तस्य भार्या शिशुपालस्य पुत्री । धृष्टकेतोः स्वसा रेणुमती । तत्पुत्रो निरमित्रः । **आ० ६३ ।** ७८॥

तस्य द्रौपद्यां जातः पुत्रः शतानीकः । **आ० ६४ ।** १६४ ॥

तेन पश्चिमदिग्विजयो राजसूययागार्थं । **स० ३२ ॥**

तेन सन्धिकरणस्य सुशकत्वाभिधानं । **उ० ७९ ॥**

तेन दुर्योधनपराजयः । **द्रो० १८८ ।** ५३ ॥

तस्य पराभवः कर्णेन । **क० १५ ।** ५३ ॥

तस्याधःपतनं महाप्रस्थाने । **महा० २ ।** १२ ॥

**नकुलोपाख्यानं । अश्व० ९१ ॥**

**नग्नजित्** । क्षत्रियः । **आ० ६८ ।** २१ ॥ कर्णेन दिग्विजये जितः । **व० २५५ ।** २१ ॥ [ अयं श्रीकृष्णस्य श्वशुरः । सत्यानाम्न्या नीलादेव्याः पितेति भाति । भा० १० । ५८ ॥]

**नचिकेताः** । नाचिकेतशब्दं पश्यत ।

**+ नदीनां नामानि । स० ९ ।** २२ ॥ **व० १९१ ।** १०३ ॥ **२२४ ।** २२ ॥ **भी० ९ ।** १४ ॥ **अनु० ६४ ॥ २४८ ।** २० ॥ **२७१ ।** १९ ॥ [हरि० २ । १०९ ॥ पद्म० १ । १४ ॥ मत्स्य० ११४ ॥]

१ **नन्दः** । सर्पः । **उ० १०३ ।** १२ ॥

२ **नन्दः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९६ ॥ **१३१ ।** ५ ॥ **भी० ७९ ।** २२ ॥ तस्य वधः । **क० ४६ ।** १९ ॥

१ **नन्दकः** । सर्पः । **उ० १०३ ।** १२ ॥

२ **नन्दकः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० २०१ ।** ३ ॥ **भी० ६४ ।** १५ ॥

१ **नन्दा** । धर्मप्रजापतिपुत्रस्य हर्षस्य भार्या । **आ० ६७ ।** ३३ ॥

२ **नन्दा** । ऋषभकूटपर्वतस्था नदी । **आ० २३५ ।** ७ ॥ **व० ११० ।** १ ॥

**नन्दिग्रामः** । अयोध्यासमीपस्थो ग्रामः । **व० २९२ ।** ६३ ॥

१ **नन्दिनी** । नदी । **व० ८२ ।** १५४ ॥

२ **नन्दिनी** । वसिष्ठस्य धेनुः । **आ० १०६ ।** १४ ॥

**नन्दिसेनः** । स्कन्दपरिवारः । **श० ४६ ।** २४ ॥

**नन्दीश्वरः** । रुद्रवाहनभूतो वृषभः । **अनु० २६५ ।** २५ ॥

**नमुचिः** । दनुपुत्रोऽसुरः । **आ० ६६ ।** २२ ॥ **स० ५१ ।** ८ ॥ [ तद्भार्या स्वर्भानोः पुत्री सुप्रभा । **भा० ६ ।** ६ ॥ ]

तस्येन्द्रेण संवादः । **शां० २३३ ॥**

तस्येन्द्रेण वधः । **श० ४४ ।** ३६ ॥

**नरः** । नारायणभ्राता । तदाश्रमगमनं पाण्डवानां । **व० १४७ ।** २२ ॥ **१५७ ।** १० ॥ [तयोः कथा । भा० ११ । ४ ॥]

१ **नरकः** । दनुपुत्रोऽसुरः । **आ० ६६ ।** २९ ॥

**२ नरकः** । महीदेव्याः पुत्रोऽसुरः । **स० ९ । १६** ॥ **१४** । १४ ॥ ५९ । ६ ॥
तस्य वधः श्रीकृष्णेन । **स०** ५९ । ३४ ॥ **व० १४४** । १७ ॥ [भा० १० । ५९ ॥ हरि० २ । ६३ ॥]
तस्यास्थिदर्शनं पाण्डवैः । **व० १४४** । १३ ॥
**३ नरकः** । पापिनां यातनानुभवस्थानविशेषः ।
तन्नामकथनं । **अनु० २३०** ॥ [भा० ५ । २६ ॥ विष्णु० २ । ६ ॥ मार्कण्डे० ११—१२ ॥ देवीभा० ८ । २१-२३ ॥ शिवपु० उमासं० ८-१० ॥ स्कान्दपु० माहेश्वरखण्डान्तर्गतकौमारिकाखं० ३९ ॥ ब्रह्मवै० प्रकृतिखं० २९—३१ ॥]
तद्दर्शनं युधिष्ठिरेण । **स्वर्गा० २ । १६-२५** ॥
**नरसिंहः** । नृसिंहशब्दं पश्यत ।
**नरिष्यन्तः** । क्षत्रियः । वैवस्वतमनुपुत्रः । **आ० ६९ । १८** ॥
**+ नर्तनागारं । वि० २५ । २१** ॥
**१ नर्मदा** । नदी । **स० ९ । २२** ॥ **व० ८७ । २** ॥ **भी० ९ । १४** ॥ [इयं कलिङ्गदेशस्थादमरकण्टकापरनाम्नो मेकलपर्वतात्प्रभवति । मत्स्य० ११३ ॥] The river Nerbuda. It rises in the Amarakantaka mountain.
तन्महिमा । **व० ८०** । ५४ ॥ [पद्म० १ । १३ ॥]
**२ नर्मदा** । तन्नामकनद्यभिमानिनी । इक्ष्वाकुवंश्यस्य दुर्योधनस्य भार्या । तत्पत्नी सुदर्शना । **अनु० २ । १८** ॥
**१ नलः** । वानरः । रामसेतुबन्धनकर्ता । **व० २८४ । १४** ॥
**२ नलः** । निषधदेशाधिपतिः । वीरसेनपुत्रः । दमयन्त्या भर्ता । तस्य पुत्रौ इन्द्रसेना इन्द्रसेनश्च । **व० ४९ । ६०** ॥
तेन हंसग्रहणं । **व० ५० । १९** ॥
तस्य इन्द्रादिलोकपालैर्दमयन्तीं प्रति दूत्येन प्रेषणं । **व० ५२** ॥
तस्मै इन्द्रादिदेवैर्वरदानं । **व० ५४** । ३५ ॥
तस्य दमयन्त्या विवाहः । **व० ५४** । ४३ ॥
तच्छरीरे कलिप्रवेशः । **व० ५६** । ३ ॥
तस्य पुष्करेण सहाक्षद्यूतं । **व० ५६** । ९ ॥
तदुत्तरीयवस्त्रस्य पक्षिभिरपहरणं । **व० ५८** । १५ ॥
तेन वने रात्रौ स्वसमीपे सुप्ताया दमयन्त्याः परित्यागः । **व० ५९** । २० ॥
तेन कार्कोटकस्य अग्नेस्सकाशाद्रक्षणं । **व० ६३** । ९ ॥
तस्य बाहुकनामस्वीकारेण ऋतुपर्णे सारथीभवनं । **व० ६४** । ९ ॥
तस्य ऋतुपर्णेन सह दमयन्त्याः पुनः स्वयंवरार्थं विदर्भपुरं प्रत्यागमनं । **व० ७०** । ४३ ॥
तन्नामस्मरणस्य कलिबाधपरिहारकत्वं । **व० ७०** । ३६ ॥ ७७ । १२ ॥
**नलकूवरः** । कुबेरस्य पुत्रः । तद्भ्राता मणिग्रीवः । **स० १०** । २० ॥ **व० २८१** । ६० ॥
[तस्य सभ्रातृकस्य नारदशापाद्यमलार्जुनवृक्षत्वप्राप्तिः । तयोः श्रीकृष्णेन मोक्षणं च । भा० १० । ९-१० ॥]
**नलिनी** । नदी । **भी० ६** । ४९ ॥
**+ नलोपाख्यानपर्व । व० ४९—७७** ॥
**नवतन्तुः** । विश्वामित्रपुत्रः । **अनु० ७ । ५८** ॥
**नवमदिवसयुद्धारम्भः** । **भी० ९७** । तत्समाप्तिः । **भी० १०६** ॥
**१ नहुषः** । क्षत्रियः । सो० वं० पुरूरवसः पुत्रस्यायोः पुत्रः । तन्माता स्वर्भानवी । **आ० ६३ । ५** ॥ **६९ । २९** ॥ **स० ८ । ८** ॥ **वि० ५३ । १४** ॥ [भा० ९ । १७ ॥ हरि० १ । २८ ॥ वायु० ९२ ॥ ब्रह्म० ११ ॥]
तस्य पुत्राः । यतिः ययातिः संयातिः आयतिः अयतिः ध्रुवः इति षट् । **आ० ६९ । ३३** ॥

[ तस्य भार्यापितृकन्या विरजा । ब्रह्म० १२ ॥ हरि० १ । ३० ॥ ]

तेन ब्रह्महत्याभयादिन्द्रेऽदर्शनं गतेन्द्रपदप्राप्तिः । **उ० ११ । ९ ॥ अनु० १५६ ।** ४ ॥ [भा० ६ । १३ ॥ देवीभा० ६ । ७—८ ॥]

तेन शच्याः कामना । **उ० ११ । १९ ॥**

तस्यागस्त्यशापादजगरत्वप्राप्तिः । **व० १८१ ।** १४ ॥ **१८२ ।** १४ ॥ **१८३ ।** ३७ ॥ **उ० १७ ।** १६ ॥ **अनु० १५७ ।** २२ ॥

तस्मै च्यवनऋषिणा दाशेभ्यः स्वयोग्यमूल्यदाननियोगः । **अनु० ८६ ।** ५ ॥

तस्य त्वष्टुः सकाशाद्गोलाभः । **शां० २७४ ।** ६ ॥

२ **नहुषः** । सर्पः । **आ० ३५ ।** ९ ॥ **उ० १०३ ।** ९ ॥

**नागदत्तः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ ।** १०२ ॥ **१३१ ।** ११ ॥ तस्य वधो भीमसेनेन । **द्रो० १५८ ।** १७–१९ ॥

**नागकन्या** । उलूपीशब्दं पश्यत ।

**नागधन्वा** । तीर्थविशेषः । तत्र बलरामस्य गमनं । **श० ३८ ।** २९ ॥

**नागराजतीर्थं । व० ८२ ।** ३२ ॥

**नागलोकः** । भोगवती । **उ० १०३ ॥**

**नागाः** । सर्पाः । तेषां नामानि सर्पशब्दे द्रष्टव्यानि ॥

तेषामुत्तङ्ककृता स्तुतिः । **आ० ३ ।** १३४ ॥

**नागास्त्रप्रयोगः** । कर्णेनार्जुनं प्रति । **क० ९७ ।** २० ॥

**नाचिकः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ ।** ५८ ॥

**नाचिकेतः** । ऋषिः । आरुणिनामकस्योद्दालकस्य पुत्रः । अस्य नचिकेता इति नामान्तरं । तत्कथा गोदानप्रशंसार्थे । **अनु० १०६ ।** २ ॥ **स० ४ ।** २३ ॥ अस्य कथा काठकोपनिषदि प्रसिद्धा ।

**नाचीनाः** । देशः । **स० ३२ ।** १५ ॥

**नाटकेयाः** । देशः । **स० ३२ ।** १४ ॥

**नाडीजङ्घः** । नालिजङ्घशब्दं पश्यत ।

**नाभागः** । क्षत्रियः । वैवस्वतमनुपुत्रः । **आ० ६९ ।** २० ॥ [तत्पुत्रोऽम्बरीषः । भा० ९ । ४ ॥]

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३ ।** ३१ ॥

१ **नारदः** । विश्वामित्रस्य पुत्रः । **अनु० ७ ।** ५३ ॥

२ **नारदः** । कश्यपभार्याया मुनेः पुत्रो देवगन्धर्वः । तस्योत्पत्तिः । **आ० ६६ ।** ४४ ॥

३ **नारदः** । देवर्षिः । पर्वतस्य मातुलः । **स० १० ।** २० ॥ **शां० २९ ।** ४ ॥

तेन देवलोके भारतकथनं । **आ० १ ।** १२४ ॥

तस्यागमनं पाण्डवसमीपे । द्रौपदीविषये व्यवस्थाकरणोपदेशः । **आ० २२८ ॥**

तेन सुन्दोपसुन्दकथाकथनं । **आ० २२९ ॥**

तेन पाण्डवेभ्यः कच्चित्प्रश्नव्याजेन राजनीतिकथनं । **स० ५ ।** २० ॥

तद्वर्णनं । **आ० २२८ ।** १०–३७ ॥ **स० ५ ।** २—१४ ॥

तस्यागमनं पाण्डवसमीपे काम्यकवने । **व० १८५ ।** ४७ ॥

तदागमनं पाण्डवान्प्रति गङ्गातीरे । **शां० १ ।** ४ ॥

तस्य पर्वतऋषिशापेन वानरमुखत्वप्राप्तिः । **शां० २९ ।** २५ ॥

तेन पर्वतऋषये शापदानं । **द्रो० ५५ ।** २३ ॥ **शां० २९ ।** २६ ॥

तस्य सृञ्जयपुत्र्या विवाहः । **शां० २९ ।** ३० ॥

तस्य श्वेतद्वीपगमनं । **शां० ३४३ ॥ ३४४ ॥ ३४६ ॥**

तेन बदर्यां श्रीमन्नारायणदर्शनं । **शां० ३५३ ।** ९ ॥

तद्गुणानुवादः श्रीकृष्णेनोग्रसेनसमीपे । **शां० २३७ ।** ४–२७ ॥

[ तस्य स्त्रीत्वप्राप्तिः तालध्वजेन विवाहः पुत्रोत्पत्तिश्च । देवीभा० ६ । २८–२९ ॥ ]
तस्या कम्पनेन राज्ञा संवादः । **शां० २६२ ॥**
तस्य समङ्गेन संवादः । **शां० २९२ ॥**
तस्य गालवेन संवादः । **शां० २९३ ॥**
तेन मातलिना सह तत्पुत्र्या वरान्वेषणार्थं नागलोकगमनं । **उ० ९८ । ८ ॥ १०२ ॥**
तेन शुकं प्रत्युपदेशः । **शां० ३३७–३३८ ॥**
तेन श्वेतद्वीपे भगवद्दर्शनं । **शां० ३४७ । १ ॥**
तस्य सनत्कुमारेण संवादः । **अनु० ३०८ ॥**
तस्य मार्कण्डेयेन संवादः स्त्रीणां सतीत्वासतीत्वविषये । **अनु० ५७ ॥** चतुर्युगधर्मविषये । **अनु० ५४ ॥**
तस्य श्रीकृष्णेन संवादः के नमस्कार्या इति विषये । **अनु० ६६ ॥**
तस्य स्त्रीस्वभावविषये पञ्चचूडयाऽप्सरसा संवादः । **अनु० ७३ ॥**
तस्य पुण्डरीकेण संवादो नारायणस्य सर्वोत्तमत्वविषये । **अनु० १८६ ॥** तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३ । ३० ॥**
तेन मरुत्तं प्रति संवर्तनिवासस्थलकथनं । **अश्व० ६ । २२ ॥**
तस्य देवमतनाम्ना ऋषिणा संवादः । **अश्व० २५ ॥**
तस्यागमनं धृतराष्ट्रसमीपे तपोवने । **आश्र० २१ । १ ॥**

**नारदी ।** विश्वामित्रपुत्रः । **अनु० ७ । ५९ ॥**

**नारायणः ।** भगवान्विष्णुः । तं प्रति प्रार्थना देवैरिन्द्रेण चावतारार्थं । **आ० ६५ । ५१ ॥**
तत्कथास्तुतिः सौतिकृता । **आ० १ । ३३ ॥**
तत्स्तुतिः नारदकृता । **शां० २१० । १४ ॥**
तन्नामनिर्वचनं । **उ० ६९ । १० ॥ शां० ३५० । ३९ ॥**
तस्य नारदेन संवादः । **शां० ३४२ ॥**
तस्य सर्वोत्तमत्वमवश्यवेद्यत्वं च । **अनु० १८६ ॥**
तस्य परब्रह्मत्वं । **अनु० ३७ । १६ ॥**

+ **नारायणास्त्रप्रयोगः ।** अश्वत्थाम्ना । **द्रो० २०० । १७ ॥**

**नारायणी ।** मोहिनीरूपधारी नारायणः । **आ० १८ । ५७ ॥**

**नारीतीर्थानि ।** अर्जुनेन तीर्थयात्रायामुद्धृतानां शापाद्ग्राहत्वं प्राप्तानामप्सरसामावासभूतानि आगस्त्य सौभद्र पौलोम कारन्धम भारद्वाज नामानि पञ्चतीर्थानि । **आ० २३७ । ११ ॥**

**नालायनी ।** मौद्गल्यऋषेर्भार्या इन्द्रसेना । तस्या उपाख्यानं । **आ० २१२ । २६ ॥**

**नालिजङ्घः । (नालीजङ्घः) ।** कश्चन बकपक्षी । तत्सकाशे इन्द्रद्युम्नमार्कण्डेयप्रावारकर्णानां गमनं । **व० २०२ । ७ ॥**

**नाविकः ।** विदुरसुहृत्कश्चन खनकः । **आ० १६१ । १२ ॥**

**नासत्यौ ।** अश्विशब्दं पश्यत ॥

+ **नास्तिकमतखण्डनं । शां० २२० ॥**

+ **नाहुषबोध्यसंवादः । शां० १७६ । ५८ ॥**

१ **निर्ऋतिः ।** अधर्मस्य भार्या । तत्पुत्राः भयः महाभयः मृत्युश्चेति । **आ० ६७ । ५४ ॥**

२ **निर्ऋतिः ।** एकादशरुद्रेष्वन्यतमः । **आ० ६७ । २ ॥**

१ **निकुम्भः ।** दनुपुत्रोऽसुरः । **आ० ६६ । २६ ॥**

२ **निकुम्भः ।** प्रह्लादपुत्रोऽसुरः । **आ० ६६ । १९ ॥** तत्पुत्रौ सुन्दोपसुन्दौ । **आ० २२९ । ३ ॥**

**निकृतिः ।** सुबलस्य पुत्री । गान्धार्याः स्वसा । धृतराष्ट्रस्य भार्या । **आ० ११९ । २३ ॥**

**निचन्द्रः ।** दनुपुत्रोऽसुरः । **आ० ६६ । २६ ॥**

**निचिता ।** नदी । **भी० ९ । १८ ॥**

**निबन्धनः** । कश्चन विरक्तो मुनिः । तस्य भोगवतीनाम्न्या स्वमात्रा सह अध्यात्मविषये संवादः । **शां० २०९ । २** ॥

**निबिडः** । पर्वतः । **भी० १२ । १९** ॥

१ **निमिः** । दत्तात्रेयस्य पुत्रः ऋषिः । तत्पुत्रः श्रीमान् । **अनु० १३८ । ५** ॥

२ **निमिः** । क्षत्रियः । सू० वं० इक्ष्वाकुपुत्रः । जनकराजस्य पूर्वजः । **स० ८ । ९** ॥

तस्यात्रिणा संवादः । **अनु० १३८** ॥

[ तस्य वंशः । भा० ९ । १३ ॥ वायु० ८९ ॥ विष्णु० ४ । ५ ॥ रा० ७ । ५५ ॥ ]

**निमिषः** । अमृतरक्षको देवः । तेन सह गरुडस्य युद्धं । **आ० ३२ । १९** ॥

**निमेषः** । गरुडस्य पुत्रः । **उ० १०१ । १०** ॥

**नियुतायुः** । क्षत्रियः । श्रुतायुषः पुत्रः । अर्जुनेन हतः । **द्रो० ९३ । २७** ॥

१ **निरमित्रः** । क्षत्रियः । सो० वं० नकुलपुत्रः । रेणुमत्यां जातः । **आ० ९३ । ७८** ॥

२ **निरमित्रः** । क्षत्रियः । त्रैगर्तस्य वीरधन्वनः पुत्रः । सहदेवेन हतः । **द्रो० १०७ । २६** ॥

+ **निर्बन्धस्यानर्थहेतुत्वं** । **उ० १०६ । ७** ॥

**निर्वीरतीर्थं** । **व० ८२ । १३८** ॥

**निवातकवचाः** । दानवाः । **व० १७० । ११** ॥ तेषामर्जुनेन वधः । **व० १७४ । २** ॥

+ **निवातकवचयुद्धपर्व** । **व० १६६—१७७** ॥

+ **निवृत्तधर्मकथनं** । **अनु० २११ । २** ॥

**निशठः** । क्षत्रियः । यादवः । **आ० २३९ । १०** ॥

**निशाकरः** । गरुडस्य पुत्रः । **उ० १०१ । १४** ॥

**निशुम्भः** । असुरः । श्रीकृष्णेन हतः । **स० ५९ । २९** ॥

**निश्चवनः** । बृहस्पतेः पुत्रः । अग्निविशेषः । तत्पुत्रो निष्कृतिनामाग्निः । **व० २२१ । २०** ॥

**निषङ्गी** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । १०३** ॥ **१३१ । ८** ॥ भीमसेनेन हतः । **क० ८८ । २३** ॥

१ **निषधः** । पर्वतः । **स० २९ । ११** ॥ **भी० ६ । ९** ॥

२ **निषधाः** । देशः । **भी० ९ । ५१** ॥ तदधिपतिर्नलराजः । **व० ५० । ३** ॥ Narwar, the capital of Nalaraja. This is also called Nalapura.

**निषादाः** । देशः । **भी० ९ । ५१** ॥

+ **निषादानां भक्षणं गरुडेन** । **आ० २८ । २०** ॥

**निषादी** । **आ० १६० । ९** ॥

**निष्कृतिः** । अग्निविशेषः । बृहस्पतिपुत्रस्य निश्चवनस्य पुत्रः । तत्पुत्रः स्वननामकोऽग्निः । **व० २२१ । २२** ॥

+ **नीतिकथनं** । कणिकेन धृतराष्ट्रादिभ्यः । **आ० १५३ । ८** ॥ नारदेन कश्चित्प्रश्नव्याजेन युधिष्ठिराय । **स० ५** ॥ धौम्येन पाण्डवेभ्यः । **वि० ५ । ८** ॥ विदुरेण धृतराष्ट्राय । **३३—४०** ॥ साधारण्येन नीतिकथनं । **आ० ८१** । **स० ८६** ॥ **व० ३२** ॥ **शां० ८१** ॥ **१६६** ॥ **अनु० ३५** ॥

**निष्ठानकः** । सर्पः । **आ० ३५ । ९** ॥

१ **नीलः** । वैदूर्यमयः पर्वतः । **स० २९ । ४८** ॥ **भी० ६ । ४** ॥

२ **नीलः** । वानरः । **व० २८८ । २८** ॥

३ **नीलः** । क्षत्रियः । कार्तवीर्यार्जुनवंशोद्भवः पाण्डवपक्षीयः । **आ० २०१ । १०** ॥ **स० ३२ । २३** ॥ **उ० १९ । २४** ॥ एकरथः । **उ० १६६ । ४** ॥

तस्य युद्धं । **भी० ९४ । ३०** ॥

तस्य वधोऽश्वत्थाम्ना । **द्रो० ३१ । २५** ॥

४ **नीलः** । सर्पः । **आ० ३५ । ७ ॥**

**नीला** । नदी । **भी० ९ । ३१ ॥**

**नीली** । सो० वं० सुहोत्रपुत्रस्याजमीढस्य भार्या । तत्पुत्रौ दुष्यन्तः परमेष्ठी च । **आ० १०१ । २० ॥**

**नृगः** । क्षत्रियः । सू० वं० इक्ष्वाकुपुत्रः । **स० ८ । ८ ॥ वि० ५३ । १४ ॥**

[ तस्य विप्रशापात्कृकलासजन्मप्राप्तिः । श्रीकृष्णेन गर्ते पतितस्य तस्योद्धारश्च । भा० १० । ६४ ॥ रा० ७ । ५३ ॥ ]

**नृपचण्डालसंवादः** । **अनु० १५८ ॥**

**नृशंसलक्षणं** । **शां० १६२ ॥**

+ **नृसिंहः** । विष्णोरवतारः । तत्कथा । **स० ४६ । ५५ ॥ व० २७३ । ६१ ॥** [ भा० ७ । ८ ॥ पद्म० ६ । २६५ ॥ मत्स्य० ४७ । १६२ ॥ हरि० ३ । ४२ ॥ देवीभा० ४ । १६ ॥ ]

[ तस्य शरभरूपिणा रुद्रेण पराभवः । लिङ्गपु० ९५ ॥ वीरभद्रेण पराभवः । लिङ्गपु० ९६ ॥ ]

**नेपालाः** । विदेहदेशस्योत्तरतो हिमवतो दक्षिणतश्च विद्यमानो देशः । **व० २५५ । ६ ॥**

**नैकदृक्** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५४ ॥**

**नैकपृष्ठाः** । देशः । **भी० ९ । ४१ ॥**

+ **नैमि(षा)शारण्यं** । गोमतीतीरस्थं पुण्यारण्यं । **आ० १ । ५ ॥ व० ८२ । ५९ ॥ श० ३७ ॥** Nimsar, twenty four miles from the Sandila station of the Oudh and Rohilkhand Railway, and twenty miles from Sitapur. It is situated on the left bank of the goomti.

तत्र देवैर्यज्ञकरणं । **आ० २१४ । १ ॥**

**नैमिषकुञ्जं** । क्षेत्रं । **व० ८१ । १०९ ॥**

**नैषधः** । नलराजः । **व० ५१ । ३० ॥**

**नैषादिः** । एकलव्यः । **द्रो० १८२ । १७ ॥**

**न्यग्रोधः** । वृक्षः । तन्मूले पाण्डवानामुपवेशनं । **आ० १६३ । २० ॥**

तत्र कृपाश्वत्थामकृतवर्मणामुपवेशनं । **श० ३० । ६६ ॥**

तस्य दंशनं तक्षकेण । **आ० ४३ । ४ ॥**

## प.

**पञ्चचूडा** । अप्सराः । तया सह नारदस्य स्त्रीस्वभावविषये संवादः । **अनु० ७३ ॥**

**पञ्चतीर्थानि** । नारीतीर्थशब्दं पश्यत ।

+ **पञ्चदशदिवसयुद्धारम्भः** । **द्रो० १८८ ।** तत्समाप्तिः । **द्रो० २०३ ॥**

**पञ्चनदं** । क्षेत्रं । **स० ३५ । ११ ॥ व० ८० । ८४ ॥** The Punjab,—the country of five rivers called Satadru, Vipasa, Iravati, Chandrabhaga and Vitasta.

+ **पञ्चनलदर्शनं** । दमयन्त्या । **व० ५४ । १० ॥**

+ **पञ्चभूतानि** । पृथिव्यप्तेजोवाय्वाकाशानि । विशेषं भूतशब्दे पश्यत ।

+ **पञ्चमदिवसयुद्धारम्भः** । **भी० ६५ ॥** तत्समाप्तिः । **भी० ७४ ॥**

+ **पञ्चमहाभूतानि** । भूतशब्दं पश्यत ।

+ **पञ्चमहायज्ञाः** । **अश्व० १०४ । ८ ॥**

**पञ्चमी** । नदी । **भी० ९ । २६ ॥**

**पञ्चयक्षा** । नदी । **व० ८२ । १० ॥**

**पञ्चरात्रं** । ( **पाञ्चरात्रं** ) । भगवत्कृतो ग्रन्थविशेषः । **शां० ३५९ । १ ॥**

**पञ्चवटी** । गोदावर्यास्तीरे नासिकक्षेत्रसमीपस्थः स्थलविशेषः । **व० ८१ । १६२ ॥** [ रा० ३ । १३ ॥ ] Nasik on the Godavery.

**पञ्चशिखः** । कापिलेयो मुनिः । कपिलानाम्न्या ब्राह्मण्याः पुत्रः ।

तस्य जनकेन संवादः । **शां० २२०—२२१ ॥ ३२४ ॥** [ अस्य जनकस्य जनदेव इति नाम बृहन्नारदी० ४५ ॥ ]

तन्नामनिर्वचनं । **शां० २२०** । १२ ॥

+ **पञ्चानृतानामपातकत्वं । क० ७२ । ३४ ॥ शां० १६३** । ३० ॥

**पञ्चालाः** । इन्द्रप्रस्थस्य पूर्वतो विद्यमानो देशः । स उत्तरपाञ्चालः दक्षिणपाञ्चाल इति द्विविधः । प्रथमस्य राजधानी आहिच्छत्रं । द्रुपदाद्द्रोणाचार्येणापहृतं । द्वितीयस्य राजधानी काम्पिल्यं द्रुपदस्य । **भी० ९** । ४१ ॥ Rohilkhand. Panchala was divided into North and South Panchala. The capital of the former was Ahichhatra, and the capital of the latter was Kampilya South Panchala was the kingdom of Raja Drupada, whose daughter Draupadi was married to the five Pandavas.

+ **पञ्चेन्द्रोपाख्यानं । आ० २१४** ॥

**पटच्चरः** । चोरदेशः । **स० ३२** । ४ ॥

**पटवासकः** । सर्पः । **आ० ५७** । १८ ॥

१ **पण्डितः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमसेनेन हतः । **भी० ८८** । २४ ॥

२ **पण्डितः** । विद्वान् । तल्लक्षणं । **उ० ३३** । २१—३७ ॥

**पण्डितकः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । १०१ ॥

**पतनः** । राक्षसः । **व० २८६** । २ ॥

+ **पतिवशीकरणोपायः । व० २३५** ॥

+ **पतिव्रता** । तद्धर्माः । **व० २३४** । १८ ॥ **अनु० १८५** ॥

तन्माहात्म्यं । **व० २०८** ॥

तस्याः कथा भीमसेनेन द्रौपद्यै उक्ता । **वि० २७** । ४४ ॥

**पथिकृत्** । प्रायश्चित्ताग्निविशेषः । **व० २२३** । ३० ॥

**पद्मः** । धार्मिकः सर्पः । **स० ९** । ९ ॥ अस्य पद्मनाभ इति नामान्तरं । **शां० ३६५** । ४ ॥

तेन सूर्यवहनं । **शां० ३६७** । ८ ॥

**पद्मकेतनः** । गरुडस्य पुत्रः । **उ०१०१** । ११ ॥

**पद्मजालाः** । देशः । **स० ७८** । ९८ ॥

**पद्मनाभः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । ९६ ॥

**पद्मव्यूहः** । कौरवाणां । **द्रो० ३४** । २ ॥ अस्य चक्रव्यूह इति नामान्तरं । **द्रो० ३३** । १४ ॥

तद्भेदनमभिमन्युना । **द्रो० ३६** । १९ ॥

**पद्मसरः । स० २०** । २६ ॥

**पनसः** । वानरः । **व० २८४** । ६ ॥ **२८६** । ९ ॥

**पम्पा** । नदी तटाकश्च । **व० ८२**।१६२ ॥ **२८०**। ४४ ॥ A branch of the river Tungabhadra. It rises in the Rishyamukha Mountain which is eight miles from the Anagandi Hills.

तत्र रामस्य गमनं । **व० २८१** । १ ॥

**पयोष्णी** । नदी । **व० ८३** । ४० ॥ **८६** । ७ ॥ **१२१** । ३२ ॥ **भी० ९** । १६ ॥ The river Purna, one of the branches of the Tapti in Berar.

तत्र पाण्डवानां गमनं । **व० १२१** । ३२ ॥

तत्तटे गयराजस्य यज्ञः । **व० १२२** । १३ ॥

**परतङ्गणाः** । देशः । **भी० ९** । ६४ ॥ **स० ७८** । ७९ ॥

+ **परभार्यापुत्राः । अनु० ५७** । ६ ॥

**परशुरामः** । विष्णोरवतारः । भृगुवंश्यः । जमदग्निपुत्रः । तन्माता रेणुका । **आ० ६७** । ४८ ॥ **स० ८** । १८ ॥ उ० ९६ । ३ ॥ **शा० ५०** । ७ ॥

तस्योत्पत्तिः कथा च । **आ० २** । ८ ॥ **स० ४९** । १ ॥ **व० ११६** । ५ ॥ **द्रो० ७०** ॥ **क० २८** । ३ ॥ **शां० ४८** ॥ **अश्व० ३०** । ७ ॥ [भा० ९ । १५ ॥ पद्म० ६ । २६८ ॥ वायु० ९१ ॥ ब्रह्म० १० ॥ मत्स्य० ४७ ॥ देवीभा० ४ । १६ ॥]

तस्य भ्रातरः । रुमण्वान् सुषेणः वसुः विश्वावसुश्च । **आ० ६७ । ४८ ॥ व० ११७ । ११ ॥**

तेन त्रिःसप्तकृत्वो भुवो निःक्षत्रियीकरणं । **आ० २ । ३ ॥ ६५ । ४ ॥ ११३ । ४ ॥ अश्व० ३० । १७ ॥**

तस्य तेजोहरणं दाशरथिरामेण । **व० ९८ । ७ ॥** [रा० १ । ७५ ॥]

तेन पित्राज्ञया स्वमातृशिरश्छेदः । **व० ११७ । १५ ॥** [भा० ९ । १६ ॥]

तद्वाक्यं दुर्योधनं प्रति पाण्डवैः सह सन्धिकरण-विषये । **उ० ९६ । ३ ॥**

तस्य भीष्मेण सह तेनाम्बां ग्राहयितुं युद्धं । **उ० १७९—१८५ ॥**

तस्य पराजयो भीष्मेण । **उ० १८५ । ८ ॥**

तस्मिन्कर्णस्य शस्त्रविद्याभ्यासः । **क० ३६ । ५ ॥**

तेन कर्णाय शापदानं । **क० ३६ । १० ॥ शां० ३ । १ ॥ ३० ॥**

तेन कार्तवीर्यार्जुनबाहुच्छेदः । **शां० ४८ । ४७ ॥**

तस्य कर्णोत्सङ्गे शिरोनिधाय शयनं । **शां० ३ । ५ ॥**

तस्य वसिष्ठेन संवादः । **अनु० १३० । ३८ ॥**

**+ परशुरामास्त्रप्रयोगः** । कर्णेन । **क० ६७ । ४८ ॥**

**परान्ताः** । देशः । **भी० ९ । ४७ ॥**

**परावसुः** । रैभ्यऋषिपुत्रः अर्वावसोर्भ्राता । **व० १३७ । १३ ॥** विश्वामित्रस्य पौत्रः । **शां० ४८ । ५७ ॥**

तद्भार्योपभोगो बलात्कारेण यवक्रीतेन । **व० १३८ । २ ॥**

तेन बृहद्द्युम्नराजस्य याजनं । **व० १४० । २ ॥**

**१ पराशरः** । शक्तेः पुत्रः । वसिष्ठस्य पौत्रः । तन्माता अदृश्यन्ती । तस्योत्पत्तिः । **आ० १९४ । १ ॥ स० ७ । १० ॥**

तन्नामनिर्वचनं । **आ० १९४ । ३ ॥**

तस्मात्सत्यवत्यां व्यासोत्पत्तिः । **आ० ६४ । १२६ ॥** अधिकपाठे **५० ॥ ११४ । ३४ ॥**

तेन रुद्रमाहात्म्यकथनं । **अनु० ४९ । ४० ॥**

तेन स्वपितरं शक्तिऋषिं राक्षसहतं ज्ञात्वा लोकविनाशाय यत्नः । **आ० १९४ । ९ ॥**

तेन वसिष्ठवचनाल्लोकविनाशनयत्नान्निवृत्य राक्षसनाशाय यज्ञारम्भः । **आ० १९७ । १ ॥** [विष्णु० १ । १ ॥ लिङ्गपु० ६४ ॥]

तस्य वचनं । **अनु० १४६—१५२ ॥**

तस्य जनकेन संवादः । इयमेव पराशरगीता । **शां० २९६–३०४ ॥**

**२ पराशरः** । सर्पः । **आ० ५७ । १९ ॥**

**१ परिक्षित्** । (**परीक्षित्**) । क्षत्रियः । सो० वं० अनश्वुषः पुत्रः । तन्माता अमृता । तद्भार्या सुवेषा । तत्पुत्रो भीमसेनः । **आ० ६३ । ४४ ॥**

**२ परिक्षित्** । क्षत्रियः । सो० वं० अविक्षतः पुत्रः । तद्भ्रातरः शबलाश्वादयः । तत्पुत्राः कक्षसेनादयः । **आ० १०१ । ४० ॥**

**३ परिक्षित्** । क्षत्रियः । सू० वं० तत्पुत्राः शलो दलो बलश्चेति त्रयः । सुशोभनानाम्न्यां मण्डूककन्यायां जाताः । **व० १९५ । ३८ ॥**

**४ परिक्षित्** । क्षत्रियः । सो० वं० अर्जुनपुत्रस्याभिमन्योः पुत्रः । तन्माता विराटराजदुहिता उत्तरा । **आ० ६३ । ८२ ॥** कृपाचार्यस्य शिष्यः । **आ० ४९ । १३ ॥**

तस्य मातृगर्भे प्रयुक्तेनाश्वत्थाम्नो ब्रह्मास्त्रेण मृतस्य श्रीकृष्णेनोज्जीवनं । **अश्व० ६९ । २५ ॥**

तस्योत्पत्तिः । **आ० ६८ । १३३ ॥** [भा० १ । १२ ॥]

तन्नामनिर्वचनं । **आ० ६३ । ८५ ॥**

तद्भार्या भद्रवती । तत्पुत्राः जनमेजयः श्रुतसेनः उग्रसेनः भीमसेन इति चत्वारः । **आ० ३ । १ ॥ ६३ । ८६ ॥**

तस्य राज्याभिषेकः । **महा० १ । ७ ॥**

तस्य मृगयागमन **आ० ४० । ११ ॥ ४९ । २२ ॥**

तेन शमीकऋषेः स्कन्धे स्वधनुष्कोट्या मृतसर्पप्रक्षेपणं । **आ० ४९ । ३० ॥**

तस्य शमीकर्षिपुत्रेण श्रृङ्गिणा तक्षकदंशनशापदानं । **आ० ४१ । १२ ॥ ५० । ८ ॥** [भा० १ । १८ ॥]

[तस्य कथा । भा० १ । १६—१९ ॥]

तस्य विषपरिजिहीर्षया कश्यपऋषेर्गमनं । **आ० ४२ । ३४ ॥ ५१ । १७ ॥**

तस्य तक्षकेण दंशनं । **आ० ४३ । ३६ ॥ ५१ । २९ ॥** [भा० १२ । ६ ॥ देवीभा० २ । १० ॥]

**परिप्लवतीर्थं । व० ८१ । १२ ॥**

**परिबर्हः** । गरुडपुत्रः । **उ० १०१ । १३ ॥**

**परिश्रवाः** । क्षत्रियः । सो० वं० भीमसेनस्य पुत्रः । तन्माता सुकुमारी । तद्भार्या शैब्या सुन्दरी । तत्पुत्राः देवापिः शान्तनुः बाह्लीकश्चेति त्रयः । अस्य प्रतीप इत्यपि नाम । **आ० ६३ ।** ४७ ॥ तस्य गङ्गया सह विवाहविषये विवादः । **आ० १०३ ॥**

**पर्जन्यः** । देवगन्धर्वः । **आ० ६६ ।** ४४ ॥

**पर्णजङ्घः** । विश्वामित्रपुत्रः । **अनु० १७ ।** ५२ ॥

१ **पर्णादः** । ऋषिः । **स० ४ ।** १९ ॥

२ **पर्णादः** । ब्राह्मणः । दमयन्त्या दूतः । **व० ६८ । १ ॥**

**पर्णाशा** । काचन नदी । **स० ९ ।** २५ ॥ **भी० ९ ।** ३१ ॥ तस्याः शीततोयेति नामान्तरं । तस्यां वरुणाज्जातः पुत्रः श्रुतायुधः । सः श्रीकृष्णं प्रति प्रयुक्तया तत्पराक्रमसहनाक्षमतया प्रतिनिवृत्तया स्वगदयैव हतः । **द्रो० ९२ ।** ४४॥ The river Banas in Rajputana; a tributary of the Chambal.

**पर्वणः** । राक्षसः । **व० २८६ ।** २ ॥

**पर्वतः** । नारदस्य भागिनेयः **शां० २९ ।** २६ ॥ **स० ४ ।** २१ ॥ **७ ।** १० ॥ **१० ।** २७ ॥

तेन नारदाय वानरसुखप्राप्तिशापदानं । **शां० २९ ।** २५ ॥

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३ ।** ३४॥

+ **पर्वतानां नामानि । भी० ६ ।** ९ ॥ **अनु० २७१ ।** ३० ॥

**पर्वसङ्ग्रहः । आ० २ ।** ४१ ॥

**पर्वसङ्ग्रहपर्व । आ० २ ॥**

**पवित्रपाणिः** । ब्रह्मर्षिः । **स० ४ । २१ ॥ ७ । १२ ॥**

**पवित्रा** । नदी । **भी ९ ।** २१ ॥

**पशुसखः** । सप्तर्षिभृत्यः कश्चन शूद्रः । तत्पत्नी गण्डा । **अनु० १४१ । ५ ॥**

तन्नामनिर्वचनं । **अनु० १४२ ।** ४३ ॥

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३ ।** ४० ॥

× **पश्चात्तापः** । अनुतापः । तस्य पापपरिहारकत्वं । **अनु० १७४ ।** ४ ॥

+ **पश्चिमदिग्वर्णनं । उ० ११० ॥**

+ **पश्चिमदिग्विजयः** । नकुलेन । **स० ३५ ॥**

**पह्लवाः** । देशः । **भी० ९ ।** ६८ ॥

**पांसुराष्ट्राः** । देशः । तदधिपतिर्वसुदानः । **स० ७८ ।** १०६ ॥

**पाञ्चजन्यः** । श्रीकृष्णस्य शङ्खः । **उ० १५१ ।** ७० ॥ **भी० २५ ।** १५ ॥

**पाञ्चरात्रं** । पञ्चरात्रशब्दं पश्यत ।

**पाञ्चालः** । द्रुपदः । तत्पुत्रो धृष्टद्युम्नश्च ।

**पाञ्चालाः** । पञ्चालशब्दं पश्यत ।

**पाञ्चाल्यः** । आरुणिनामा ऋषिः । **आ० ३ ।** २७ ॥

**पाटलावती** । नदी । अनूपदेशस्य समीपे पारियात्रपर्वतादुत्पन्ना चर्मण्वत्या उपनदी । **भी० ९ ।** २२ ॥ The Kali-Scind, a branch of the Chambal.

**पाणिखातं** । तीर्थं । **व० ८१** । ८९ ॥
**पाण्डरः** । सर्पः । **आ० ५७** । ११ ॥
**पाण्डवाः** । क्षत्रियाः । सो० वं० पाण्डुराजपुत्राः । तेषु युधिष्ठिरः भीमसेनः अर्जुनः इतित्रयः कुन्त्यां यमानिलेन्द्रेभ्यो जाताः । नकुलः सहदेवः इति द्वौ माद्यां अश्विनोर्जातौ ।
तेषामुत्पत्तिः । **आ० ६३** । ६४॥ **६४** । १५८॥
तेषां देवांशत्वं । **आ० ६८** । ११० ॥
तेषां नामकरणं । **आ० १३३** । २१ ॥
तेषामुपनयनं । **आ० १३३** । ४६ ॥
तेषां शुक्रनामऋषितो धनुर्विद्याभ्यासः । **आ० १३३** । ५१ ॥
तत्पितृमरणं । **आ० १३४** । २६ ॥
तेषामायुष्यकथनं । **आ० १३४** । २ ॥
तेषां हास्तिनपुरगमनं । **आ० १३४** । २ ॥
तेषां धृतराष्ट्राज्ञया वारणावतगमनं । **आ० १५५** । २२ ॥
तेषां जतुगृहे वासः । **आ० १५९** । १७ ॥
तेषां जतुगृहान्निर्गतानां रात्रौ गङ्गोत्तरणं । **आ० १६१** । २२ ॥
तेषां हिडिम्बवनगमनं । **आ० १६३** । १९ ॥
तेषां शालिहोत्राश्रमे निवासः । तत्र व्यासागमनं च । **आ० १६८** । ३२ ॥ **१७०** । १ ॥
तेषामेकचक्रानगरगमनं । **आ० १७०** । ११ ॥
तेषां ब्राह्मणवचनात् द्रौपदीस्वयंवरार्थं गमनं । **आ० १८३** । १२ ॥
तैर्मध्येमार्गं गन्धर्वचोदनया उत्कोचकतीर्थे धौम्यस्य पौरोहित्येन वरणं । **आ० १९९** । ८ ॥
तेषां द्रुपदनगरे कुम्भकारगृहे निवासः । **आ० २००** । ६ ॥
तेषां द्रौपदीपाणिग्रहणं । **आ० २१५** ॥
तेषां समातृभार्याणां इन्द्रप्रस्थगमनं । **आ० २२७** । १९ ॥
तेषां समीपे द्रौपदीविषये समयकरणचोदनार्थं नारदस्यागमनं । **आ० २२८** । ९ ॥
तैर्द्रौपदीविषये समयकरणं । **आ० २३२** । २८ ॥
तेषां सामवेदित्वं । **स० १०२** । २२ ॥
तेषां द्यूतजितानां वनगमनकाले चेष्टाविशेषाः । **स० १०२** । ४ ॥
तेषां काम्यकवने वासः । **व० ५** । ४ ॥
तेषां द्वैतवने प्रवेशः । **व० २४** । १० ॥
तेषां लोमशेन कैलासगिरिगमनचोदना । **व० १४१** । ११ ॥
तेषां बदरिकाश्रमगमनं । **व० १४७** । १५ ॥
तैर्गन्धर्वबद्धस्य दुर्योधनस्य मोचनं । **व० २४७** । १५ ॥
तेषां गन्धमादनपर्वतगमनं । **व० १५९** । ४३ ॥
तेषामज्ञातवासार्थं विराटनगरगमनं । **वि० ६** ॥
तेषां श्मशानवृक्षे धनुषां निक्षेपः । **वि० ७** । ४० ॥
तेषामज्ञातवासे क्रमेण प्रसिद्धनामानि । **वि० २** । २३ ॥ **३** । ८ ॥ ४४ ॥ **४** । ३ ॥ **५** ॥ १५ ॥
तेषामज्ञातवासे गूढनामानि । **वि० २७** । ६६ ॥
तेषां रथाश्वध्वजवर्णनं । **उ० ५६** ॥
तेषां कुरुक्षेत्रगमनं । **उ० १५१** । ५० ॥
तत्सेनायां रथातिरथसङ्ख्यानं । **उ० १६९** ॥
तेषां प्रशंसा कर्णेन । **द्रो० २२** । १८ ॥
तत्सेनायां निहतानां नामानि । **क० ३** ॥
तेषां दुर्योधनवधानन्तरं ओघवतीतीरे उपवेशनं । **श० ६३** । ४७ ॥
तद्वधप्रतिज्ञा अश्वत्थाम्ना दुर्योधनस्य भग्नसक्थिकस्य समीपे । **श० ६६** । ३२ ॥
तानुद्दिश्याश्वत्थाम्ना ऐषीकास्त्रप्रयोगः । **सौ० १३** । २० ॥
तेषां राज्यशासनप्रकारः । **अश्व० १५** ॥
तेषां महाप्रस्थानगमनं । **महा० १** । २४ ॥
तेषां स्वर्गे सुखेन वासः । **स्वर्गा० ३** ॥
**+ पाण्डवप्रवेशपर्व । वि० १—१४ ॥**
१ **पाण्डुः** । क्षत्रियः । सो० वं० विचित्रवीर्य

भार्यायामम्बालिकायां व्यासाज्जातः । **आ० १ । १३० ॥ स० ८ । २५ ॥ वि० ५३ । १७॥**

तस्योत्पत्तिः । **आ० ६३ । ५७ ॥ ६४ । १५५॥**

तस्य राज्याभिषेकः । **आ० ११८ । ३० ॥**

तस्य दिग्विजयः । **आ० १२२ । २१ ॥**

तस्य कुन्त्या विवाहः । **आ० १२१ । ९ ॥**

तस्य माद्र्या विवाहः । **आ० १२२ । १८ ॥**

तस्य मृगयार्थं वनगमनं । **आ० १२३ । ७ ॥**

तस्य किन्दमऋषिणा शापदानं । **आ० ६३ । ६१ ॥ १२३ । ३४—३८ ॥**

तस्य माद्रीसंगमेन मरणं । **आ० ६३ । ६७ ॥ १३४ । २६ ॥**

तदस्थिसंस्कारः पाण्डवैः । **आ० १३६ । ५ ॥**

२ **पाण्डुः** । क्षत्रियः । सो० वं० तृतीयस्य जनमेजयस्य पुत्रः । तद्भ्रातरो धृतराष्ट्रादयः सप्त । **आ० १०१ । ४४ ॥**

**पाण्डुराष्ट्राः** । देशः । पाण्ड्यदेशस्य नामान्तरं । **भी० ९ । ४४** ॥ Pandya—the modern districts of Tinnevelly and Madura in South India. Its capitals at different periods were Uragapura now called Negapatam and Madura.

**पाण्ड्यः** । चित्राङ्गदायाः पिता । द्रविडेश्वरः । अश्वत्थाम्ना हतः । अस्य प्रवीरः चित्रवाहनः मलयध्वज इति च नामान्तराणि । **क० ५६ । ४५ ॥**

तस्य युद्धं । **क० ५५ । ६० ॥**

**पाण्ड्याः** । पाण्डुराष्ट्रशब्दं पश्यत ।

+ **पाताललोकवर्णनं** । **उ० ९९** । [भा० ५। २४ ॥ देवीभा० ८ । १९–२० ॥]

+ **पात्रापात्रलक्षणं** । **अनु० ७२ ॥ शां० ३५ । ३६ ॥**

+ **पापं** । तत्फलभोगः । **व० १८६ । १८ ॥ अनु० २२०—२२३ ॥**



तस्य प्रायश्चित्तं । **शां० ३३ ॥ ३४ ॥ १६३ । ४६ ॥ अनु० १७४ ॥**

तत्कर्मणः फलं बालस्य द्वादशवर्षपर्यन्तं नास्ति । **आ० ११७ । १५ ॥**

**पापहरा** । नदी । **भी० ९ । २२ ॥**

**पारदाः** । देशः । **स० ७८ । ७९ ॥**

**पारसिकाः** । देशः । **भी० ९ । ६६ ॥**

**पारावतः** । सर्पः । **आ० ५७ । ११ ॥**

**पारावताश्वः** । धृष्टद्युम्नः । **भी० ६१ । १६ ॥**

**पाराशर्यः** । व्यासः ।

**पारिजातः** । देवतरुः । कल्पवृक्षः । क्षीरसमुद्रादुत्पन्नः । **आ० १८ । ५१ ॥**

तस्यापहारः श्रीकृष्णेन । **स० ५७ । ४१ ॥** [भा० १० । ५९ ॥ हरि० २ । ६४ ॥]

१ **पारियात्रः** । कुलपर्वतः । **भी० ९ । ११ ॥** Pariyatra, the western part of Vindhya range extending from the source of the Nerbada to the Gulf of Cambay. It included the Aravali mountains.

२ **पारियात्रः** । सर्पः । **आ० ५७ । ११ ॥**

**पार्थः** । अर्जुनः । **वि० ४३ । २१ ॥**

**पालः** । सर्पः । **आ० ५७ । ५ ॥**

+ **पालाशविधिः** । **अश्व० ११८ । २—६ ॥**

**पावकः** । अग्निविशेषः । **व० २२४ । १ ॥**

**पावनी** । नदी । **भी० ६ । ४९** ॥ The river Iravadi in Burma.

**पाशाशिनी** । नदी । **भी० ९ । २२ ॥**

**पाशिवाटाः** । देशः । **भी० ९ । ६४ ॥**

**पाशी** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ८ ॥ क० ४६ । ७ ॥**

+ **पाशुपतास्त्रं** । रुद्रदेवताकमस्त्रं । तत्प्राप्तिरर्जुनस्य । **व० ४० । ८—२१ ॥ १६८ । ४६ ॥ द्रो० ८१ । १८ ॥**

**पिङ्गतीर्थं** । **व० ८० । ५९ ॥**

**पिङ्गलः** । सर्पसत्रे सदस्यः । **आ० ५३ । ६ ॥**

**पिङ्गलकः** । यक्षः । **स० १० । १८** ॥
**पिङ्गला** । वेश्या । **शां० १७३ । ५८** ॥ [भा० ११ । ८ ॥]
**पिच्छलः** । सर्पः । **आ० ५७ । ६** ॥
**पिच्छिला** । नदी । **भी० ९ । २९** ॥
**पिञ्जरकः** । सर्पः । **आ० ३५ । ६** ॥ **उ० १०३ । ११** ॥
**पिञ्जला** । नदी । **भी० ९ । २७** ॥
**पिठरः** । असुरः । **स० ९ । १७** ॥
**पिठरकः** । सर्पः । **आ० ३५ । १४** ॥ **५७ । १५** ॥
+ **पिण्डदानं** । पितृभ्यः । **अनु० १८८ । २३** ॥ मध्यमपिण्डस्य पत्न्या भोजने पुत्रोत्पत्तिः । **अनु० १८८ । ३८** ॥ पिण्डत्रयस्य प्रयोजनं । **अनु० १८८ । २५** ॥
**पिण्डसेक्ता** । सर्पः । **आ० ५७ । ८** ॥
**पिण्डारः** । सर्पः । **आ० ३५ । ११** ॥ **५७ । १७** ॥
१ **पिण्डारकः** । सर्पः । **आ० ३५ । ११** ॥ **५७ । १७** ॥
२ **पिण्डारकः** । क्षत्रियः । यादवः । **आ० २०१ । २०** ॥
**पिण्डारकं** । तीर्थं । **व० ८० । ६६** ॥ **८६ । २१** ॥
**पितरः** । अग्निष्वात्तादयः **स० ८ । ३०** ॥ [हरि० १ । १८ ॥ मत्स्य० १३–१५ ॥]
तेषां पिण्डसंज्ञाप्राप्तिः । **शां० ३५५ । २०** ॥
तदृणापनोदनं । **शां० १२९ । १०** ॥
**पितामहः** । भीष्मः । **भी० १०७ । ५१** ॥
**पिनाकी** । एकादशरुद्रेष्वन्यतमः । **आ० ६७ । २** ॥
**पिप्पलादः** । ऋषिः । दधीचपुत्रः । **शां० ४६ । १०** ॥
**पिशङ्गः** । सर्पः । **आ० ५७ । १७** ॥
+ **पिशाचादिपीडापरिहारोपायः** । **अनु० १९४** ॥
**पिशाची** । **व० २३० । २८** ॥
**पुच्छाण्डकः** । सर्पः । **आ० ५७ । ८** ॥
**पुञ्जिकस्थला** । अप्सराः । **आ० १३२ । ४६** ॥ **स० १० । ११** ॥
१ **पुण्डरीकः** । क्षत्रियः । यमसभायां । **स० ८ । १४** ॥
२ **पुण्डरीकः** । ब्राह्मणः । तस्य नारदेन सह नारायणस्य सर्वोत्तमत्वे संवादः । **अनु० १८६ । ३** ॥
**पुण्डरीकतीर्थं** । **व० ८१ । ८३** ॥
**पुण्डरीका** । अप्सराः । **आ० १३२ । ४५** ॥ **वि० १४ । ३२** ॥
**पुण्डरीकाक्षः** । श्रीकृष्णः । तन्नामनिर्वचनं । **उ० ६९ । ६** ॥
**पुण्ड्रः** । क्षत्रियः । बलिनामकस्य राज्ञो भार्यायां सुदेष्णायां दीर्घतमसो जातः पुत्रः । तद्भ्रातरः अङ्गादयः । **आ० ११३ । ५३** ॥
+ **पुण्यं** । सुकृतं । तत्फलभोगः । **व० १८६** ॥
+ **पुत्राणां प्रभेदः** । **आ० १२६ । ३०** ॥ **अनु० ८४** ॥ तन्नामनिर्वचनं । **आ० ७९ । २६** ॥ **९८ । २०** ॥ **२५५ । १४** ॥
+ **पुत्र्या दायविभागः** । **अनु० ८० । ११** ॥
+ **पुनर्द्यूतं** । पाण्डवानां । **स० ९८ । ६** ॥
+ **पुनःस्वयंवरः** । दमयन्त्याः । **व० ६८ । २५** ॥
**पुरन्दरः** । इन्द्रः ।
**पुरमालिनी** । नदी । **भी० ९ । २१** ॥
+ **पुरलक्षणं** । **शां० ८६** ॥
+ **पुराणं** । ऋषिप्रोक्तः वेदार्थनिर्णायको ग्रन्थविशेषः । **आ० १ । २३** ॥ [तेच अष्टादश । तेषां नामानि ग्रन्थसङ्ख्या च । भा० १२ । १३ ॥ मत्स्य० ५३ ॥ देवीभा० १ । ३ ॥]
**पुरावती** । नदी । **भी० ९ । २४** ॥

**पुरुः** । क्षत्रियः । **स० ४ । ३३ ॥**

**पुरुकुत्सः** । क्षत्रियः । सू० वं० । **स० ८ । १३॥** तत्पुत्रः । अनरण्यः । **अनु० १७७ । ६६ ॥** [अयं मान्धातुः पुत्रः । तन्माता बिन्दुमती । भा० ९ । ६ ॥]

**पुरुजित्** । क्षत्रियः । कुन्तिभोजस्य पुत्रः । पृथाया भ्राता । अतिरथः । **उ० १७२ । २ ॥ भी० २५ । ५ ॥** द्रोणेन हतः । **क० ३ । २२ ॥**

**पुरुमित्रः** । क्षत्रियः । दुर्योधनपक्षीयः । **भी० ५७ । ३१ ॥**

**पुरुमीढः** । क्षत्रियः । सो० वं० भुमन्युपुत्रस्य सुहोत्रस्य पुत्रः । **आ० १०१ । १८ ॥**

**+ पुरुषशब्दनिर्वचनं । शां० २१२ । ५२ ॥**

**पुरुषोत्तमः** । श्रीकृष्णः । तन्नामनिर्वचनं । **उ० ६९ । ११ ॥**

**पुरूरवाः** । क्षत्रियः । सोमपुत्रस्य बुधस्य पुत्रः । इलायां जातः । तत्पुत्राः आयुः धीमान् अमावसुः दृढायुः वनायुः शतायुश्च उर्वश्यां जाताः । **आ० ६९ । २१—२७ ॥** तेषु मुख्य आयुः । **आ० ६३ । ५ ॥**

[तस्य कथा । भा० ९ । १४ ॥ हरि० १ । २६ ॥ मत्स्य० २४ ॥ वायु० ९१ ॥ देवीभा० १ । १३ ॥]

[तस्य वंशः । भा० ९ । १५ ॥ हरि० १ । २७ ॥ वायु० ९१ ॥ मत्स्य० १२ ॥]

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३ । २२ ॥**

**पुरोचनः** । दुर्योधनमन्त्री । तेन जतुगृहनिर्माणं । **आ० १५६ । ३ ॥**

तस्य जतुगृहे दाहः । **आ० १६० । ६ ॥**

**पुरोहितः** । उपाध्यायः । तस्य राज्ञश्च कथा । **अनु० ३१ । ४६ ॥**

तस्य लक्षणं । **शां० ७३ । २ ॥**

**पुलस्त्यः** । ब्रह्मणो मानसः पुत्रः । **आ० ६६ । १० ॥**

[तद्भार्या कर्दमप्रजापतिसुता हविर्भुक् । तत्पुत्रः अगस्त्यः । तस्य इडिबिलायां जातः पुत्रः कुबेरः । केशिन्यां जाताः पुत्राः रावणादयः । **भा० ४ । १ ॥**]

[तस्य भार्या प्रीतिः । तत्पुत्रो दम्भोलिः । विष्णु० १ । १० ॥]

तस्य भार्या सन्ध्या । **उ० ११७ । ११ ॥** अन्या तद्भार्या प्रतीच्या । **उ० ११७ । १६ ॥**

तस्य भीष्मेण संवादः । **व० ७९ । १५ ॥**

तत्प्रार्थनया राक्षसवधार्थे पराशरेणारब्धस्य यज्ञस्य समापनं । **आ० १९७ । २२ ॥**

तस्य पुत्राः । **आ० ६७ । ७ ॥**

पुलस्त्येन तीर्थमहिमानुवर्णनं । **व० ८० ॥**

**पुलहः** । ब्रह्मणो मानसः पुत्रः । **आ० ६६ । १० ॥ ६७ । ४ ॥ स० ७ । १७ ॥ ११ । १८ ॥**

तस्य पुत्राः । **आ० ६७ । ८ ॥**

**पुलिनः** । अमृतरक्षको देवः । **आ० ३२ । १९ ॥**

**पुलिन्दाः** । देशः । **भी० ९ । ३९ ॥** This included the western portion of Bundelkhand and the district of Sagar.

१ **पुलोमा** । दनुपुत्रः । **आ० ६६ । २२ ॥**

२ **पुलोमा** । राक्षसः । तेन भृगुपत्न्याः पुलोमाया अपहारः । **आ० ५ । १५ ॥**

३ **पुलोमा** । भृगोः पत्नी । **आ० ५ । १३ ॥** तत्पुत्रश्च्यवनः । **आ० ६ । २ ॥**

४ **पुलोमा** । दैत्यस्त्री । तत्पुत्राः पौलोमाः । **व० १७५ । ७ ॥**

१ **पुष्करः** । वरुणस्य पुत्रः । तद्भार्या सोमस्य पुत्री ज्योत्स्नाकाली । **उ० ९८ । १२ ॥**

२ **पुष्करः** । पर्वतः । **भी० १२ । २४ ॥**

३ **पुष्करः** । नलराजस्य ज्ञातिः । **व० ५६ । ७ ॥**

तेन नलस्य द्यूते पराजयः । **व० ५६ । १० ॥**

तस्य नलेन पराजयः । **व० ७६ । १९ ॥**

४ **पुष्करः** । क्षेत्रं । **व० ८० । २० ॥** तस्य

त्रेतायां पुण्यतमत्वं । **व० ८३ । ९० ॥ अनु० ६४ । ९ ॥** The Pushkar, a lake six miles from Ajmer. It is called also Pokhra.

**पुष्करमालिनी** । सत्यनामकस्योञ्छवृत्तेर्भार्या । **शां० २७८ । ६ ॥**

**पुष्करिणी** । भुमन्योर्भार्या । **आ० १०१ । १३ ॥**

**पुष्टिः** । दक्षप्रजापतिपुत्री । धर्मप्रजापतेर्भार्या । **आ० ६७ । १४ ॥**

**पुष्टिपतिः** । अग्निविशेषः । **व० २२३ । १ ॥**

**पुष्पकं** । कुबेरस्य विमानं । **स० ५० । २६ ॥**

तस्य रावणेनापहारः । **व० २७६ । ३४ ॥**

तस्य कुबेरं प्रति रामेण प्रेषणं । **व० २९२ । ७० ॥**

**पुष्पवती** । नदी । **व० ८३ । १२ ॥**

**पुष्पाननः** । यक्षः । **स० १० । १८ ॥**

**पुष्पोत्कटा** । रावणकुम्भकर्णयोर्माता । **व० २७६ । ७ ॥**

**पुंश्चली** । कुलटा । तत्त्वापादकानि कर्माणि । **अनु० २२२ । १ ॥**

**पुंस्त्वं** । पुंसो भावः । तस्य कर्मायत्तत्वं । **अनु० २२६ । ४ ॥**

**पूजनी** । शकुन्तिका । तस्याः ब्रह्मदत्तेन संवादः । **शां० १३९ ॥** [ हरि० १ । २० ॥ ]

**पूतना** । स्कन्दमातृगणेऽन्यतमा । **व० २३० । २७ ॥**

[ तस्या वधः श्रीकृष्णेन । भा० १० । ६ ॥ हरि० २ । ६ ॥ विष्णु० ५ । ५ ॥ ]

**१ पूरुः** । क्षत्रियः । सो० वं० ययातिपुत्रः । तन्माता शर्मिष्ठा । तत्पुत्रो जनमेजयः । तद्भार्या कौसल्या । **आ० ६३ । ८ ॥ स० ८ । ८ ॥**

तद्भार्या पौष्टी । तत्पुत्राः प्रवीरः ईश्वरः रौद्राश्वः तेषु प्रवीरो वंशकृत् । **आ० ८८ । ४ ॥**

तस्य राज्याभिषेकः । **आ० ६९ । ५८ ॥ ७९ । ३८ ॥**

[ तस्य वंशः । भा० ९ । २० ॥ हरि० १ । ३१ । विष्णु० ४ । १९ ॥ ]

२ **पूरुः** । अर्जुनस्य सारथिः । **स० ३६ । ३० ॥**

१ **पूर्णः** । सर्पः । **आ० ५७ । ५ ॥**

२ **पूर्णः** । प्राधापुत्रः । **आ० ६६ । ४६ ॥**

**पूर्णभद्रः** । सर्पः । **आ० ३५ । १२ ॥**

**पूर्णाङ्गदः** । सर्पः । **आ० ५७ । १६ ॥**

**पूर्णायुः** । प्राधापुत्रः । **आ० ६६ । ४६ ॥**

**पूर्णमुखः** । सर्पः । **आ० ५७ । १६ ॥**

**पूर्वचित्तिः** । अप्सराः । **आ० १३२ ।** ४७

**पूर्वदिग्वर्णनं । उ० १०८ ॥**

**पूर्वाभिरामा** । नदी । **भी० ९ । २२ ॥**

+ **पूर्वेन्द्राः । आ० २१४ । २७ ॥**

**पूषा** । द्वादशादित्येष्वन्यतमः । **आ० ६६ ।१५॥**

**पृथा** । कुन्तीशब्दं पश्यत ।

**पृथाश्वः** । राजर्षिः । **स० ८ । १३ ॥**

**पृथिवी** । भूमिः । तस्याः काश्यपीत्वं । **अनु० २५९ । ५–७ ॥** विशेषो भूमिशब्दे द्रष्टव्यः ।

**पृथिवीञ्जयः** । असुरः । **स० ९ । १६ ॥**

**पृथिवीतीर्थं । व० ८१ । १३ ॥**

+ **पृथिवीवासुदेवसंवादः** । ब्राह्मणमाहात्म्यविषये । **अनु० ६९ । १९ ॥** गृहस्थधर्मविषये । **अनु० १५४ ॥**

१ **पृथुः** । क्षत्रियः । यादवः । **आ० २०१ । १८ ॥ २३९ । १० ॥**

२ **पृथुः** । अष्टवसुष्वन्यतमः । **आ० १०६ । ११॥**

३ **पृथुः** । वेनराजस्य पुत्रः । **शां० ५८ । १०७॥**

[ तद्भार्या अर्चिः । तत्पुत्रोऽन्तर्धानः । भा० ४ । १५ ॥ अत्रैव तद्वंशोपि द्रष्टव्यः । ]

[ तच्चरित्रं । भा० ४ । १३ ॥ हरि० १ । २ ॥ विष्णु० १ । १३ ॥ वायु० ६२ ॥ मत्स्य० १० ॥ पद्म० १ । २७ ॥ ]

तस्य कथा । **द्रो० ६९ । शां० २८** । १३७ ॥ **५८** । १२२ ॥

[तत्पौत्रः प्राचीनबर्हिः । भा० ४ । २४ ॥ हरि० १ । २ ॥ विष्णु० १ । १४ ॥]

४ **पृथुः** । क्षत्रियः । सू० वं० अनेनसः पुत्रः । **व० २०५** । २ ॥

**पृथुलाक्षः** । अङ्गवंश्यः क्षत्रियः । तत्पुत्रः चम्पः । **स० ८** । १० ॥

**पृथुवेगः** । क्षत्रियः । **स० ८** । १२ ॥

**पृथुश्रवाः** । क्षत्रियः । **स० ८** । १२ ॥

**पृथूदकं** । तीर्थं । **व० ८१** । १४२ ॥ **श० ४०** । ३३ ॥ Pehoa where the celebrated Brahma-yoni tirtha is situated. It is fourteen miles to the west of Thaneswara.

**पृश्निगर्भः** । । तन्नामनिर्वचनं **शा० ३५०** । ४६ ॥

**पृषतः** । क्षत्रियः । पाञ्चालदेशाधिपतिः । द्रुपदस्य पिता । **आ० १८०** । ६ ॥

[सः सोमकराजस्य पुत्रः । हरि० १ । ३२ ॥ भा० ९ । २२ ॥]

**पृषदश्वः** । क्षत्रियः । **स० ८** । १३ ॥

१ **पृषध्रः** । क्षत्रियः । वैवस्वतमनुपुत्रः । **आ० ६९** । १९ ॥

२ **पृषध्रः** । पाण्डवपक्षीयः क्षत्रियः । अश्वत्थाम्ना हतः । **द्रो० १५७** । १८३ ॥

**पैङ्ग्यः** । ऋषिः । **स० ४** । २३ ॥

**पैलः** । पिलिऋषेर्गोत्रापत्यं ऋषिः । **आ० ६४** । अधिकपाठे ८१ ॥ **स० ४** । १७ ॥ **शां० ४६** । ७ ॥

**पोतकः** । सर्पः । **उ० १०३** । ११ ॥

**पौण्ड्रः** । भीमसेनस्य शङ्खः । **भी० २५** । १५ ॥

**पौण्ड्रकः** । वसुदेवपुत्रः । **आ० २०१** । १२ ॥ **स० १४** । २० ॥ **३१** । २२ ॥

[तस्य वधः श्रीकृष्णेन । **भा० १०** । ६६ ॥]

**पौदन्यः** । देशः । **आ० १९३** । ४९ ॥

**पौरवः** । क्षत्रियः । रथोदारः । **आ० ६८** । २८ ॥ **उ० १६७** । १९ ॥ **भी० ११६** । १५ ॥ **द्रो० ३७** । ६ ॥ **२०१** । ८२ ॥

तस्य वधोऽभिमन्युना । **द्रो० १४** । ६२ ॥

+ **पौरानुगमनं** । वनं गच्छतां पाण्डवानां । **व० २** । १० ॥

**पौलोमतीर्थं** । **आ० २३६** । ३ ॥

**पौलोमपर्व** । **आ० ४—१२** ॥

**पौलोमाः** । पुलोमायाः पुत्राः । ते चार्जुनेन हताः । **व० १७५** । १२–६३ ॥

**पौष्टी** । पूरोर्भार्या । **आ० ८८** । ४ ॥

**पौष्यः** । सू० वं० ध्रुवसन्धिनामा क्षत्रियः । तस्य कथा । **आ० ३** । ८२ ॥

तद्भार्यया उत्तङ्कऋषये स्वधृतदिव्यकुण्डलदानं । **आ० ३** । १११ ॥

**पौष्यपर्व** । **आ० ३** ॥

**प्रकालनः** । सर्पः । **आ० ५७** । ६ ॥

**प्रकाशः** । ब्राह्मणः । तत्पिता तमः तत्पुत्रो वागिन्द्रः । **अनु० ८** । ६३ ॥

**प्रघसः** । राक्षसः । **व० २८६** । २ ॥

**प्रचेतसः** । तेषां भार्या वार्क्षी । **आ० २११** । १५ ॥ [पृथुवंश्यस्य प्राचीनबर्हिषः पुत्रः । तन्माता शतद्रुती । भा० ४ । २४ ॥]

[तेषां भार्या । वार्क्षी मारिषा । तत्पुत्रो दक्षप्रजापतिः । भा० ४ । ३० ॥]

**प्रचेताः** । वरुणः । **स० ७** । १६ ॥

+ **प्रजागरपर्व** । **उ० ३३—४०** ॥

**प्रजापतिः** । ब्रह्मा । तस्य स्थाणुना संवादः । **शां० २६२** ॥

तेन देवऋष्यसुरप्रभृतिभ्यः शिष्येभ्यः तत्तद्योग्यतानुगुणनानार्थप्रतिपादकवाक्यप्रयोगेण तत्वोपदेशः । **अश्व० २७** ॥ [इयं कथा छान्दोग्येऽष्टमाध्याये प्रसिद्धा ।]

**प्रज्ञा** । बुद्धिः । तस्याः सुखसाधनत्वं । **शां० १७८**॥
**प्रज्ञाचक्षुः** । धृतराष्ट्रः । **आ० १** । १७० ॥ ६८ । ८४ ॥
**प्रज्ञानास्त्रं** । **व० २९०** । ५ ॥
**प्रणिधिः** । अग्निविशेषः । **व० २२२** । ९ ॥
**प्रतर्दनः** । काशीशः । दिवोदासस्य पुत्रः । ययातेर्दौहित्रः । तन्माता माधवी । **उ० ११७** । १८ ॥ **अनु० २७१** । ५७ ॥ **स० ८** । १० ॥ **व० २०१** । २ ॥
तस्य ययातिना सह संवादः । **आ० ८६** । १४ ॥
तस्य वीतहव्येन सह युद्धं । **अनु० ८** । ४१ ॥
**प्रतापः** । क्षत्रियः । जयद्रथस्य भ्राता । **व० २६६** । ११ ॥
**प्रतिग्रहः** । तस्य निन्द्यत्वं । **अनु० १४१** । १—२९ ॥
+ **प्रतिज्ञापर्व** । **द्रो० ७२—८४** ॥
**प्रतिमत्स्याः** । देशः । **भी० ९** । ५२ ॥
**प्रतिविन्ध्यः** । क्षत्रियः । सो० वं० युधिष्ठिरपुत्रः । तन्माता द्रौपदी । **आ० ६३** । १४ ॥ **६४** । १६५ ॥ **६८** । १२८ ॥
तन्नामनिर्वचनं । **आ० २४७** । ७७ ॥
तस्य वधोऽश्वत्थाम्ना । **सौ० ८** । ६० ॥
**प्रतिश्रवाः** । द्वितीयं प्रतीपशब्दं पश्यत । **आ० ६३** । ४६ ॥
+ **प्रतिश्रुतार्थाप्रदाने दोषः** । **अनु० ३१** ॥
**प्रतिष्ठानं** । हास्तिनपुरसमीपस्थं नगरं । अस्य वर्धमानपुरमित्यपि नाम । **आ० ९६** । ४६ ॥ Bithoor, where the remains of a fort which is said to have been the fort of Raja Uttanapada still exist.
**प्रतिस्मृतिः** । काचन विद्या । व्यासेन युधिष्ठिरायोपदिष्टा । **व० ३६** । ३०—३८ ॥ तदुपदेशो युधिष्ठिरेणार्जुनाय । **व० ३७** । १७ ॥
**प्रतीच्या** । पुलस्त्यभार्या । **उ० ११७** । १६ ॥
१ **प्रतीपः** । क्षत्रियः । सो० वं० षष्ठस्य धृतराष्ट्रस्य पुत्रः । तत्पुत्राः देवापिः शन्तनुः बाह्लीकश्चेति त्रयः । **आ० १०१** । ४८ ॥
२ **प्रतीपः** । क्षत्रियः । सो० वं० भीमसेनस्य पुत्रः । तन्माता सुकुमारी । तस्य परिश्रवा इति नामान्तरं । तद्भार्या शैब्या सुनन्दी । तत्पुत्राः देवापिः शन्तनुः बाह्लिकश्चेति । **आ० ६३** । ४६ ॥ तस्य कथा । **आ० १०२—१०३** ॥
**प्रत्यग्रहः** । उपरिचरवसुपुत्रः । **आ० ६४** । ४४ ॥
**प्रत्युत्पन्नमतिः** । मत्स्यः । **शां० १३७** । १ ॥
**प्रत्यूषः** । अष्टवसुष्वन्यतमः । प्रभातायाः पुत्रः । **आ० ६७** । १८ ॥ तत्पुत्रो देवलः । **आ० ६७** । २६ ॥
**प्रथमदिवसयुद्धारम्भः** । **भी० ४४** ॥ तत्समाप्तिः । **भी० ४९** ॥
**प्रद्युम्नः** । क्षत्रियः । श्रीकृष्णस्य पुत्रो रौक्मिणेयः । सनत्कुमारांशः । **आ० ६८** । १५२ ॥
[ तस्योत्पत्तिः । भा० १० । ५५ ॥ ]
[ तस्य भार्या रुक्मिपुत्री रुक्मवती । तत्पुत्रोऽनिरुद्धः । भा० १० । ६१ ॥ ]
[तस्यान्या भार्या पूर्वदेहे रतिः शापात् शम्बरासुरभार्यात्वेन प्रसिद्धिं गता मायावती । भा० १० । ५५ ॥ विष्णु० ५ । २७ ॥ हरि० २ । १०४ ॥ ]
[ तेन शम्बरासुरवधः । भा० १० । ५५ ॥ हरि० २ । १०७ ॥ ]
तस्य पुत्रोऽनिरुद्धः । **स० ६०** । ८ ॥
तस्य सारथिः दारुकपुत्रः । **व० १८** । ३ ॥
तस्य वधः । **मौ० ४** ॥
**प्रद्योतः** । यक्षः । **स० १०** । १६ ॥
**प्रद्वेषी** । दीर्घतमस ऋषेः पत्नी । तत्पुत्रा गौतमादयः । **आ० ११३** । ३२ ॥

**प्रधानः** । राजर्षिः । तत्पुत्री सुलभा । **शां० ३२५ । १८३** ॥

**प्रभङ्करः** । क्षत्रियः । जयद्रथभ्राता । **व० २६६ । ११** ॥

**प्रभञ्जनः** । क्षत्रियः । मणलूरेश्वरस्य मूलपुरुषः । **आ० २३५ । २१** ॥

१ **प्रभा** । देवमाता । **स० ११ । ४१** ॥

२ **प्रभा** । अप्सराः । **अनु० ५० । ४८** ॥

**प्रभाता** । प्रत्यूषप्रभासयोर्माता । **आ० ६७ । २०** ॥

१ **प्रभावती** । देवशर्मपत्न्या रुच्या ज्येष्ठा भगिनी । अङ्गेश्वरस्य चतुर्थस्य चित्ररथस्य भार्या । **अनु० ७७ । ८** ॥

२ **प्रभावती** । स्वयंप्रभाशब्दं पश्यत । **व० २८३ । ४१** ॥

१ **प्रभासः** । अष्टवसुष्वन्यतमः । तद्भार्या बृहस्पतिभगिनी । तत्पुत्रो विश्वकर्मा । **आ० ६७ । २७** ॥

२ **प्रभासः** । तीर्थं । **व० ११९ । १५** ॥ **८० । ६०** ॥ **श० ३६ । ३४** ॥ Somnath in Guzerat. A sacred place of pilgrimage to the Hindus, the celebrated temple of Somnath.

तत्र श्रीकृष्णस्य गमनं । **आ० २३८ । २२** ॥ **व० ११९ । १५** ॥

तत्रार्जुनस्य तीर्थयात्रार्थं गमनं । **आ० २३८ । २** ॥ तत्र वृष्णीनां गमनं । **मौ० ४ । १०** ॥

तत्र वनवासे पाण्डवानां गमनं । **व० ११९ । १५** ॥

**प्रमतकः** । जनमेजयस्य सर्पसत्रे सदस्यः । **आ० ५३ । ७** ॥

**प्रमतिः** । ऋषिः । च्यवनस्य पुत्रः । तन्माता सुकन्या । तत्पुत्रो रुरुः घृताच्यां जातः । **आ० ८ । ११** ॥ **५८ । ३१** ॥

स वागिन्द्रस्य पुत्रः । **अनु० ८ । ६४** ॥

**प्रमथः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१ । १३** ॥

+ **प्रमथगणः** । रुद्रस्य स्कन्दस्य च पार्षदाः । तेषामुपद्रवकारणं तत्परिहारोपायश्च । **अनु० १९४** ॥

**प्रमद्वरा** । प्रमतिपुत्रस्य रुरोर्भार्या । मेनकायां विश्वावसोर्जाता । तस्याः पोषकः पिता स्थूलकेशः ऋषिः । **आ० ८ । २** ॥ **अनु० ८ । ६५** ॥ तन्नामनिर्वचनं । **आ० ८ । १३** ॥

**प्रमाणः** । वटवृक्षः । तत्र पाण्डवानां गमनं । **व० १ । ४१** ॥

**प्रमाणकोटिः** । गङ्गास्थो ह्रदः । तत्र भीमसेनस्य दुर्योधनादिभिः पातनं । **आ० ६१ । १२** ॥ **१३७ । ४०** ॥ **१३८ । २१** ॥

**प्रमाथिनी** । अप्सराः । **आ० १३२ । ४५** ॥

**प्रमाथी** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१ । १३** ॥ तस्य भीमसेनेन वधः । **द्रो० १५८ । १९** ॥

**प्रमोदः** । सर्पः । **आ० ५७ । ११** ॥

**प्रम्लोचा** । अप्सराः । **आ० १३२ । ४७** ॥ **स० १० । १२** ॥

**प्रयागः** । क्षेत्रं । **व० ८३ । ६९** ॥ Allahabad

**प्रयुतः** । देवगन्धर्वः । **आ० ६६ । ४३** ॥

**प्ररुजः** । अमृतरक्षको देवः । तेन सह गरुडस्य युद्धं । **आ० ३२ । १९** ॥

**प्रलम्बः** । दानवः । **आ० ६६ । २९** ॥ **स० ५१ । ७** ॥

[तस्य वधो बलरामेण । भा० १० । १८ ॥ हरि० २ । १४ ॥ विष्णु० ५ । ९ ॥]

+ **प्रलयवर्णनं** । **व० १९१ । ६५** ॥ **शां० ३१७** ॥ **अनु० ३९ । १–१८** ॥ [भा० १२ । ४ ॥]

**प्रवरा** । नदी । **भी० ९ । २३** ॥

**प्रवालकः** । यक्षः । **स० १० । १८** ॥

१ **प्रवीरः** । क्षत्रियः । पाण्ड्यराजः । चित्राङ्गदायाः पिता । अस्य मलयध्वज इति चित्रवाहन इति

च नामान्तरे । अश्वत्थाम्ना हतः । **क० ५६ । १—४४ ॥**

२ **प्रवीरः ।** सो० वं० पूरोः पुत्रः । तत्पत्नी शूरसेनी । तत्पुत्रो मनस्युः । **आ० ८८ । ४ ॥**

**प्रशमी ।** अप्सराः । **अनु० ५० । ४८ ॥**

१ **प्रसेनजित् ।** क्षत्रियः । तत्पुत्री जमदग्निऋषिपत्नी रेणुका । **व० ११७ । २ ॥** अस्य रेणुरिति नामान्तरं ।

२ **प्रसेनजित् ।** क्षत्रियः । यादवः । **स० १४ । ६४ ॥** अयं सत्राजितो भ्राता । तस्य प्रसेन इत्यपि नाम ।

**प्रस्थलः ।** देशः । **द्रो० १७ । १९ ॥**

**प्रस्वापनास्त्रं ।** भीष्मस्य । **उ० १८४ । २३ ॥**

**प्रहस्तः ।** रावणमन्त्री । विभीषणेन हतः । **व० २८७ । १–४ ॥**

**प्रहासः ।** सर्पः । **आ० ५७ । १६ ॥**

**प्रह्लादः ।** प्रह्लादशब्दं पश्यत ।

**प्रह्लादः ।** हिरण्यकशिपोः पुत्रः । तत्पुत्राः विरोचनः कुम्भः निकुम्भश्च । **आ० ६६ । १९ ॥ स० ११ । १९ ॥** [भा० ७ । ४ ॥ तत्पुत्री विश्वरूपाचार्यस्य माता रचना । भा० ६। ६ ॥ तस्याः विरोचनेत्यपि नाम । वायु० ८४॥]

तस्य भ्रातरः संह्लादः अनुह्लादः शिबिः बाष्कलश्च । **आ० ६६ । १८ ॥** [तन्माता कयाधूः । भा० ६ । १८ ॥]

तस्य हंसेन संवादः । **उ० ३५ । ३२ ॥**

तस्य महाबलिना संवादः । **व० २८ ॥**

तस्येन्द्रेण संवादः । **शां० १२४ । १९ ॥ २२९ ॥**

तस्य आजगरेण ऋषिणा संवादः । **शां० १७७ ।** [भा० ७ । १३ ॥]

[तस्य चरित्रं । भा० ७ । ४—८ । विष्णु० १ । १७ ॥]

**प्रह्लादाः ।** देशः । **भी० ९ । ४६ ॥**

**प्राकोटकाः ।** जनाः । **स० ३२ । १४ ॥**

**प्राग्ज्योतिषं ।** पुरं । तस्य राजा नरकासुरपुत्रो भगदत्तः । **स० २७ । १६ ॥ ५५ । ३२ ॥** Kamrup or Kamakshya in Assam.

**प्राचीनबर्हिः ।** क्षत्रियः । अत्रिवंशसमुद्भवः । तत्पुत्राः दश प्रचेतसः । **शां० २०७ । ६ ॥**

[अयं पृथुराजस्य प्रपौत्रः। अन्तर्धानस्य (हविर्धानस्य) पुत्रः । तद्भार्या शतद्रुती । भा० ४ । २४ ॥ हरि० १ । २ ॥ विष्णु० १ । १४ ॥]

[तस्मै नारदेन अजामिलोपाख्यानकथनं । भा० ४ । २५—२९ ॥]

**प्रा[illegible]वान् ।** क्षत्रियः । सो० वं० पूरोः पुत्रस्य जनमेजयस्य पुत्रः । तद्भार्या आश्माकी । तत्पुत्रः शय्यातिः । **आ० ६३ । १० ॥**

**प्राचीसरस्वती ।** नदी । **श० ३८ । ३६ ॥**

**प्राचेतसः ।** प्राचीनबर्हिषः पुत्रा दश । तेषां पुत्रो दक्षः । **आ० ६९ । ७–८ ॥ शां० २०७।६॥**

तद्भार्या वार्क्षी मारिषानाम्नी । **आ० २११ । १५ ॥** [भा० ४ । ३० ॥]

**प्राच्याः ।** देशः । **भी० ९ । ५८ ॥**

+ **प्राणापानादीनां स्वस्वश्रैष्ठ्ये विवादः । अश्व० २४ ॥** तेषां कार्यविशेषाः । **शां० १३ ॥**

**प्रातः ।** सर्पः । **आ० ५७ । १३ ॥**

**प्रातिकामी ।** दुर्योधनस्य सूतपुत्रः । **स० ८९ । १४ ॥** तस्य वधः । **श० ३३ । ४९ ॥**

**प्रातिपेयः ।** शान्तनुः । **आ० १४० । १८ ॥**

**प्राद्युम्निः ।** अनिरुद्धः । **स० ६० । ३६ ॥**

**प्राधा ।** दक्षप्रजापतिपुत्री । तत्पुत्राः दश । सिद्धः पूर्णः बर्हिः पूर्णायुः ब्रह्मचारी रतिगुणः सुपर्णः विश्वायुः भानुः सुचन्द्रश्चेति । तत्पुत्र्यः अष्टौ । अनवद्या मनुः वंशा असुरा मार्गणप्रिया अरूपा सुभगा भासी इति । **आ० ६६ । ४६ ॥**

**प्राप्तिः ।** शमस्य भार्या । **आ० ६७ । ३३ ॥**

+ **प्रायश्चित्तार्हाणि पापानि । शां० ३३ । ३४ ॥ १६३ । २६ ॥ अनु० १९९ ॥**

**प्रावरकः** । देशः । **भी० १२ । २२ ॥**
**प्रावारकर्णः** । उलूकराजः । **व० २०२ । ४ ॥**
**प्रावृषेयाः** । देशः । **भी० ९ । ५० ॥**
**प्रास्तिः** । जरासन्धपुत्री कंसस्य भार्या । **स० १४ । ३२ ॥**
**प्रियदर्शनः** । क्षत्रियः । द्रुपदस्य पुत्रः । कर्णेन हतः । **आ० २१८ । ३१ ॥**
**प्रोष्ठाः** । देशः । **भी० ९ । ६१ ॥**
**प्लक्षजाता** । नदी । **आ० १८६ । २० ॥**
**प्लक्षा** । नदी । **व० ८२ । ६ ॥**
**प्लक्षावतरणं** । तीर्थं । **व० ८८ । ४ ॥**

## फ.

**फलकक्षः** । यक्षः । **स० १० । १७ ॥**
**फलकीवनं** । **व० ८१ । ८६ ॥**
**फलोदकः** । यक्षः । **स० १० । १७ ॥**
**फल्गुः** । गयाक्षेत्रस्था नदी । **व० ८२ । ९७ ॥ ८५ । १२ ॥**
**फल्गुनः** । अर्जुनः । **वि० ४३ । २१ ॥** तन्नामनिर्वचनं । **वि० ४३ । ३४ ॥**
**फेनपः** । भार्गववंश्यः सुमित्रापरनामा मुनिः । त्रिशिखरगिरिनिवासी । **अनु० १२० ॥**
**फेनपाः** । गोफेनाहारा ऋषयः । **उ० १०२ । ५॥ अनु० ४५ । ४१ ॥**

## ब.

१ **बकः** । रावणज्ञाती राक्षसः । एकचक्रानगरस्थवेत्रकीयवननिवासी । **आ० १७४ । ५ ॥**
तस्य भ्राता अलायुधः घटोत्कचेन हतः । **द्रो० १७९ । ३७ ॥**
तस्य भीमसेनेन वधः । **आ० ६१ । २९ ॥ १७७ । ८३ ॥**
२ **बकः** । ऋषिः । दाल्भ्यस्य भ्राता । **स० ४ । १७ ॥ व० २६ । ५ ॥ १९६ । ४ ॥** क्वचिद्बकदाल्भ्याविति द्विवचनेन गृहीतत्वात् भ्रातराविति क्वचिद्बको दाल्भ्य इति सामानाधिकरण्येन गृहीतत्वात् दल्भपुत्रो बक इति च भाति ॥
तस्य प्राणिनां सुखदुःखविषये इन्द्रेण सह संवादः । **व० १९६ ॥**
तेन धृतराष्ट्रनाम्नः पाञ्चालराजस्य राज्यविनाशार्थं मृतपशुमांसैर्होमकरणं । **श० ४२ । २० ॥**
३ **बकः** । धर्मराजनामकः पक्षी । **शां० १६८ । १८ ॥**
**बकनखः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७ । ५८ ॥**
+ **बकवधपर्व । आ० १७१—१७८ ॥**
**बडबाग्निः** । बृहस्पतेः पुत्रोऽग्निविशेषः । तस्य ऊर्ध्वभाक् इति नामान्तरं । **व० २२१ । २८ ॥**
**बदरपाचनं** । तीर्थविशेषः । **श० ४९ । १ ॥**
**बदरिकातीर्थं** । **व० ८३ । १३ ॥**
**बदरी** । नरनारायणावासभूतो हिमवत्पर्वतस्थ आश्रमः । तत्र पाण्डवानां गमनं । **व० १४७ । १५ ॥** Badarinath. The temple of Naranarayana is built on the bank of the Bishen-Ganga (Alakananda). It was the hermitage of the celebrated Rishi Vyasa.
तत्र गरुडस्य गमनं । **अनु० ४१ । ३ ॥**
**बदरीकाननं** । **व० ८१ । १७९ ॥**
**बन्धकी** । तत्स्वरूपनिरूपणं कुन्त्या । **आ० १३२ । ६४ ॥**
१ **बभ्रुः** । क्षत्रियः । अक्रूरः । यादवः । **आ० २३९ । १० ॥ स० १४ । ६३ ॥**
तद्भार्यापहारः शिशुपालेन । **स० ६८ । १८ ॥**
२ **बभ्रुः** । क्षत्रियः । विराटराजस्य पुत्रः । **उ० ५७ । ३३ ॥**
३ **बभ्रुः** । ऋषिः । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५० ॥**
**बभ्रुमाली** । ऋषिः । **स० ४ । २२ ॥**

**बभ्रुवाहनः** । क्षत्रियः । अर्जुनस्य पुत्रः । तन्माता चित्राङ्गदा । सः पुत्रिकापुत्रधर्मेण मातामहस्य चित्रवाहनस्य पुत्रोऽभूत् । तस्य राजधानी मणलूरपुरं । **आ० ६३** । ८१ ॥ **२३७** । ३४ ॥

तेन राजसूयार्थं सहदेवाय करदानं । **स० ३२** । २८ ॥

तस्यार्जुनेन सह युद्धं । अर्जुनहननं च । **अश्व० ७९** । ३५ ॥

तस्य युधिष्ठिरकृताश्वमेधार्थं हास्तिनपुरागमनं । **अश्व० ८९** । १ ॥

**बर्बराः** । देशः । **स० ७८** । ९९ ॥ **भी० ९** । ५७ ॥

**बर्हिः** । प्राधायाः पुत्रः । **आ० ६६** । ४६ ॥

**बर्हिषदः** । पितरः । **आ० ६४** । ९३ ॥ **स० ८** । ३० ॥ [हरि० १ । १८ ॥]

१ **बलः** । क्षत्रियः । सू० वं० तृतीयस्य परिक्षितः पुत्रः । मण्डूककन्यायां सुशोभनायामुत्पन्नः । तद्भ्रातरौ शलो दलश्च । **व० १९५** । ३८ ॥

२ **बलः** । बलरामः ।

**बलदः** । अग्निविशेषः । **व० २२३** । १० ॥

**बलदेवः** । बलरामः ।

**बलरामः** । वसुदेवपुत्रः । तन्माता रोहिणी ॥ शेषावतारः । श्रीकृष्णस्य वैमात्रेयो भ्राता । **आ० ६८** । १५२ ॥

तेन धेनुकासुरवधः । **स० ५३** । १६ ॥

तस्य दुर्योधनं प्रति वचनं । **उ० ७** । २८ ॥

तस्य तीर्थयात्रा । स्वकृतरोमहर्षणवधप्रायश्चित्ततया । **उ० १५७** । ३५ ॥ [भा० १० । ७८–७९ ॥]

तत्तीर्थयात्राप्रकारः । **श० ३५** । २१ ॥

तस्य तीर्थयात्रायाः प्रतिनिवृत्तस्य गदायुद्धारम्भसमये आगमनं । **श० ३४** । २ ॥ [भा० १० । ७९ ॥]

तस्य द्वारकागमनं । **श० ६१** । ३८ ॥

तेन भीमसेनहननोद्योगः । श्रीकृष्णेन सान्त्वनं च । **श० ६१** । ९–२१ ॥

तेन धर्मविशेषकथनं । **अनु० १८९** । १६ ॥

तेन सर्पशरीरग्रहणेन समुद्रे प्रवेशः । **मौ० ५** । १३ ॥

[तस्य भार्या रैवतापरनाम्नः ककुद्मिनः पुत्री रेवती । तस्या विवाहः । भा० ९ । ३ ॥ ब्रह्म० ७ ॥]

[तस्य श्रीकृष्णे कोपाद्विदेहपुरगमनं । तत्र दुर्योधनस्य गदाविद्याभ्यासः । विष्णु० ४ । १३ ॥ भा० १० । ५७ ॥ ]

[तेन रोमहर्षणस्य हननं । भा० १० । ७८ ॥]

[तेन प्रलम्बासुरवधः । भा० १० । १८ ॥ विष्णु० ५ । ९ ॥ हरि० २ । १४ ॥]

[तेन इल्वलपुत्रस्य बल्वलस्य वधः । भा० १० । ७९ ॥]

[तेन रुक्मिणो वधः । भा० १० । ६१ ॥ हरि० २ । ६१ ॥]

[तस्य भूपरित्यागः । भा० ११ । ३० ॥]

**बलवर्धनः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० १३१** । ७ ॥

**बलाकः** । लुब्धकः । तस्यान्धनामकदुष्टश्वापदहननात्स्वर्गप्राप्तिः । **क० ७२** । ३८ ॥

+ **बलाका** । पक्षिविशेषः । तस्याः पातनं कौशिकेन स्वक्रूरदृष्टिप्रेक्षणेन । **व० २०९** । ५ ॥

**बलाकाश्वः** । सिन्धुद्वीपपुत्रः । तत्पुत्रः कुशिकः । **अनु० ७** । ४ ॥

**बलाकी** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । ९८ ॥ **१३१** । ७ ॥ **२०१** । २ ॥

१ **बलानीकः** । क्षत्रियः । द्रुपदराजपुत्रः । अश्वत्थाम्ना हतः । **द्रो० १५७** । १८१ ॥

२ **बलानीकः** । क्षत्रियः । विराटभ्राता । **द्रो० १५९** । ४१ ॥

१ **बलाहकः** । नागः । **स० ९** । १० ॥

२ **बलाहकः** । क्षत्रियः । जयद्रथभ्राता । **व०** २६६ । १३ ॥

३ **बलाहकः** । श्रीकृष्णस्याश्वः । **अश्व० ११८** । ५६ ॥

१ **बलिः** । [क्षत्रियः । शिबिराजपुत्रः । भा० ९ । २३ ॥ हरि० १ । ३१ ॥] तद्भार्या सुदेष्णा ।

तत्पुत्रा दीर्घतमसऋषेर्जाताः अङ्ग वङ्ग कलिङ्ग पुण्ड्र सुह्माः । **आ० ११३** । ४२ ॥

२ **बलिः** । असुरः । महाबलिः । विरोचनपुत्रः । तत्पुत्रो बाणः । **आ० ६६** । २० ॥ **स०** ९ । १६ ॥ [तस्य इन्द्रसेन इति नामान्तरं । भा० ८ ॥ २२ ॥]

[तत्पत्नी विन्ध्यावलिः । भा० ८ । २० ॥]

[तेन नर्मदाया उत्तरतटे भृगुकच्छे यज्ञकरणं । तत्र वामनस्य गमनं । भा० ८ । १८ ॥]

तस्य निग्रहो भगवता वामनेन । **स० ४७** । २८ ॥

[तस्य भगवदाज्ञया पाताललोकगमनं । भा० ८ । २२ ॥]

तस्य प्रह्लादेन सह संवादः क्षमायाः श्रेष्ठत्वे । **व०** २८ ॥

तस्य धूपदीपादिदानविषये शुक्राचार्येण संवादः । **अनु० १५९** । १०—६६ ॥

तेन गर्दभरूपग्रहणं तदानीं इन्द्रेण संवादश्च । **शां०** २३० । १३ ॥

३ **बलिः** । ऋषिः । **स० ४** । १६ ॥

+ **बलिप्रदानं** । **अनु० १९६** । ७ ॥

**बलिवाकः** । ऋषिः । **स० ४** । २० ॥

**बल्लवाः** । (**बलवाः**) । देशः । **भी० ९** । ६२ ॥

**बहिर्गिरिः** । पर्वतः । **स० २८** । ३ ॥

**बहुबाद्याः** । देशः । **भी० ९** । ५५ ॥

**बहुला** । नदी । **भी० ९** । २७ ॥

**बह्वाशी** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८** । १०२ ॥ **१३१** । ११ ॥ भीमसेनेन हतः । **भी० ८८** । २९ ॥

**बाणः** । महाबलिपुत्रो रुद्रस्यानुचरोऽसुरः । तस्य महाकाल इति नामान्तरं । **आ० ६६** । २१ ॥

[तस्य पुत्री उषा । (ऊषा) । तस्याः कथा । भा० १० । ६२ ॥ हरि० २ । ११८ ॥ विष्णु० ५ । ३२ ॥]

**बाभ्रवायणिः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७** । ५७ ॥

**बार्हद्रथः** । क्षत्रियः । जरासन्धः । **स० १९** । १९ ॥

+ **बार्हस्पत्यव्यूहः** । दाशरथिरामस्य । **व०** २८६ । ७ ॥ कौरवाणां । **क० ४१** । ३९ ॥

+ **बालः** । माणवकः । तस्य द्वादशवर्षपर्यन्तं चतुर्दशवर्षपर्यन्तं वा पापलेपो नास्ति । **आ०** ११७ । १५—१८ ॥

**बालधिः** । ऋषिः । तेन मरणरहितपुत्रोत्पत्त्यर्थं तपश्चरणं । मेधाविनामकपुत्रोत्पत्तिश्च । **व०** १३७ । ४५ ॥

**बाष्कलः** । असुरः । हिरण्यकशिपुपुत्रः । **आ०** ६६ । १८ ॥

१ **बाहुः** । क्षत्रियः पाण्डवपक्षीयः । **उ० ४** । २२ ॥

२ **बाहुः** । क्षत्रियः । सुन्दरवंशीयः । **उ० ७३** । १५ ॥

३ **बाहुः** । क्षत्रियः । सू० वं० सगरस्य पिता । **शां० ५६** । ८ ॥ [भा० ९ । ८ ॥ हरि० १ । १४ ॥]

१ **बाहुकः** । नलराजस्य ऋतुपर्णनगरे नामधेयं । **व० ६४** । २ ॥ ७३ । २ ॥

२ **बाहुकः** । क्षत्रियः । यादवः । **व० १२१** । २० ॥

**बाहुका** । ( **बाहुदा** ) । परिक्षितो भार्या । अस्याः

सुवेषेति नामान्तरं । तत्पुत्रो भीमसेनः । **आ० ६३ । ४५ ॥**

**बाहुदा ।** हिमवतः पार्श्वे विद्यमाना नदी । **आ० १९ । ९४ ॥ व० ८२ । ६७ ॥ भी० ९ । १४ ॥** The river Dhabala, now called Dhumela or Burha-Rapti, a feeder of the Rapti in Oudh. The severed arm of Rishi Likhita grew when he bathed in the river: hence the river is called Bahuda.

**बाहुशाली ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः **आ० २०१ । ३ ॥**

**बाह्यकर्णः ।** सर्पः । **आ० ३५ । ९ ॥**

**बाह्यकुण्डः ।** सर्पः । **उ० १०३ । १० ॥**

१ **बाह्लीकः ।** क्षत्रियः । प्रतीपपुत्रः । **२०१ । २१ ॥** अतिरथः । **उ० १६७ । २८ ॥** सः पुत्रिकापुत्रधर्मेण मातामहस्य पुत्रः ।

[ तस्य पुत्रः सोमदत्तः । भा० ९ । २२ ॥ ]

तस्य वधो भीमसेनेन । **द्रो० १५८ । १५ ॥**

२ **बाह्लीकः ।** क्षत्रियः । सो० वं० जनमेजयस्य पुत्रः । **आ० १०१ । ४४ ॥ स० ८ । १६ ॥**

**बाह्लीकाः ।** विपाशाशतद्रोर्नद्योर्मध्ये केकयदेशस्य पूर्वभागे विद्यमानो देशः । **भी० ९ । ४७ ॥** A country between the Beas and the Sutlej, north-east of Kakaya.

तेषां निन्दा । **क० ३७ । १५ ॥ शां० ३३६ । २६—२७ ॥**

**बिन्दुसरः ।** यत्र भगीरथेन गङ्गावतारणार्थं तपस्तप्तं तत्सरः । **स० ३ । ११ ॥ भी० ६ । ४४ ॥** A sacred pool two miles of Gangotri in the Rudra-Himalaya, where Bhagiratha is said to have performed asceticism to bring down the Goddess Ganga from Heaven.

तत्र मयस्य गमनं । **स० ३ । १० ॥**

**बिल्वकः ।** सर्पः । **आ० ३५ । १२ ॥**

**बिल्वजेता ।** सर्पः । **आ० ५७ । ९ ॥**

**बिल्वपत्रः ।** सर्पः । **उ० १०३ । १४ ॥**

+ **बिसस्तैन्योपाख्यानं । अनु० १४१—१४२ ॥**

**बीभत्सुः ।** क्षत्रियः । प्रथममर्जुनशब्दं पश्यत । तन्नामनिर्वचनं । **वि० ४३ । २१ ॥**

+**बुद्धाबुद्धस्वरूपकथनं । शां० ३१३ ॥**

**बुद्बुदकं ।** तीर्थं । **आ० ११० । ३१ ॥**

**बुद्बुदा ।** अप्सराः । **आ० २३६ । २० ॥ स० १० । १३ ॥**

**बुधः ।** चन्द्रपुत्रो ग्रहः । **स० ११ । २९ ॥**

[ तन्माता बृहस्पतिभार्या तारा । भा० ९ । १४ ॥ हरि० १ । २५ ॥ पद्म० ५ । १२ ॥ ब्रह्म० ९ ॥ वायु० ९० ॥ देवीभा० १ । ११ ॥ ]

[ तस्मात्पुरूरवस उत्पत्तिः । भा० ९ । १ ॥ देवीभा० १ । १२ ॥ ]

+ १ **बुद्धिः ।** प्रज्ञा । तद्गुणनिरूपणं । **शां० २६१ । १० ॥**

तस्याः श्रैष्ठ्यं । **उ० ३३ । ५० ॥**

२ **बुद्धिः ।** धर्मस्य पत्नी । दक्षप्रजापतिपुत्री । **आ० ६७ । १५ ॥**

१ **बृन्दारकः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ८ ॥**

२ **बृन्दारकः ।** क्षत्रियः । कौरवपक्षीयः । अभिमन्युना हतः । **द्रो० ४७ । १२ ॥**

**बृहज्ज्योतिः ।** ऋषिः । अङ्गिरसः पुत्रः । **व० २२१ । २ ॥**

**बृहत्कीर्तिः ।** ऋषिः । अङ्गिरसः पुत्रः । **व० २२१ । २ ॥**

**बृहत्केतुः ।** क्षत्रियः । **आ० १ । २६२ ॥**

१ **बृहत्क्षत्रः ।** केकयाधिपतिः क्षत्रियः । **आ० २०१ । २१ ॥ द्रो० ३२ । ६५ ॥** द्रोणेन हतः । **द्रो० १२५ । २२ ॥**

तेन क्षेमधूर्तिवधः । **द्रो० १०७ । ५** ॥

२ **बृहत्क्षत्रः** । क्षत्रियः । निषधदेशाधिपतिः । दुर्योधनपक्षीयः । धृष्टद्युम्नेन हतः । **द्रो० ३२** । ६५ ॥

१ **बृहदश्वः** । इक्ष्वाकुवंश्यः क्षत्रियः । तत्पुत्रः कुवलाश्वः । **व० २०५** । ४ ॥

२ **बृहदश्वः** । ऋषिः । तेन पाण्डवेभ्योऽनेकेतिहासकथनं । **व० ४९–७७** ॥

तेन युधिष्ठिरायाक्षहृदयविद्यादानं । **व० ७७** । ४९ ॥

**बृहदुक्थः** । अग्निविशेषः । **व० २२२** । १८ ॥

**बृहद्गर्भः** । क्षत्रियः । शिबिपुत्रः । तं शिबिः कस्यचिद्ब्राह्मणस्यार्थे प्रमापयित्वा तन्मांसं पक्त्वा तस्मै निवेदितवान् । **व० २०१** । १८ ॥

**बृहद्गुरुः** । क्षत्रियः । **आ० १** । २५८ ॥

**बृहदद्युम्नः** । क्षत्रियः । सोर्वावसुपरावसू याजनार्थं वरयामास । **व० १४०** । १ ॥

**बृहद्ध्वनी** । नदी । **भी० ९** । ३२ ॥

१ **बृहद्बलः** । सू० वं० दुर्योधनपक्षीयः क्षत्रियः । **स० ३१** । १ ॥ **उ० ४** । २२ ॥ **भी० ५६** । ९ ॥ **११६** । ३० ॥ **द्रो० ३७** । ५ ॥ रथसत्तमः । **उ० १६६** । १८ ॥ अभिमन्युना हतः । **द्रो० ४७** । २४ ॥ तत्पुत्रो बृहद्रणः । [भा० ९ । १२ ॥]

२ **बृहद्बलः** । क्षत्रियः । शकुनिभ्राता । **आ० २०१** । ५ ॥

**बृहद्ब्रह्मा** । ऋषिः । अङ्गिरसः पुत्रः । **व० २२१** । २ ॥

१ **बृहद्भानुः** । देवविशेषः । दिवः पुत्रः । **आ० १** । ५५ ॥

२ **बृहद्भानुः** । अग्निविशेषः । **व० २२३** । ८ ॥

**बृहद्भासः** । ऋषिः । अङ्गिरसः पुत्रः । **व० २२१** । २ ॥

**बृहद्भासा** । सोमपुत्री । भानुनामकाग्नेर्भार्या । **व० २२३** । ९ ॥

१ **बृहद्रथः** । क्षत्रियः । सो० वं० उपरिचरवसुपुत्रः । **आ० ६४** । ४३ ॥ तद्भार्ये काशिराजसुते । तत्पुत्रो जरासन्धः । **आ० ६८** । १९ ॥ **२०१** । २१ ॥ **स० ८** । १० ॥ **१७** । १३ ॥

तस्य स्वर्गगमनं । **स० १९** । २० ॥

[ तस्य वंशः । भा० ९ । २२ ॥ ]

२ **बृहद्रथः** । द्वितीयमङ्गशब्दं पश्यत ॥

३ **बृहद्रथः** । क्षत्रियः । कौसल्यः । दुर्योधनपक्षीयः । **उ० १९५** । १० ॥

**बृहद्वती** । नदी । **भी० ९** । ३० ॥

**बृहन्** । अग्निविशेषः । **व० २२२** । ७ ॥

**बृहन्तः** । क्षत्रियः । उलूकदेशाधिपतिः । पाण्डवपक्षीयः । **आ० २०१** । ७ ॥ **स० २८** । ७ ॥ **उ० ४** । १३ ॥ दुःशासनेन हतः । **क० ३** । १२ ॥

तस्य भ्राता क्षेमधूर्तिः । **द्रो० २५** । ४८ ॥

**बृहन्नला** । विराटनगरेऽज्ञातवासं कुर्वतः क्लीबवेषस्यार्जुनस्य नामधेयं । **वि० ३** । ४४ ॥

तया विपरीतं कवचधारणं । **वि० ३८** । ६२ ॥

तया उत्तरकुमारस्य सारथ्यकरणं । **वि० ३८** । ६७ ॥

**बृहन्मनाः** । ऋषिः । अङ्गिरसः पुत्रः । **वि० २२१** । २ ॥

**बृहन्मन्त्रः** । ऋषिः । अङ्गिरसः पुत्रः । **व० २२१** । २ ॥

**बृहस्पतिः** । ऋषिः । अङ्गिरसः पुत्रः । देवगुरुः । **आ० ६७** । २६ ॥ **३०** । ३८ ॥ **स० ११** । २९ ॥ **अश्व० ५** । ४ ॥

तस्य देवैर्गुरुत्वेन वरणं । **व० २२०** । २० ॥

तस्याग्नित्वप्राप्तिः । **व० २२१** । २ ॥

तद्भगिनी ब्रह्मवादिनी । प्रभासस्य भार्या । **आ० ६७** । २६ ॥

[तस्य भार्या तारा । तस्यां बुधश्चन्द्राज्जातः । भा० ९ ।

तस्मै वनं यियासता धृतराष्ट्रेण राजनीत्युपदेशः । **आश्र० ६—८ ॥**

तेन वनस्थधृतराष्ट्रादिदिदृक्षया वने शतयूपाश्रमगमनं । **आ० २४–२५ ॥**

तेन कुन्त्या उदकदानं । **आश्र० ४१ । १८ ॥**

तेन परीक्षिदादीनां राज्येऽभिषेकः । **महा० १ । ७ ॥**

तस्य स्वर्गगमनं । **महा० ३ । २५ ॥**

तस्य स्वर्गे बन्धुजनदिदृक्षोर्देवदूतेन नरकप्रदर्शनं । **स्वर्गा० २ । १४ ॥**

तेन गङ्गायामवगाहनेन मानुषशरीरत्यागः । **स्वर्गा० ३ । ४२ ॥**

१ **युयुत्सुः** । धृतराष्ट्रस्य वैश्यायां जातः पुत्रः । **आ० ६४ । १६२ ॥ २०१ । २ ॥**

तस्य कौरवपक्षात्पाण्डवपक्षप्रवेशः । **भी० ४३ । १०२ ॥**

तेन पाण्डवपक्षे स्थित्वा उलूकेन सह युद्धं । **क० १६ ॥**

२ **युयुत्सुः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य गान्धार्यां जातः पुत्रः । **आ० ६८ । ९३ ॥ १३१ । २ ॥**

**युयुधानः** । सात्यकिः ।

**युवनाश्वः** । क्षत्रियः । सू० वं० आर्द्रस्य पुत्रः । मान्धातुः पिता । **व० १२७ । ६ ॥**

तस्यान्यः पुत्रः श्रावस्तः । **व० २०९ । ३ ॥** [ भा० ९ । ६ ॥ ]

**यूपकेतुः । (यूपध्वजः)** । क्षत्रियः । सो० वं० सोमदत्तपुत्रः । **द्रो० २५ । ५६ ॥** भूरिश्रवश्शब्दं पश्यत ।

+ **योगः** । चित्तवृत्तिनिरोधः । तन्निरूपणं । **शां० ३०६ ॥ ३११ ॥ अनु० २४६ ॥** [ भा० ३ । २८ ॥ ]

**योजनगन्धा** । दाशपुत्री व्यासमाता । सत्यवतीशब्दं पश्यत ।

+ **योधलक्षणं । शां० १०१ ॥**

**योनिद्वारं** । क्षेत्रविशेषः । **व० ८२ ।** ९४ ॥

+ **योषित्** । स्त्रीशब्दं पश्यत ।

**यौधेयः** । क्षत्रियः । सो० वं० युधिष्ठिरस्य पुत्रः । तन्माता देवकी । **आ० ९३ । ७५ ॥**

## र.

**रक्षिता** । अप्सराः । **आ० ६६ । ५० ॥**

+ **रक्षोब्राह्मणसंवादः । अनु० १८७ ॥**

**रघुः** । क्षत्रियः । सू० वं० । **वि० ५३ । १६ ॥** [खट्वाङ्गस्य पौत्रः । तस्य वंशः । भा० ९ । १० ॥]

**रजताश्वः** । शैनेयः । सात्यकिः । **द्रो० २३ । ३ ॥**

**रजिः** । क्षत्रियः । सू० वं० आयोः पुत्रः । तन्माता स्वर्भानवी । तद्भ्रातरः । नहुषः वृद्धशर्मा गयः अनेनाः इति चत्वारः । **आ० ६९ । २८ ॥**

[तस्य चरित्रं । हरि० १ । २८ ॥ भा० ९ । १७ ॥]

**रता** । काचन देवस्त्री । तत्पुत्रः अहः । **आ० ६७ । २० ॥**

१ **रतिः** । कामस्य भार्या । **आ० ६७ । ३३ ॥** [ तस्याः दक्षप्रजापतिस्वेदादुत्पत्तिः । कालिकापु० ३ ॥ शिवपु० सतीखं० ४ ॥ ]

२ **रतिः** । अप्सराः । **अनु० ५०** । ४८ ॥

**रथचित्रा** । नदी । **भी० ९ ।** २६ ॥

+ **रथध्वजादिवर्णनं । उ० ५६ ॥ द्रो० १०५ ॥**

**रथध्वानः** । अग्निविशेषः । **व० २२१ । १८ ॥**

**रथन्तरः** । अग्निविशेषः । **व० २२२ । १९ ॥**

**रथन्तरी** । इलिलस्य भार्या । तत्पुत्राः दुष्यन्तादयः पञ्च । **आ० ९३ । २९ ॥** तेषां नामानि । दुष्यन्तः शूरः भीमः प्रवसुः वसुः इति । **आ० ८८ । १६ ॥**

**रथप्रभुः** । अग्निविशेषः । **व० २२१ । १८ ॥**

**रथवाहनः** । विराटस्य भ्राता । **द्रो० १५९ । ४१ ॥**

**रथसेनः** । क्षत्रियः । पाण्डवपक्षीयः । **द्रो० २३ । ६३ ॥**

तत्र ऋत्विजां नामानि । **स० ३६ । ३२ ॥**
तस्य प्रशंसा । **स० १२ ॥ ७१ ॥ ७८ ॥ ७९ ॥**
तत्सभायां दुर्योधनस्य पतनं । **स० ७४ । ६ ॥**
तत्करणार्थं दुर्योधनस्य यत्नः । **व० २५६ । ६ ॥**
तत्करणं हरिश्चन्द्रेण । **स० १२ । १६ ॥**
**+ राजसूयपर्व । स० ३६—३८ ॥**
**+ रात्रियुद्धारम्भः । द्रो० १५३॥** तत्समाप्तिः । **द्रो० १८७ ॥**
**राधा ।** सूतराजस्याधिरथस्य भार्या । कर्णस्य माता । **आ० ६८ । १४० ॥ व० ३१० । २ ॥**
**राधेयः ।** कर्णः । **आ० २०५ । २६ ॥**
१ **रामः ।** श्रीमन्नारायणावतारभूतः क्षत्रियः । सू० वं० दशरथस्य पुत्रः । तन्माता कौसल्या । **व० २७५ । ८ ॥**
तदवतारकथा । **स० ५० ॥ व० १४९ । ३१ ॥ १५० ॥** [भा० ९ । १०—११ ॥ पद्म० ६ । २६९—२७१ ॥ वायु० ८८ ॥]
तस्योपाख्यानं । **व० २७५ ॥ द्रो० ५९ ॥ शां० २८ । ५१ ॥**
तेन परशुरामतेजोहरणं । **व० ९८ । ७ ॥**
तस्य यौवराज्याभिषेकोद्यमः । **व० २७८ । ७ ॥**
तस्य वनगमनं । **व० २७८ । ३० ॥ २८१ । ११ ॥**
तेन रावणवधः । **स० ५० । २३ ॥ व० २९१ । २९ ॥ द्रो० ५९ । ७ ॥**
तस्य पट्टाभिषेकः । **व० २९२ । ६७ ॥**
तत्कथा हनुमता भीमसेनं प्रति प्रोक्ता । **व० १४९ । ३१ ॥**
२ **रामः ।** परशुरामः ।
३ **रामः ।** बलरामः ।
**रामतीर्थं । व० ८२ । ७२ ॥ ८३ । १६ ॥ श० ५० । ७ ॥**
**रामह्रदः ।** तीर्थं । **व० ८१ । २६ ॥**
Rama-hrada. A sacred tank near Thaneswar, where Parasurama is said to have given oblations to the names of his ancestors after destroying the Kshatriyas.
**+ रामोपाख्यानपर्व । व० २७४—२९३ ॥**
**रावणः ।** विश्रवसः पुत्रो राक्षसाधिपः । तन्माता पुष्पोत्कटा । तस्योत्पत्तिः । **व० २७६ । ७ ॥**
तस्य कार्तवीर्येण बन्धनं । **स० ९६ । ४३ ॥**
तस्य ब्रह्मणो वरप्राप्तिः । **व० २७६ । १५ ॥**
तेन सीतापहारः । **व० २७९ । ४४ ॥**
तस्य वधः श्रीरामेण । **स० ५० । २३ ॥ व० २९१ । २९ ॥ द्रो० ५९ । ७ ॥**
**+ राष्ट्रगुप्तिप्रकारः । शां० ८७ ॥**
**+ रासभीमतङ्गसंवादः । अनु० ३ ॥**
**राहुः ।** सिंहिकापुत्रः । नवग्रहेष्वन्यतमः । **आ० ६६ । ३१ ॥ स० ११ । २९ ॥ भी० १२ । ३९ ॥**
तच्छिरश्छेदः । **आ० १९ । ७ ॥**
**रिष्टः ।** क्षत्रियः । **स० ८ । १५ ॥**
१ **रुक्मरथः ।** मद्रराजस्य शल्यस्य पुत्रः तस्य भ्रातर एकोनशतं । **आ० २०१ । १४ ॥ भी० ४७ । ४८ ॥**
तस्य सर्वभ्रातृसहितस्याभिमन्युना वधः । **द्रो० ४५ । १३ ॥** सहदेवेन वध इति । **क० २ । २९ ॥**
२ **रुक्मरथः ।** द्रोणाचार्यः । **द्रो० १३ । २३॥**
**रुक्माङ्गदः ।** शल्यस्य पुत्रः । **आ० २०१ । १४॥**
**रुक्मिणी ।** विदर्भराजस्य भीष्मकस्य पुत्री । श्रीकृष्णस्य प्रथमा भार्या । तद्भ्राता रुक्मी ।
तां प्रति महालक्ष्म्या स्वनिवासयोग्यस्थलकथनं । **अनु० ३२ ॥**
तस्या अग्निप्रवेशः । **मौ० ८ । ७४ ॥**
[ तस्याः स्वयंवरस्थायाः श्रीकृष्णेन हरणं । भा० १० । ५३ ॥ हरि० २ । ५९ ॥ विष्णु० ५ । २६ ॥]

[ तस्याः श्रीकृष्णेन सह प्रेमकलहः । भा० १० । ६० ॥ ]
[ तस्याः प्रद्युम्ननामकपुत्रोत्पत्तिः । भा० १० । ५५ ॥ हरि० २ । ६० ॥ विष्णु० ५ । २६ ॥ ]
[ तत्पुत्री चारुमती । कृतवर्मसुतस्य बलेर्भार्या । भा० १० । ६१ ॥ विष्णु० ५ । ८ ॥ ]
**रुक्मिण्याश्रमः । व० १३२ । १८॥** उज्जानकस्य समीपे ।
**रुक्मी ।** भीष्मकराजस्य पुत्रः । रुक्मिण्या भ्राता । **आ० ६८ । ६२ ॥ व० २५५ । ११ ॥**
तस्य श्रीकृष्णेन श्मश्रुकेशवपनेन विरूपकरणं । भा० १० । ५४ ॥
तस्य कौरवपाण्डवयुद्धे साहाय्यकरणेच्छया कुरुक्षेत्रं प्रति गमनं । उभाभ्यामपि तत्साहाय्यानङ्गीकरणं च । **उ० १५८ ॥**
[ तस्य वधो बलरामेण । भा० १० । ६१ ॥ हरि० २ । ६१ ॥ ]
[ तत्पुत्री रुक्मवती । तस्याः शुभाङ्गीति नामान्तरं । प्रद्युम्नस्य भार्या । भा० १० । ६१ ॥ हरि० २ । ६१ ॥ ]
**१ रुचिः ।** अप्सराः । **अनु० ५० । ४७ ॥**
**२ रुचिः ।** देवशर्मभार्या । तस्या इन्द्रेण कामनं । **अनु० ७५ । ४१ ॥**
**रुचिपर्वा ।** क्षत्रियः । कौरवपक्षीयः । पार्वतीयेन सुपर्वणा हतः । **द्रो० २६ । ५३ ॥**
**रुद्रः ।** शिवः । शम्भुः । शङ्करः ।
तेन समुद्रमथनसमये विषपानं । **आ० १८ । २५ ॥**
तेन जयद्रथाय श्रीकृष्णमाहात्म्यकथनं । **व० २७३ । ३२ ॥**
तन्माहात्म्यकथनं । **द्रो० २०३ । ५१ ॥ सौ० १७ ॥ अनु० ४५ । ४९ ॥**
तस्य श्मशानवास नीलकण्ठत्व वृषवाहनत्व चन्द्रकलाधारणादीनां कारणकथनं । **अनु० २०७ ॥**
तत्कृतो दक्षाध्वरध्वंसः । **अनु० २६५ ॥**
तस्य तृतीयनेत्रोत्पत्तिः । **अनु० २०५ । ३५ ॥**
तस्य सनत्कुमारेण सह तत्वसृष्टिविषये संवादः । **अनु० १६५ ॥**
तेन पार्वतीं प्रति वर्णाश्रमधर्मकथनं । **अनु० २०८॥**
तस्य पार्वतीसकाशादनेकविधस्त्रीधर्मश्रवणं । **अनु० २४९—२५० ॥**
तन्नाम्नां निर्वचनं । **शां० ३५२ । ४५ ॥**
तस्य श्रीनारायणेन सह युद्धं । **शां० ३५२ । ४२ ॥**
तस्य ब्रह्मणो ललाटादुत्पत्तिः । **शां० ३६० । ११ ॥**
तद्धनुर्ज्याच्छेदः । **सौ० १८ । १९ ॥**
तेन श्रीकृष्णाय वरदानं । **अनु० ४६ ॥**
तत्स्तुतिः । श्रीकृष्णार्जुनकृता । **द्रो० ८० । ५५ ॥**
[ तन्निन्दा दक्षप्रजापतिकृता । भा० ४ । २ ॥ ]
तत्स्तुतिः । दक्षप्रजापतिकृता । **शां० २९० । ७३ ॥**
तन्महिमा । **सौ० १७ ॥ अनु० ४५ ॥**
तत्स्तुतिः । तण्डिकृता । **अनु० ४७ ॥**
तत्स्तुतिः । अश्वत्थामकृता । **सौ० ७ । २ ॥**
तत्स्तुतिः । मरुत्तराजकृता । **अश्व० ८ । १४ ॥**
तल्लिङ्गार्चनमहिमा । **अनु० २४७ ॥**
तस्य पार्वत्या सह रतियोगः । **अनु० १३० । ६१ ॥**
तत्सहस्रनामस्तोत्रं । **अनु० ४८ । ३१–१५३ ॥** [ लिङ्गपु० ६५ ॥ ९८ ॥ शिवपु० कोटिरुद्रसं० ३५ ॥ ]
**रुद्रकोटितीर्थं । व० ८० । ११८ ॥ ८१ । ७७ ॥**
**रुद्रसेनः ।** क्षत्रियः । पाण्डवपक्षीयः । **द्रो० १५९ । ३८ ॥**
**रुद्राः ।** एकादश । एकादशरुद्रशब्दं पश्यत ।
**रुद्राणी ।** पार्वती । **स० ११ । ४१**
**रुद्रावर्तं ।** तीर्थं । **व० ८२ । ३७ ॥**
**रुमण्वान् ।** जमदग्नेर्ज्येष्ठः पुत्रः । तद्भ्रातरः सुषेणः

वसुः विश्वावसुः परशुरामश्च । **व० ११७ । ११ ॥**

**रुरुः ।** ऋषिः । प्रमतेः पुत्रः । तन्माता घृताची अप्सराः । तद्भार्या प्रमद्वरा । तत्पुत्रः शुनकः । **आ० ८ । २ ॥ ५८ । २१ ॥ अनु० ८ । ६५ ॥**

तस्य विवाहः । **आ० ९ । २४ ॥**

तस्य डुण्डुभेन संवादः । **आ० १०–१२ ॥**

**रुशङ्कुः ।** उशङ्कुशब्दं पश्यत ।

**रुषद्रुः ।** क्षत्रियः । **स० ८ । १३ ॥**

**रूपवाहिका: ।** देशः । **भी० ९ । ४३ ॥**

१ **रेणुकः ।** अमृतरक्षको देवः । **आ० ३२ । १८ ॥**

२ **रेणुकः ।** कश्चिद्द्विजः । **अनु० १९५ । ४ ॥**

**रेणुका ।** जमदग्निभार्या । प्रसेनजिन्नामकनृपसुता । **व० ११७ । २ ॥** पश्चादुत्पन्ना अयोनिजा । **अनु० ५३ । २७ ॥** तस्मात्प्रसेनजित् तस्याः पोषकः पितेति भाति ।

[इयमिक्ष्वाकुवंश्यस्य रेणोः पुत्री । भा० ९ । १५ ॥ हरि० १ । २७ ॥ ]

[ इयं सुवेणोः पुत्री । अस्याः कामलीति नामान्तरं । वायु० ९१ ॥ ]

तस्याः स्त्रीभिः सह जलक्रीडां कुर्वतश्चित्ररथनामकगन्धर्वराजस्य दर्शनेन कामविकारोत्पत्तिः । **व० ११७ । ७ ॥** [ भा० ९ । १६ ॥ ]

तच्छिरश्छेदः । तत्पातिव्रत्यभङ्गरुष्टजमदग्निप्रेरितेन परशुरामेण । **व० ११७ । १५ ॥** [ भा० ९ । १६ ॥ ]

तस्याः शिरःपादस्य सूर्यातपेन संतापे भृगुणा छत्रोपानन्निर्माणं । **अनु० १४४ ॥**

**रेणुकातीर्थं । व० ८० । ८३ ॥** In the Punjab, about 16 miles north of Nahan.

**रेणुमती । ( करेणुमती ) ।** नकुलभार्या शिशुपालपुत्री । तत्पुत्रो निरमित्रः । **आ० ९३ । ७८ ॥**

**रेवती ।** स्कन्दग्रहः । **व० २३० । २९ ॥**

**रेवतीसुतः ।** स्कन्दः । **व० २३३ । ६ ॥**

**रैभ्यः ।** विश्वामित्रपुत्रः । **शां० ४८ । ५७ ॥ स० ४ । २२ ॥**

स भरद्वाजस्य सखा । तत्पुत्रौ अर्वावसुपरावसू । **व० १३७ ॥ १२–१३ ॥**

तदाश्रमगमनं युधिष्ठिरस्य । **व० १३७ । ९ ॥**

तस्य हननं तत्पुत्रेण परावसुना मृगभ्रान्त्या । **व० १४० । ६ ॥**

तस्य पुनरुज्जीवनं । **व० १४० । २०–२३ ॥**

१ **रैवतः ।** स्कन्दग्रहः । **व० २३० । २९ ॥**

२ **रैवतः ।** द्वारकासमीपस्थः पर्वतः । **आ० २३९ । १२ ॥**

तत्र श्रीकृष्णस्य गमनं । **अश्व० ५९ । ४ ॥**

तत्रार्जुनस्य गमनं । **आ० २३८ । २ ॥**

**रैवतकः ।** पर्वतः । **भी० ११ । १८ ॥** Mount Girnaur near Junagar in Guzerat, north of Prabhasa–Somnath.

+ **रोगापादकानि कर्माणि । अनु० २२०–२२१ ॥**

१ **रोचमानः ।** उरगापुर्या अधिपतिः । अर्जुनेन राजसूयदिग्विजये पराजितः । **स० २८ । १९ ॥**

२ **रोचमानः ।** अश्वमेधपुरीश्वरः । क्षत्रियः । चैद्यः । **आ० ६८ । १८ ॥ २०१ । १० ॥** भीमसेनेन राजसूयदिग्विजये पराजितः । **स० ३० । ८ ॥** पाण्डवपक्षीयः । **उ० १७२ । १ ॥** कर्णेन हतः । **क० ५१ । ५० ॥** तत्पुत्रो हेमवर्णः । **द्रो० २३ । ६८ ॥**

**रोमपादः ।** लोमपादशब्दं पश्यत ।

**रोमहर्षणः ।** पौराणिकः सूतः । तत्पुत्र उग्रश्रवाः । **आ० १ । ५ ॥ स० ४ । १८ ॥**

[ तस्य वधो बलरामेण । भा० १० । ७८ ॥ ]

**रोहिणः ।** रौहिणशब्दं पश्यत ।

१ **रोहिणी** । सुरभ्याः पुत्री । तदपत्यानि गावः । **आ० ६७ ।** ६७–६८ ॥

२ **रोहिणी** । दक्षप्रजापतिपुत्री नक्षत्ररूपिणी चन्द्रभार्या । **शा० ३६ ।** ५ ॥

३ **रोहिणी** । वसुदेवभार्या । तत्पुत्रो बलरामः । **मौ० ८ ।** १८ ॥

**रोही** । नदी । **भी० ९ ।** ३० ॥ In Afganistan. It was also called Roha.

**रोहीतकः** । देशः । **स० ३५ ।** ४ ॥ Rohtak, forty-two miles north west of Delhi.

तद्विजयः कर्णेन । **व० २५५ ।** २० ॥

**रौद्रकर्मा** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** १०४ ॥ **१३१ ।** १२ ॥ भीमसेनेन हतः । **द्रो० १२७ ।** ४४ ॥

**रौद्राश्वः** । क्षत्रियः । सो० वं० पूरोः पुत्रः । तन्माता पौष्टी । तद्भ्रातरौ प्रवीरः ईश्वरश्च । तत्पुत्रा ऋचेयुप्रभृतयो दश मिश्रकेशीनाम्न्याम-प्सरसि जाताः । **आ० ८८ ।** ४—११ ॥

**रौमहर्षणिः** । उग्रश्रवाः । **आ० १ ।** ११ ॥

**रौरवः** । नरकः । **अनु० २०३ ।** ३ ॥

**रौहिणः** । देववटवृक्षः । **आ० २९ ।** ४५ ॥
तस्य परिमाणं । **आ० ३० ।** २३ ॥
तच्छाखाभङ्गो गरुडेन । **आ० २९ ।** ४८ ॥

## ल.

१ **लक्षणा** । दुष्यन्तस्य प्रथमा भार्या । **आ० ८८ ।** १८ ॥ तस्या लाक्षीति नामान्तरं । तत्पुत्रो जनमेजयः । **आ० ६३ ।** ३० ॥

२ **लक्षणा** । दुर्योधनपुत्री । लक्ष्मणाशब्दं पश्यत ।

३ **लक्षणा** । अप्सराः । **आ० १३२ ।** ४४ ॥

४ **लक्षणा** । मद्राधिपस्य पुत्री श्रीकृष्णमहिषी । **स० ५७ ।** २८ ॥

१ **लक्ष्मणः** । क्षत्रियः । सू० वं० दशरथपुत्रः । तन्माता सुमित्रा । तद्भ्राता शत्रुघ्नः । **स० ८ ।** १८ ॥ **५० ।** १० ॥ **व० २७५ ।** ८ ॥
तेनेन्द्रजिद्वधः । **व० २९० ।** २४ ॥

२ **लक्ष्मणः** । क्षत्रियः सो० वं० धार्तराष्ट्रस्य दुर्योधनस्य पुत्रः रथसत्तमः । **उ० १६६ ।** १४ ॥
तस्याभिमन्युना सह युद्धं । **भी० ५५ ।** ८ ॥
तस्याभिमन्युना पराजयः । **भी० ७३ ।** ३२–३८ ॥
तस्य वधोऽभिमन्युना । **द्रो० ४६ ।** १८ ॥
तच्छववर्णनं । **स्त्री० २० ।** ३४ ॥

१ **लक्ष्मीः** । महालक्ष्मीः ।

२ **लक्ष्मीः** । दक्षप्रजापतिपुत्री । धर्मप्रजापतिभार्या । **आ० ६७ ।** १४ ॥

**लक्ष्यवेधः** । अर्जुनेन । द्रोणाचार्यकृतास्त्रविद्याप-रीक्षायां । **आ० १४३ ।** ९ ॥ द्रौपदीस्वयंवरे तेनैव । **आ० २०३ ।** २५ ॥ [ श्रीकृष्णेन । भा० १० । ८३ ॥ ]

**लङ्का** । राक्षसराजधानी । **व० २८१ ।** ४२ ॥ तत्र युधिष्ठिरराजसूयार्थं करादानाय घटोत्कचस्य गमनं । **स० ३४** ॥ Ceylon.

**लज्जा** । दक्षप्रजापतिपुत्री धर्मप्रजापतिभार्या । **आ० ६७ ।** १५ ॥ तस्या ह्रीरिति नामान्तरं ।

**लता** । अप्सराः । शापेन ग्राहत्वं प्राप्ता । अर्जुनेन मोचिता । **आ० २३६ ।** २० ॥

**लपिता** । मन्दपालस्योपभार्या शार्ङ्गी । जरितायाः सपत्नी । **आ० २५५ ।** १७ ॥

**लपेटिका** । तीर्थं । **व० ८३ ।** १५ ॥

**लम्बकाः** । ( **लम्पाकाः** । ) देशः । **द्रो० १२१ ।** ४६ ॥ Lamghan on the northern bank of the Kabul river.

**लवणासुरः** । मधुदानवपुत्रः । **आ० २७ ।** २२॥
तस्य वधः शत्रुघ्नेन । **स० ५० ।** २७ ॥

**लाक्षी** । दुष्यन्तभार्या । तस्या लक्षणेति नामान्तरं । तत्पुत्रो जनमेजयः । **आ० ६३ ।** ३० ॥ **८८ ।** १८ ॥

**लाङ्गली** । नदी । **स० ९** । २६ ॥

**लिखितः** । शङ्खस्य भ्राता । ऋषिः । **स० ७** । ११ ॥ **शां० २३** । १८ ॥

**+ लिङ्गार्चनफलं** । **अनु० २४७** ॥

**लीलाढ्यः** । ऋषिः । विश्वामित्रपुत्रः । **अनु० ७** । ५३ ॥

**लुब्धकः** । अर्जुनकनामा किरातः । तस्य गौतमी-मृत्युसर्पैः संवादः । **अनु० १** । २२ ॥ **३६** । ६३ ॥

**लेवलिका** । नदी । **व० ८२** । १६३ ॥

**लोकोद्धारं** । तीर्थं । **व० ८१** । ४५ ॥

**लोपामुद्रा** । विदर्भराजदुहिता । अगस्त्यमहर्षेः । तस्या उत्पत्तिः । **व० ९४** । २४ ॥

तस्याः सत्यवतीति नामान्तरं । **व० ९४** । २९॥

तस्या विवाहः । **व० ९५** । ७ ॥

तस्यां दृढस्युनामकपुत्रोत्पत्तिः । **व० ९७** । ३१ ॥

**+ लोभः** । दुष्टो गुणः । तन्निन्दा । **शां० १६१** ॥

**+ लोभादिजयोपायः** । **शां० १५६** ॥

**लोमपादः** । सो० वं० अनोः कुलोत्पन्नस्याङ्गराजस्य वंशीयः । दशरथस्य सखा । **व० १११** । १९ ॥

[ तस्य दशरथ इति नामान्तरं । हरि० १ । ३१ ॥ २ । ९३ ॥ ]

तस्य राज्ये अनावृष्टिः । **व० १११** । ७ ॥

तस्य पुत्री शान्ता । ऋश्यशृङ्गमहर्षेर्भार्या । **व० ११४** । ११ ॥ अधिकं शान्ताशब्दे द्रष्टव्यं ।

तस्य राज्ये ऋश्यशृङ्गमहर्षेरागमनेन वृष्टिप्रादुर्भावः । **व० ११४** । १० ॥

**लोमशः** । ऋषिः । तस्य युधिष्ठिरसमीपे वने आगमनं । **व० ४५** ॥ ८९ । १ ॥

तेन धर्मरहस्यकथनं । **अनु० १९२** ॥

**+ लोमशतीर्थयात्रा** । **व० ९१—१५७** ॥

**लोमहर्षणः** । रोमहर्षणशब्दं पश्यत ।

१ **लोहिताक्षः** । सूतः । जनमेजयसर्पसत्रे स्थपतिः । **आ० ५१** । १५ ॥ ५६ । ६ ॥ ५८ । १२॥

२ **लोहिताक्षः** । स्कन्दपार्षदः । **श० ४६** । २४॥

**लोहिताश्वः** । ( **रोहिताश्वः** ) । हरिश्चन्द्रपुत्रः । **व० ७७** । ३१ ॥

**लौहितारणिः** । नदी । **भी० ९** । १८ ॥

१ **लौहित्यः** । समुद्रः । **आ० २** । ३६७ ॥ **महा० १** । ३४ ॥

२ **लौहित्यः** । नदः । **स० ९** । २६ ॥ A portion of the river Brahmaputra north of Pragjyotishapura.

**लौहित्यतीर्थं** । **व० ८३** । २ ॥

**लौहित्या** । नदी । **भी० ९** । ३५ ॥

## व.

**वंशगुल्मतीर्थं** । **व० ८३** । ९ ॥ A sacred Reservoir (kund) on the table land of Amarakantaka which is situated, about four miles and a half from the source or the first fall of the Nerbuda.

**वंशमूलतीर्थं** । **व० ८१** । ४१ ॥

**वंशा** । प्राधायाः पुत्री । **आ० ६६** । ४५ ॥

**वक्रः** । करूशदेशाधिपतिर्दन्तवक्रः । **स० १४** । १२ ॥

**वक्रद्वारः** । पर्वतः । **शां० ३२५** । १८४ ॥

**वक्षोग्रीवः** । ऋषिः । विश्वामित्रऋषिपुत्रः । **अनु० ७** । ५३ ॥

**वङ्गः** । क्षत्रियः । बलिराजपुत्रः । तन्मातरि सुदेष्णायां दीर्घतमस ऋषेर्जातः । **आ० ११३** । ५३ ॥

**वङ्गाः** । देशः । **भी० ९** । ४६ ॥ The Province of Bengal.

१ **वज्रः** । क्षत्रियः । श्रीकृष्णस्य पौत्रः । **मौ० ८** । ३९ ॥

तस्य राज्याभिषेकः । **मौ० ८** । ७३ ॥

२ **वज्रः** । ऋषिः । विश्वामित्रस्य पुत्रः । **अनु० ७** । ५२ ॥

**वज्रविष्कम्भः** । गरुडपुत्रः । **उ० १०१** ।१०॥

**वज्रव्यूहः** । पाण्डवानां । **भी० १९** । ३५ ॥ ८१ । २३ ॥

**वटेश्वरपुरं** । **व० ८२** । १२९ ॥

**वत्सः** । प्रतर्दनस्य पुत्रः । परशुरामेण हतेषु क्षत्रियेषु गोवत्सैः संवर्धितत्वादुर्वरितः । **शां० ४८** । ८६ ॥ [ दिवोदासस्य पौत्रः । तस्य भ्राता गर्गः । वायु० ९२ ॥ ]

**वत्सनाभः** । महर्षिः । तच्चरित्रं । **अनु० ३३** ॥

**वत्सराजः** । **आ० २०१** । २२ ॥

**वदान्यः** । ऋषिः । तद्दुहिता सुप्रभा अष्टावक्रऋषेर्भार्या । **अनु० ५०** । ११ ॥

+ **वधप्रतिनिधित्वमधिक्षेपस्य** । **क० ७२** । ८१—८६ ॥

**वधूसरा** । नदी । रुदन्त्या भृगुभार्यायाः पुलोमाया अश्रुबिन्दुभ्य उत्पन्ना । **आ० ६** । ८ ॥

**वध्राः** । देशः । **भी० ९** । ५५ ॥

१ **वनायुः** । ( **वनायवः** ) । देशः । **भी० ९** । ५६ ॥ Arabia.

२ **वनायुः** । दनोः पुत्रः । **आ० ६६** । ३० ॥

३ **वनायुः** । क्षत्रियः । पुरूरवसः पुत्रः । **आ० ६९** । २८ ॥

**वनेयुः** । क्षत्रियः । रौद्राश्वपुत्रः । **आ० ८८** । ९ ॥

**वन्दना** । नदी । **भी० ९** । १८ ॥

**वन्दी** । वरुणस्य पुत्रः । **व० १३६** । २४ ॥

**वपुष्टमा** । पाण्डवप्रपौत्रस्य जनमेजयस्य भार्या । काशिराजस्य सुवर्णवर्मणः पुत्री । **आ० ४४** । ८ ॥

**वयस्यः** । अङ्गिरसः पुत्रः । ऋषिः । **अनु० १३२** । ४२ ॥

**वरदानतीर्थं** । यत्र दुर्वाससा विष्णवे वरो दत्तः । **व० ८०** । ६५ ॥ Baroda where Rishi Durvasa gave a boon to Vishnu.

**वरा** । नदी । **भी० ९** । २६ ॥

**वराङ्गी** । त्रिशङ्कोः पुत्री शय्यातेर्भार्या । तत्पुत्रोऽहंयातिः । **आ० ६३** । १३ ॥

**वराणसी** । नदी । **भी० ९** । ३१ ॥

१ **वराहः** । ऋषिः । **स० ४** । २३ ॥

२ **वराहः** । भगवतो नारायणस्य मत्स्यादिषु तृतीयोऽवतारः । **स० ४५** । ४ ॥ **व० १४४** । २९ ॥ **२७३** । ५३ ॥ **शां० २०८** । २१ ॥ [ भा० ३ । १३ ॥ वायु० ६ ॥ पद्म० ६ । २६४ ॥ लिङ्गपु० ९४ ॥ ]

तेनात्मपिण्डदानं । **शां० ३५५** । १४ ॥

**वराहकः** । सर्पः । **आ० ५७** । १८ ॥

**वराहकर्णः** । यक्षः । **स० १०** । १७ ॥

**वराहतीर्थं** । पुण्यतीर्थं । **व० ८१** । १८ ॥ तस्य कोकामुखमिति नामान्तरं ।

**वराहध्वजः** । जयद्रथः । **द्रो० १०५** । २० ॥

१ **वरुणः** । देवगन्धर्वः । **आ० ६६** । ४२ ॥

२ **वरुणः** । द्वादशादित्येष्वन्यतमः । **आ० ६६** । १५ ॥

३ **वरुणः** । पश्चिमदिगीश्वरः । **स० ९** । १ ॥

तस्य भार्या ऋद्धिः । **स० १०** । ६ ॥

तस्यान्या भार्या वारुणी । तस्या गौरीति नामान्तरं । **स० ९** । ६ ॥

तस्यान्या भार्या शुक्राचार्यपुत्री ज्येष्ठा देवी । तत्पुत्राः बलः मद्याभिमानिनी सुरा अधर्मश्च । **आ० ६७** । ५२—५३ ॥

तस्यान्यः पुत्रः पुष्करः । **उ० ९८** । १२ ॥

तस्यान्यः पुत्रो बन्दी । यो जनकराजसभायां कहोलादीन्ब्राह्मणान्वादे विजितवान् । **व० १३६** । २४ ॥

तत्सभावर्णनं नारदेन युधिष्ठिरं प्रति । **स० ९** ॥

तल्लोकवर्णनं । **उ० ९८** । १०—२५ ॥

तस्यार्जुनसमीपे आगमनमस्त्रदानं च । **व० ४१** । ५ ॥ **२९** ॥

तेन उचथ्यभार्याया भद्राया अपहारः । **अनु० २५९ । १३ ॥**
तस्य जलाधिपत्येऽभिषेकः । **श० ४८ । ११ ॥**
तेन सीताया निर्दुष्टत्वकथनं । **व० २९२ । २९ ॥**
**वर्गा** । शापेन ग्राहत्वं प्राप्ताऽप्सराः । **आ० २३६ । १५ ॥ स० १० । १३ ॥**
**वर्चाः** । सोमस्य पुत्रः । **आ० ६७ । २२ ॥**
तस्य भूमावभिमन्युत्वेनावतारः । **आ० ६८ । ११२ ॥**
**वर्णः** । ब्राह्मणक्षत्रियवैश्यशूद्रा इति चतुर्विधः चातुर्वर्ण्यशब्दं पश्यत ।
**वर्धमानपुरं** । प्रतिष्ठानपुरं । **आ० ९६ । ६८ ॥**
**वललः** । विराटनगरे अज्ञातवासे सूदवेषधारिणो भीमसेनस्य नाम । **वि० ३ । ८ ॥**
**वल्लवाः** । देशः । बल्लवशब्दं पश्यत ।
**वसातयः** । बाह्लीकदेशसमीपस्थो देशः । **स० ७८ । ५ ॥**
**वसिष्ठः । ( वशिष्ठः )** । ब्रह्मणो मानसः पुत्रः । तद्भार्या अरुन्धती । तत्पुत्रः शक्तिः । **आ० १८९ । १९ ॥ १९० । ५ ॥ स० ११ । १९ ॥**
[ तस्योत्पत्तिः । उर्वशीपुत्रत्वं मित्रावरुणपुत्रत्वं च । भा० ६ । १८ ॥ ९ । १३ ॥ ]
तस्य वरुणपुत्रत्वं । **आ० १०६ । ५ ॥**
तन्नामनिर्वचनं । **आ० १९० । ६ ॥ अनु० १४२ । २७ ॥**
तस्योपाख्यानं । **आ० १९०—१९८ ॥**
तदाश्रमदाहः कार्तवीर्यार्जुनेन । तेन तस्मै शापदानं च । **शां० ४८ । ४० ॥ ४२ ॥**
तस्य विश्वामित्रेण सह वैरं । **आ० १९१ ॥**
तेनेक्ष्वाकूणां पौरोहित्यकरणं । **आ० १९० । १२ ॥**
तस्य व्याघ्रयोन्यां पुत्रोत्पत्तिः । **अनु० ५३ । ३० ॥**
तस्य करालजनकेन संवादः । **शां० ३८–३१३ ॥**
तेनेन्द्रस्य रक्षणं । **अनु० २६० । २५ ॥**
तस्य परशुरामेण संवादः । **अनु० १३० । ३८ ॥**
तस्य सौदासेन कल्माषपादेन गोमहिमविषये संवादः । **अनु० ११३ ॥**
**वसिष्ठपर्वतः** । तत्रार्जुनस्य तीर्थयात्रार्थं गमनं । **आ० २३५ । २ ॥**
**वसिष्ठापवाहतीर्थं** । **श० ४३ । १ ॥**
१ **वसुः** । जमदग्निपुत्रः । ऋषिः । **व० ११७ । ११ ॥**
२ **वसुः** । उपरिचरवसुः । **आ० ६४ । २ ॥**
३ **वसुः** । अष्टवसुशब्दं पश्यत ।
**वसुतेयाः** । जनाः । **स० ७८ । ९० ॥**
**वसुदा । ( वसुधा । सुभा )** । अङ्गिरसो भार्या । **व० २२१ । १ ॥**
१ **वसुदानः** । क्षत्रियः । पाञ्चाल्यः । **स० ४ । ३३ ॥** अतिरथः । **उ० १७१ । २७ ॥** द्रोणेन हतः । **द्रो० २१ । ५५ ॥**
२ **वसुदानः** । क्षत्रियः । काश्यः । **द्रो० १९१ । २९ ॥ क० ३ । ३७ ॥**
३ **वसुदानः** । क्षत्रियः । पांसुदेशाधिपः । **स० ७८ । १०६ ॥**
**वसुदेवः** । श्रीकृष्णस्य पिता कुन्त्या भ्राता । शूरराजस्य यादवस्य पुत्रः । **स० २३ । ३ ॥** [ भा० १० । १ ॥ ]
[ तेन यज्ञकरणं । भा० १० । ८४ ॥ ]
[ तस्य भार्याः पुत्राश्च । भा० ९ । २४ ॥ हरि० १ । ३५ ॥ ]
[ तस्य कथा । वायु० ९६ ॥ ब्रह्म० १४ ॥ ]
तस्य सपत्नीकस्य शरीरत्यागः । **मौ० ८ । १५–२४ ॥**
१ **वसुमनाः** । क्षत्रियः । हर्यश्वस्य पुत्रः । अस्य वसुमानिति नामान्तरं । तन्माता ययातिपुत्री माधवी । **व० २०१ । २ ॥ स० ८ । १३ ॥ वि० ५३ । १३ ॥ उ० ११६ । २३ ॥**

तस्य ययातिना सह संवादः । **आ० ८७ । ५ ॥**
तस्य वामदेवेन संवादः । **शां० ९२—९४ ॥**

२ **वसुमनाः ।** कौसल्यः क्षत्रियः । तस्मै बृहस्पतिना राजगुणवर्णनं । **शां० ६७ ॥**

१ **वसुमान् ।** प्रथमवसुमनश्शब्दं पश्यत ।

२ **वसुमान् ।** क्षत्रियः । **स० ४ । ३८ ॥ शां० ३१४ । २ ॥**

३ **वसुमान् ।** अग्निविशेषः । **व० २२३ । २७ ॥**

**वसुमित्रः ।** क्षत्रियः । **आ० ६८ । ४१ ॥**

**वसुषेणः ।** कर्णः । **आ० ६८ । १४७ ॥ १२० । ३६ ॥ व० ३१० । १५ ॥** शेषं कर्णशब्दे पश्यत ।

**वसुहोमः ।** अङ्गराजः । तस्य मान्धात्रा संवादः । **शां० १२२ । १ ॥**

**वसोर्धारा ।** तीर्थं । **व० ८० । ७७ ॥** The place where Alakananda has got its source, about 4 miles north of Badarinath.

**वस्त्रा ।** नदी । **भी० ९ । २५ ॥**

+ **वस्त्रापहारः ।** द्रौपद्याः दुश्शासनेन । **स० ९० । ४० ॥** नलराजस्य पक्षिभिः । **व० ५८ । १५ ॥** उत्तरकुमारेण कौरवाणां । **वि० ६७ । २१ ॥**

**वस्वौकसारा ।** नदी । **भी० ६ । ४९ ॥**

**वहीनरः ।** क्षत्रियः । **स० ८ । १५ ॥**

**वागिन्द्रः ।** प्रकाशनाम्न ऋषेः पुत्रः । तत्पुत्रः प्रमितिः । **अनु० ८ । ६४ ॥**

**वाटधानाः ।** देशः । **भी० ९ । ४७ ॥**

**वाणी ।** नदी । **भी० ९ । २० ॥**

**वातघ्नः ।** विश्वामित्रस्य पुत्रः । ऋषिः । **अनु० ७ । ५४ ॥**

**वातपतिः ।** क्षत्रियः । **आ० २०१ । २० ॥**

**वातवेगः ।** गरुडस्य पुत्रः । **उ १०१ । १० ॥**

**वातस्कन्धः ।** देवयोनिविशेषः । **स० ७ । १४ ॥**

**वातापिः ।** असुरः । **आ० ६६ । २९ ॥** इल्वलस्य यवीयान्भ्राता । **व० ९४ । ४ ॥**
तेन मेषरूपग्रहणेनानेकेषां ब्राह्मणानां हननं । मेषमांसरूपेणागस्त्यकुक्षिं प्रविष्टस्य तस्य तेन जीर्णीकरणं च । **व० ९४ ॥ ९६ ॥ ९७ ॥** [ रा० ३ । ११ ॥ ]

**वात्स्यः ।** ऋषिः । सर्पसत्रे सदस्यः । **आ० ५३ । ९ ॥ शां० ४६ । ६ ॥**

**वात्स्याः ।** गङ्गायमुनयोर्मध्ये कानपूरनगरस्य दक्षिणतः कौशाम्ब्या उत्तरतश्च विद्यमानो देशः । **द्रो० ११ । १५ ॥** A country situated to the west of Allahabad. It was the kingdom of Udayana; its capital was Kousambi.

**वादुलिः ।** ऋषिः । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५३ ॥**

**वाध्र्यश्वः ।** क्षत्रियः । **स० ८ । १२ ॥**

**वानप्रस्थः ।** तृतीय आश्रमः । तद्धर्माः । **आ० ८५ । ४ ॥ अश्व० ४६ । ९ ॥ शां० ९ ॥ १८९ ॥ २५० ॥ आश्र० २० ॥**

+ **वानरः ।** शाखामृगः । तदुत्पत्तिः । **आ० ६७ । ६४ ॥**

**वानरध्वजः ।** अर्जुनः । **द्रो० १०५ । ८ ॥**

+ **वानरसृगालसंवादः ।** **अनु० ३० ॥**

१ **वामदेवः ।** क्षत्रियः । मोदापुराधिपतिः । अर्जुनेन राजसूयदिग्विजये पराजितः । **स० २८ । ११ ॥**

२ **वामदेवः ।** ऋषिः । **स० ७ । १७ ॥**
तस्य शिष्य आत्रेयः । **व० १९५ । ४६ ॥**
तेन संवर्धितयोरश्वयोः शलेनापहारः । **व० १९५ । ४६ ॥**
तस्य वसुमनसा संवादः । **शां० ९२—९४ ॥**

**वामदेवी ।** ऋचस्य भार्या । **आ० ६३ । २४ ॥**

१ **वामनः** । सर्पः । **आ० ३५** । ६ ॥ **उ० १०३** । १० ॥

२ **वामनः** । दिग्गजः । उ० ९९ । ८ ॥ **भी० १२** । ३३ ॥

३ **वामनः** । गरुडपुत्रः । **उ० १०१** । १० ॥

४ **वामनः** । श्रीमतो नाराणस्यावतारः । **स० ४७** । ८ ॥ **व० २७३** । ६४ ॥ [भा० ८ । १३ ॥ १८ ॥ पद्म० ४ । १ ॥ ६ । २६७ ॥]

**वामनकं** । तीर्थं । **व० ८१** । १०३ ॥

**वामनकः** । पर्वतः । **भी० १२** । १८ ॥

**वायुः** । भूतवायुः तदभिमानिनी देवता च । तेन सीताया निर्दोषत्वकथनं । **व० २९२** । २७ ॥

तद्गुणनिरूपणं । **शा० २६१** । ६ ॥

तेन धर्मोपदेशः । **अनु० १९१** ॥

तस्मात्कुन्त्यां भीमोत्पत्तिः । **आ० ६८** । १११ ॥ **१२९** । ५२ ॥

तस्य सर्वदेवोत्तमत्वं । **आ० १२९** । ४६ ॥

**वायुभक्षः** । ऋषिः । **स० ४** । १९ ॥

**वायुवेगः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० २०१** । २ ॥

**वारणावतं** । हास्तिनपुरसमीपस्थं पत्तनं । तत्र पाण्डवानां गमनं । **आ० १५५** ॥ **१५८** ॥ पाण्डवप्रार्थिते ग्रामपञ्चकेऽन्यतमं । **उ० ३१** । १९॥ Barnava, nineteen miles north-west of Mirat, where an attempt was made by Duryodhana to burn the Pandavas.

तत्र पाण्डवानां दिधक्षया दुर्योधनेन जतुगृहनिर्माणं । **आ० १५६** । २२ ॥

**वारवास्याः** । देशः । **भी० ९** । ४५ ॥

**वाराणसी** । काशीक्षेत्रं । **व० ८२** । ७७ ॥

**वाराहः** । मगधदेशस्थः पर्वतः । **स० २१** । २॥

**वारिसेनः** । क्षत्रियः । **स० ८** । २० ॥

**वारुणतीर्थं** । **व० ८१** । १६४ ॥

१ **वारुणिः** । विनतायाः पुत्रः । **आ० ६६** । ४० ॥

२ **वारुणिः** । वरुणपुत्रोऽगस्त्यः । **व० १०४**।१॥

३ **वारुणिः** । वरुणपुत्रो वसिष्ठः । **आ० १०६** । ९ ॥

**वारुणी** । वरुणभार्या । तस्या गौरीति नामान्तरं । **स० ९** । ६ ॥

**वार्क्षी** । दशप्रचेतसां भार्या । **आ० २११** । १५ ॥ अस्याः मारिषा इति नामान्तरं ।

**वार्तः** । क्षत्रियः । **स० ८** । १० ॥

**वार्धक्षेमिः** । क्षत्रियः । वृद्धक्षेमपुत्रः । त्रैगर्तराजः सुशर्मा । **आ० २०१** । ९ ॥ **द्रो० २१** । ६० ॥

१ **वार्ष्णेयः** । श्रीकृष्णः । वृष्णिवंशोत्पन्नः सात्यक्यादिश्च ।

२ **वार्ष्णेयः** । नलस्य सारथिः । **व० ५७** । २२ ॥

+ **वार्ष्णेयाध्यात्मं । शां० २१२—२१९** ॥

**वार्ष्णेयी** । कुन्ती । **आ० १२०** । ३२ ॥

**वालखिल्याः** । ऋषयः । **स० ११** । २० ॥

[तेषां पिता क्रतुर्नाम महर्षिः । तन्माता क्रिया । ते च षष्टिसहस्रसंख्याकाः । भा० ४ । १ ॥]

तेषामिन्द्रेणोपहासः । **आ० ३१** । १० ॥

तैस्तपसा इन्द्रोपद्रवकरणेच्छया गरुडस्योत्पादनं । **आ० ३१** । ३७ ॥

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३** । ३९ ॥

**वाली** । सुग्रीवभ्राता इन्द्रपुत्रो वानरः । **स० ९** । १८ ॥ तद्भार्या तारा । **व० २८१** । १७ ॥ तत्पुत्रोऽङ्गदः ।

[तस्योत्पत्तिः । रामायणे उत्तरकाण्डे सप्तत्रिंशसर्गादुपरितने प्रक्षिप्तभागे प्रथमे सर्गे ।]

तस्य वधः श्रीरामेण । **व० २८१** । ३८ ॥

१ **वाल्मीकिः** । रामायणग्रन्थकर्ता महर्षिः । **आ० ५९** । १४ ॥ **स० ७** । १६ ॥ तस्य ब्रह्महत्याप्राप्तिः । **अनु० ४९** । ८ ॥

२ **वाल्मीकिः** । गरुडस्य पुत्रः । **उ० १०१** । ११ ॥

**वासवी** । उपरिचरवसुवीर्यजा सत्यवती । **आ० ६४** । ८६ ॥

**वासवेयः** । वासव्याः सत्यवत्याः पुत्रो व्यासः । **आ० १** । ८४ ॥

**वासुकिः** । सर्पः । **आ० ३५** । ५ ॥ **३७** । १ ॥ **३८** । १ ॥ **५४** । १ ॥ **६६** । ४१ ॥ **स० ९** । १४ ॥ **उ० १०९** । १९ ॥

तद्भार्या शतशीर्षा । **उ० ११७** । १७ ॥

तस्य स्वसा जरत्कारुऋषेर्भार्या जरत्कारुः । **आ० ३८** । २० ॥

तं रज्जुं कृत्वा अमृतार्थं समुद्रमथनं । **आ० १८** । **१३** ॥

तस्य भगिन्या सह संवादः । **आ० ४८** ॥ **५३** । १९ ॥

**वासुकितीर्थं** । **व० ८३** । ८६ ॥

**वासुदेवः** । श्रीकृष्णः । तन्नामनिर्वचनं । **उ० ६९** । ३ ॥ **शां० ३५०** । ४१ ॥

तस्य व्यासेन सह संवादः । **अनु० १५** ॥

तस्य पृथिव्या सह ब्राह्मणमहिमविषये संवादः । **अनु० ६९** ॥ गृहस्थधर्मविषये संवादः । **अनु० १५४** ॥

तन्माहात्म्यं । **भी० ६९** ॥ शिष्टं श्रीकृष्णशब्दे द्रष्टव्यं ।

**+ वासुदेवतत्त्वं** । **शां० २०९** ॥

१ **वाहिनी** । सो० वं० कुरुराजस्य पत्नी । तत्पुत्रा अश्ववत्प्रभृतयः । **आ० १०१** । ३९ ॥

२ **वाहिनी** । नदी । **भी० ९** । ३४ ॥

**विंशः** । क्षत्रियः । सू० वं० इक्ष्वाकुपुत्रः । तत्पुत्रो विविंशः । **अश्व० ४** । ५ ॥

**विकटः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । ९६ ॥ **२०१** । ३ ॥ **भी० ६४** । २९ ॥ तस्य वधो भीमेन । **क० ४६** । १६ ॥

**विकटाननः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१** । ५ ॥

**विकर्णः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६३** । ५८ ॥ **६८** । ९४ ॥ **१३१** । ४ ॥ **२०१** । १ ॥ **वि० ३७** । ३ ॥ **भी० ७७** । ७ ॥ **७८** । २२ ॥

तस्य वचनं द्यूते द्रौपद्याः पणीकरणस्यान्याय्यतायां । **स० ९०** । ११ ॥

तस्य नकुलेन पराजयः । **द्रो० १०७** । ३० ॥

सः भीमसेनेन हतः । **द्रो० १३७** । ३० ॥

तच्छववर्णनं । **स्त्री० १९** । १ ॥

ः । ( **विकुण्ठनः** ) । सो० वं० नामकस्य राज्ञः पुत्रः । तद्भार्या सुन्दरा । तत्पुत्रोऽजमीढः । **आ० ६३** । ३८ ॥

**विकृतः** । विरूपेण सह विवदमानः क्रोधात्मा कश्चन पुरुषः । **शां० १९७** । ९५ ॥

**विचकाश्वः** । क्षत्रियः । **अनु० १७७** । ७१ ॥

**विचख्युः** । क्षत्रियः । **शां० २७१** । ३ ॥

**विचित्रवीर्यः** । सो० वं० शान्तनुराजपुत्रः । तन्माता सत्यवती । तस्य द्वे भार्ये काशिराजपुत्र्यौ । तयोरम्बिकायां व्यासाज्जातः पुत्रो धृतराष्ट्रः । अम्बालिकायां व्यासाज्जातः पुत्रः पाण्डुः । अम्बिकादास्यां व्यासाज्जातः पुत्रो विदुरः । **आ० ६३** । ५४ ॥

तस्य वैमात्रेयो भ्राता गाङ्गेयो भीष्मः । **आ० ६३** । ५१ ॥ **१०८** । ६ ॥

तस्य विवाहः । **आ० १११** । १ ॥

तस्य राज्याभिषेकः । **आ० १०८** । १६ ॥

तस्य मरणं । **आ० १११** । ७ ॥

**विजयः** । अर्जुनः । **वि० ४३** । २१ ॥

**विजया** । माद्रीपुत्रस्य सहदेवस्य भार्या । शल्यराजस्य पुत्री । तत्पुत्रः सुहोत्रः । **आ० ६३** । ७९ ॥

**विडूरथः** । ( **विदूरथः** ) । यादवः । **आ० २३९** । १० ॥

। क्षत्रियः । **आ० २०१** । १२ ॥

**वितस्ता** । नदी । **व०** ८० । ९० ॥ **१३२** । २० ॥ **भी०** ९ । १६ ॥ The river Jhelum.

**वितस्त्यः** । ब्राह्मणः । सावैनसस्य पुत्रः । तत्पुत्रः शिवः । **अनु०** ८ । ६२ ॥

**विदर्भाः** । विन्ध्यस्य दक्षिणतः दशार्णदेशस्य पश्चिमतः गोदावर्या उत्तरतः सुराष्ट्रदेशस्य पूर्वतश्च विद्यमानो देशः । **भी०** ९ । ४३ ॥ Berar, the kingdom of Bhishmaka whose daughter Rukmini was married to Krishna. Its principal towns were Kundinanagara Bhojakatapura, Akola, Amraoti, Ellichpur, etc.

**विदिशा** । नदी । **स०** ९ । २२ ॥

**विदुरः** । विचित्रवीर्यभार्याया अम्बिकाया भुजिष्यायां व्यासाज्जातः पुत्रः । **आ०** ६३ । ५७ ॥

तस्योत्पत्तिः । **आ०** ६८ । ८६ ॥ **११५** । ४४ ॥ **आश्र०** ३० । १२ ॥

तस्य यमांशत्वं । **आ०** ६४ । १३८ ॥

तस्य पारसव्या विवाहः । पुत्रोत्पत्तिश्च । **आ०** **१२६** । १–३ ॥

तस्य कुन्त्या संवादः । **आ०** **१५४** । ३ ॥

तेन म्लेच्छभाषया पाण्डवान्प्रत्युपदेशः । **आ०** **१५७** । १९–२५ ॥

तस्य धिक्कारो धृतराष्ट्रेण । **व०** ४ । २२ ॥

तस्य पाण्डवदिदृक्षया काम्यकवनगमनं । **व०** ५ । ५ ॥

तेन धृतराष्ट्राय नीतिकथनं । **उ०** ३४–४० ॥

तस्य गृहे श्रीकृष्णस्यागमनं तत्र भोजनं च । **उ०** ९१ । ३६–४६ ॥

तेन धर्मप्रशंसा । **शां०** **१६५** । ५–९ ॥

तस्य धृतराष्ट्रेण सह तपोवनगमनं । **आश्र०** **१७** । ४ ॥

तस्य स्वशरीरत्यागेन युधिष्ठिरशरीरप्रवेशः । **आश्र०** २८ । २५ ॥

[ तस्य भारतयुद्धसमये तीर्थयात्रार्थं गमनं । भा० १ । १३ । ३१ ॥ ]

[ तस्य प्रभासे देहत्यागः । भा० १ । १५ ॥ ]

+ **विदुरनीतिः** । **उ०** ३४–४० ॥

+ **विदुरागमराज्यलाभपर्व** । **आ०** **२१७** –**२३२** ॥

**विदुला** । सौवीरराजस्त्री । तस्याः सञ्जयनाम्ना स्वपुत्रेण सह क्षत्रियेण युद्धस्यावश्यकर्तव्यत्वविषये संवादः । **उ०** **१३३–१३६** ॥

**विदूरथः** । सो० वं० कुरुराजपुत्रः । तत्पुत्रोऽनश्वान् । **आ०** ६३ । ४२ ॥

**विदेहाः** । देशः । **भी०** ९ । ४५ ॥ Tirhoot. The kingdom of Raja Janaka. Videha was bounded by the river Kausaki on the east, Gandak on the west, Himalaya on the north and the Ganges on the South.

**विद्या** । ज्ञानं । **उ०** ४४ । २ ॥

तस्याः स्तुतिः । **शां०** **१७४** । ३५ ॥ **२८३** । ३६ ॥ **अनु०** **१८४** । १९ ॥

तद्विहीनस्य निन्दा । **उ०** ३९ । ७७ ॥

तद्ग्रहणं नीचादपि कर्तव्यं । **शां०** **१६३** । ३१ ॥

**विद्याः** । अष्टादश । **स०** ५ । ५ ॥ [ चतुर्दश । विष्णु० ३ । ६ ॥ ]

+ **विद्यादानफलं** । **अनु०** **२३९** । ७५ –७७ ॥

**विद्युज्जिह्वौ** । अमृतरक्षिणौ सर्पौ । **आ०** ३३ । ५–६ ॥

**विद्युता** । अप्सराः । **अनु०** ५० । ४८ ॥

**विद्युत्पर्णा** । अप्सराः । **आ०** ६६ । ४९ ॥ **१३२** । ४४ ॥

**विद्युत्प्रभः** । ऋषिः । **अनु०** **१८८** । ४३ ॥

**विद्युत्प्रभाः** । तन्नाम्न्यो दशाप्सरसः । **उ०** **१११** । २१ ॥

**विद्युन्माली** । तारकासुरपुत्रः । **क०** २४ । ७ ॥

**विद्योता** । अप्सराः । **अनु० ५० । ४८** ॥

**विधाता** । ब्रह्मणः ( भृगोः ) पुत्रः । **आ० ६७ । ५०** ॥

[ तद्भार्या मेरोर्दुहिता नियतिः । तत्पुत्रो वेदशिराः कविश्च । भा० ४ । १ ॥]

**विधिः** । दैवं । दिष्टं । तस्य प्रावल्यं । **व० ३०** ॥ **अनु० २१४ । १–२१** ॥

**विनता** । दक्षप्रजापतिपुत्री कश्यपभार्या । तत्पुत्रौ गरुडारुणौ । **आ० १६ । ६** ॥ **६६ । ४०** ॥ **६७ । ३९** ॥

तस्याः कथा । **आ० २०–३४** ॥ **अनु० २० –२९** ॥

तस्या गर्भोत्पत्तिः । **आ० ३१ । ३१** ॥

तस्यै तत्पुत्रेणारुणेन दासीत्वप्राप्तिशापदानं । **आ० १६ । १९** ॥ **अनु० २० । २०** ॥

तस्या दासीभावः । **आ० २३ । ३** ॥

+ **विनयः** । गुणः । तस्य श्रैष्ठ्यं । **शां० ११३** ॥

**विनशनतीर्थं** । सरस्वतीनदी यत्रान्तर्हिता तत्तीर्थं । निषादराष्ट्रस्य द्वारे वर्तते । **व० ८० । १११** ॥ **८२ । ११२** ॥ The spot in the great sandy desert in the District of Sirhind where the river Saraswati loses itself after taking a westerly course from Thaneswar.

१ **विन्दः** । आवन्त्यराजपुत्रः । तद्भ्राता अनुविन्दः । रथसत्तमः । **उ० १६६ । ६** ॥ **स० ३२ । ११** ॥ अर्जुनेन हतः । **द्रो० ९९ । २७** ॥

२ **विन्दः** । केकयराजपुत्रः । कौरवपक्षीयः । तद्भ्राता अनुविन्दः । सात्यकिना हतः । **क० १० । ६** ॥

३ **विन्दः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८ । ९४** ॥ **१३१ । ३** ॥ भीमसेनेन हतः । **द्रो० १२७ । ४८** ॥

**विन्ध्यः** । कुलपर्वतः । **भी० ९ । ११** ॥ The Vindhya Range.

तस्य सूर्यमार्गनिरोधार्थं वृद्धिः । **व० १०२ । २३** ॥ [ रा ३ । ११ ॥ देवीभा० १० । ३ ॥ स्कान्दपु० काशीखं० पूर्वार्धं० ४–५ ॥ ]

तस्य कथा । **व० १०३ । २–१९** ॥

**विन्ध्यचुलिकाः** । देशः । **भी० ९ । ६२** ॥

**विपाटः** । कौरवपक्षीयः क्षत्रियः । अर्जुनेन हतः । **द्रो० ३२ । ६१** ॥

**विपापः** । अग्निविशेषः । **व० २२१ । २१** ॥

**विपापा** । नदी । **भी० ९ । १५** ॥

**विपाशा** । नदी । **स० ९ । २३** ॥ **व० १३२ । ८** ॥ **भी० ९ । १५** ॥ The river Beas.

तस्यां पुत्रमरणनिर्विण्णेन वसिष्ठेनात्मप्राणपरित्यागाय स्वदेहं पाशैरवबध्य पतनं । ब्राह्मणवधभीतया तया नद्या तस्य पाशानाच्छिद्य तस्य तीरप्रापणं च । **आ० १९३ । ४** ॥

१ **विपुलः** । देवशर्मशिष्यो ब्राह्मणः । तेन गुरुपत्न्या रुचिनाम्न्याः देवराजधर्षणाद्रक्षणं । **अनु० ७५–७८** ॥

२ **विपुलः** । सौवीरदेशाधिपतिः क्षत्रियः । अर्जुनेन हतः । **आ० १५१ । ४६** ॥

**विपुला** । नदी । **भी० ९ । १४** ॥

**विपृथुः** । यादवः । **आ० २०१ । १८** ॥ **२३९ । १०** ॥ **स० ४ । ३६** ॥

तेन सहार्जुनस्य सुभद्राहरणकाले युद्धं । **आ० २४४** ॥

+ **विप्रकन्योपाख्यानं** । **अनु० २५३** ॥

**विप्रचित्तिः** । दनुपुत्रोऽसुरः । **आ० ६६ । २२** ॥ **स० ९ । १६** ॥ **५१ । ७** ॥

+ **विप्रसेनजित्संवादः** । **शां० १७३** ॥

**विभाण्डकः** । कश्यपवंश्य ऋषिः । तत्पुत्रः ऋश्यशृङ्गः । **व० १११ । ११** ॥

१ **विभावसुः** । सुप्रतीकस्य भ्राता ऋषिः । सः शापेन कच्छपतां प्राप्तो गरुडेन भक्षितः । **आ० २९ । १६** ॥

२ **विभावसुः** । विवस्वत्पुत्रः । **आ० १ । ५५** ॥

१ **विभीषणः** । यक्षः । **स० १० । १८** ॥

२ **विभीषणः** । राक्षसः । विश्रवसः पुत्रः । रावणकुम्भकर्णयोर्भ्राता । तन्माता मालिनी । **स० ५० । २५** ॥ **व० २७६ । ८** ॥

तस्माद्राजसूयार्थं करं ग्रहीतुं सहदेवेन तं प्रति घटोत्कचप्रेषणं । **स० ३२ । ८०** ॥

तस्य पट्टाभिषेको रामेण । **व० २८४ । ४९** ॥

**विभुः** । शकुनेर्भ्राता । भीमेन हतः । **द्रो० १५८ । २३** ॥

**विभूतिः** । विश्वामित्रस्य पुत्रः । **अनु० ७ । ५७** ॥

**विमलतीर्थं** । **व० ८० । ८८** ॥

**विमलपिण्डकः** । सर्पः । **आ० ३५ । ८** ॥

**विमलोदका** । सरस्वती नदी । **शा० ३९ । ४** ॥

१ **विरजाः** । सर्पः । **आ० ३५ । १४** ॥ **उ० १०३ । १६** ॥

२ **विरजाः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । १४** ॥ भीमसेनेन हतः । **द्रो० १५८ । १७—१९** ॥

**विरजातीर्थं** । **व० ८३ । ६** ॥

१ **विराजः** । क्षत्रियः । अविक्षितः पुत्रः । **आ० १०१ । ४०** ॥

२ **विराजः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । भीमेन हतः । **भी० ९६ । २७** ॥

**विराटः** । मत्स्यदेशाधिपः क्षत्रियः । मरुद्गणांशः । **आ० ६८ । ८२** ॥ **२०१ । ८** ॥ महारथः । **उ० १७० । ८** ॥

तस्य प्रथमा भार्या सुरथा । तत्पुत्रौ श्वेतः शङ्खश्च । **वि० २१ । १७** ॥

तस्य द्वितीया भार्या केकयनाम्नः सूतराजस्य पुत्री सुदेष्णा । तत्पुत्रः भूमिञ्जयापरनामा उत्तरकुमारः । **वि० २१ । १८** ॥

तस्यान्यः पुत्रो बभ्रुः । **उ० ५७ । ३३** ॥

तत्पुत्री अभिमन्योर्भार्या उत्तरा । **आ० ६३ । ८२** ॥

तस्य भ्रातर एकादश । शतानीकः मदिराक्षः (मदिराश्वः) सूर्यदत्तः श्रुतानीकः श्रुतध्वजः बलानीकः जयानीकः जयाश्वः रथवाहनः चन्द्रोदयः समरथः । **वि० ३३ । १९—२१** ॥ **द्रो० १५९ । ४०** ॥

तस्य दक्षिणगोग्रहणे सुशर्मणा सह युद्धं । **वि० ३४ । ३१** ॥

तस्य जीवग्राहग्रहणं सुशर्मणा । युधिष्ठिराज्ञया भीमसेनेन मोचनं च । **वि० ३५** ॥

तेन बृहन्नलायाः कौरवजयवार्तामसहयता कङ्कनाम्नो युधिष्ठिरस्य नासायामक्षेण कुट्टनं । **वि० ७० । ३७** ॥

तस्य वधो द्रोणाचार्येण । **द्रो० १८७ । ४२** ॥

**विराटदेशः** । मत्स्यदेशशब्दं पश्यत । The capital of Virata Raja king of Matsya Desa. One hundred and five miles to the south west of Delhi and forty-one miles to the north of Jaipur.

**विराधः** । राक्षसः । रामेण हतः । **स० ५० । १४** ॥

**विरावी** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ । १०४** ॥ **१३१ । १३** ॥

१ **विरूपः** । अङ्गिरसः पुत्रः । ऋषिः । **अनु० १३२ । ४२** ॥

२ **विरूपः** । विकृतेन विवदमानः कामाभिमानी पुरुषः । **शां० १९७ । ९४** ॥

३ **विरूपः** । असुरः । **स० ९ । १८** ॥

१ **विरूपाक्षः** । दनुपुत्रः । **आ० ६६ । २५** ॥

२ **विरूपाक्षः** । घटोत्कचस्य सारथिः । **द्रो० १७६ । १८** ॥

३ **विरूपाक्षः** । राक्षसः । **व० २८६ । ९** ॥ **शां० १६९ । १५** ॥

१ **विरोचनः** । प्रह्लादस्य पुत्रः । **आ० ६६ । १९** ॥ **स० ५१ । ७** ॥

तस्य सुधन्वनाम्ना ब्राह्मणेन सह केशिन्याः स्वयंवरे ब्राह्मणक्षत्रिययोः श्रैष्ठ्ये विवादः । **स० ९०।** ६७ ॥ **उ० ३५ ।** ५—११ ।

तत्पुत्रो महाबलिः । **आ० ६६ ।** २० ॥

२ **विरोचनः ।** क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० २०१ ।** २ ॥

**विरोहणः ।** सर्पः । **आ० ५७ ।** ९ ॥

**विवर्धनः ।** क्षत्रियः । **स० ४ ।** २७ ॥

**विवस्वान् ।** अदितेः पुत्रः । द्वादशादित्येष्वन्यतमः। **आ० ६६ ।** १५ ॥ सूर्यशब्दं पश्यत ।

**विवाजी ।** इल्वलासुरस्य रथहयः । **व० ९७ ।** २२ ॥

+ **विवाहः ।** तत्प्रभेदाः । **आ० ९४ ।** १४ ॥ **अनु० ७९ ।** १—१५ ॥ [ विष्णु० ३ । १० ॥ ]

तदुचितवयोनिर्णयः । **अनु० ७९ ।** १६ ॥

**विवित्सुः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः। **आ० ६८ ।** ९६ ॥ **१३१ ।** ५ ॥ भीमसेनेन हतः । **क० ४६ ।** १२ ॥

**विविन्ध्यः ।** साल्वपक्षीयोऽसुरः । चारुदेष्णेन हतः । **व० १६ ।** २६ ॥

**विविंशः ।** क्षत्रियः । सू० वं विंशस्य पुत्रः । तत्पुत्रः खनीनेत्रः । **अश्व० ४ ।** ५ ॥

**विविंशतिः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** ९४ ॥ **१३१ ।** ४ ॥ **२०१ ।** १ ॥ **वि० ३७ ।** ३ ॥ भीमसेनेन हतः । **क० २ ।** ९ ॥

तच्छववर्णनं । **स्त्री० १९ ।** १४ ॥

**विशल्या ।** नदी । **व० ८२ ।** ११४ ॥ **स० ९ ।** २४ ॥

**विशाखः ।** सुब्रह्मण्यः । **स० ७ ।** १४ ॥

**विशाखयूपः ।** क्षेत्रं । **व० १७९ ।** १६ ॥ **शां० १२ ।** ३ ॥

**विशालकः ।** यक्षः । **स० १० ।** १७ ॥

**विशालराजः ।** क्षत्रियः । **स० ६८ ।** २१ ॥

**विशाला ।** नदी । **श० ३९ ।** ४ ॥

१ **विशालाक्षः ।** गरुडस्य पुत्रः । **उ० १०१ ।** ९ ॥

२ **विशालाक्षः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ ।** १०१ ॥ **१३०१ ।** १० ॥ भीमसेनेन हतः । **भी० ८८ ।** २६ ॥

**विशुण्डिः ।** सर्पः । **उ० १०३ ।** १६ ॥

**विशोकः ।** भीमसेनस्य सारथिः । **स० ३६ ।** ३० ॥ भी० ७७ । २४ ॥ [ श्रीकृष्णात्रिवक्रायां जातः । भागवते विजयध्वजीयपाठे—१० । १०३ ॥ ] अस्याशोक इति नामान्तरं ।

तस्य भीमसेनेन सह रणाङ्गणे संवादः । **क० ८० ॥**

**विश्रवाः ।** रावणादीनां पिता ऋषिः । पुलस्त्यस्य रूपान्तरं । **व० २७५ ।** १४ ॥ **२७६ ।** १ ॥ [ तस्योत्पत्तिः । रा० ७ । २ ॥ ] [ तस्य सकाशादिडबिलायां कुबेरोत्पत्तिः । **भा० ९ ।** २ ॥ ]

१ **विश्वः ।** श्रीमान्नारायणः । तस्य स्तुतिर्ब्रह्मकृता । **भी० ६५–६६ ॥**

२ **विश्वः ।** क्षत्रियः । **आ० ६८ ।** ३६ ॥

**विश्वकर्मा ।** प्रभासस्य पुत्रः । **आ० ६७ ।** २८ ॥ [ अस्य त्वष्टेति नामान्तरं । अस्य भार्या प्रह्लादपुत्री विरोचना । तत्पुत्रो देवाचार्यस्त्रिशिराः विश्वरूपाचार्यः । वायु० ८४ ॥ ]

[ तन्माता बृहस्पतिभगिनी ब्रह्मवादिनी । हरि० १ । ३ ॥ विष्णु० १ । **१५** ॥ ]

तत्पुत्री सवितुर्भार्या संज्ञा । अश्विनोर्माता । **आ० ६७ ।** ३५ ॥

तेनेन्द्रप्रस्थनिर्माणं । **आ० २२७ ।** ५९ ॥

तेन सुन्दोपसुन्दवधार्थं तिलोत्तमासृष्टिः । **आ० २११ ।** १२ ॥

तेन त्रिपुरवधार्थं रुद्राय रथनिर्माणं । **क० २६ ॥**

**विश्वजित् ।** बृहस्पतेस्तृतीयः पुत्रः । अग्निविशेषः । **व० २२१ ।** २४ ॥

**विश्वपतिः** । अग्निविशेषः । **व० २२३** । १७ ॥

**विश्वभुक्** । बृहस्पतेश्चतुर्थः पुत्रः । अग्निविशेषः । अस्य गोपतिरिति नामान्तरं । **व० २२१** । २५ ॥

१ **विश्वरूपः** । असुरः । **स० ९** । १८ ॥

२ **विश्वरूपः** । त्वष्टुः पुत्रः । **उ० ९** । ४ ॥ **शां० २०७** । २० ॥

[ तन्माता दैत्यानुजा ( विरोचनानुजा ) रचना । भा० ६ । ६ ॥ प्रह्लादपुत्री विरोचना । वायु० ८४ ॥ ]

[ तेन देवानां पौरोहित्यकरणं । भा० ६ । ७ ॥ ]

तस्येन्द्रेण वधः । **उ० ९** । २२ ॥ [ भा० ६ । ९ ॥ ]

+ **विश्वरूपप्रदर्शनं** । श्रीकृष्णेन धृतराष्ट्रसभायां । **उ० १३१** ॥ समराङ्गणे अर्जुनाय । **भी० ३५** ॥ उदङ्काय । **अश्व० ५५** ॥ हनुमता भीमाय । **व० १५२** ॥

**विश्वरूपा** । कामधेनुदुहिता । **उ० १०२** । ९॥

**विश्वा** । धर्मप्रजापतेर्भार्या । दक्षप्रजापतिकन्या । **आ० ६६** । १२ ॥ [ तत्पुत्रा विश्वेदेवाः । मत्स्य० २०३ ॥ ]

**विश्वाची** । अप्सराः । **स० १०** । १२ ॥

तया सह ययाते रमणं । **आ० ७९** । ९ ॥

**विश्वामित्रः** । ब्रह्मर्षिः । सो० वं० गाधेः पुत्रः । पूर्वं क्षत्रियः पश्चात्तपसा ब्राह्मण्यं प्राप्तः । **आ० १९१** । ४ ॥ **स० १२** । ११ ॥ **उ० ११३** । २५ ॥ **शां० ४८** । ५७ ॥

तस्योत्पत्तिः । **आ० १९१** । ४ ॥ **अनु० ७** । ४७ ॥ **९१** । २१ ॥ [ हरि० १ । २७ ॥ वायु० ९१ ॥ भा० ९ । १६ ॥ ]

तन्नामनिर्वचनं । **अनु० १४२** । ३५ ॥

[ तस्य क्षत्रियत्वावस्थायां नाम विश्वरथ इति । हरि० १ । २७ ॥ ३२ ॥ वायु० ९१ ॥ ]

तस्य भार्या हैमवती । **उ० ११७** । १३ ॥

[ तस्य भार्याः शालावती दृषद्वती रेणुः माधवी इत्याद्याः । हरि० १ । २७ ॥ ३२ ॥ वायु० ९१ ॥ ]

तस्य पुत्राः । मधुच्छन्दआदयः । **अनु० ७** । ५० ॥ [ भा० ९ । १६ ॥ रा० १ । ५७ ॥ ]

[ तस्य पुत्राः । कतिः पाणिनः याज्ञवल्क्यः साङ्कृतिः गालवः मुद्गलः देवलः अष्टकः देवरातापरनामा शुनश्शेप इत्यादयः । तत्र शुनश्शेपोऽभिमानपुत्रः । हरि० १ । २७ ॥ ३२ ॥ ]

तेन ब्राह्मण्यार्थं तपश्चरणं । **आ० ९२** । ३२ ॥ **१०१** । ६० ॥ [ रा० १ । ५६ ॥ ]

तस्य क्षत्रियत्वावस्थायां वसिष्ठाश्रमगमनं । **आ० १९१** । ६ ॥ [ रा० १ । ५१ ॥ ]

[ तस्य तपश्चरणकाले तद्दाराणां त्रिशङ्कुराजेन रक्षणं । हरि० १ । १२ ॥ ]

तस्य तपश्चरणकाले मेनकायां शकुन्तलोत्पत्तिः । **आ० ९३** ॥

[ तच्चरित्रं । रा० १ । ५१–६५ ॥ हरि० १ । २७ ॥ भा० ९ । १६ ॥ स्कान्दपु० नागरखं० १६७–१६८ ॥ ]

तेन सरस्वतीनद्या रुधिरीभवनशापदानं । **शा० ४३** । ३९ ॥

तस्य ब्राह्मण्यप्राप्तिः । **आ० १९१** । ६० ॥ **श० ४१** । ११ ॥

तेन गालवं प्रति गुरुदक्षिणार्थं एकतश्श्यामकर्णानां हयानां शताष्टकस्यानयनचोदना । **उ० ११४** । १४ ॥

तेन ययातिपुत्र्या माधव्या एकतश्श्यामकर्णहयानां शतद्वयप्रतिनिधितया परिग्रहः । तस्यामष्टकनामकपुत्रोत्पादनं च । **उ० ११९** । १५–१८ ॥

तेन धर्मविशेषकथनं । **अनु० १९०** ॥

तस्य हरिश्चन्द्रेण सह वैरं । **व० ७७** । ३७ ॥ [ देवीभा० ७ । १८ ॥ ]

तेन श्वजाघनीचौर्यं । श्वपचेन संवादश्च । **शां० १४१** ॥

तत्कृतः पुष्करास्तेयशपथः । **अनु० १४३ । ३३ ॥**
तस्य वंशः । **अनु० ७ । ४८ ॥** [हरि० १।२७॥ रा० १ । ३२ ॥ ५१ ॥ वायु० ९१ ॥]
**विश्वामित्रतीर्थं । व० ८१ । १३९ ॥**
**विश्वामित्रा ।** नदी । **भी० ९ । २६ ॥**
१ **विश्वावसुः ।** प्राधापुत्रो देवगन्धर्वः । **आ० ६६ । ४७ ॥ स० ७ । २२ ॥**
तस्य ब्राह्मणशापेन कबन्धनामकराक्षसजन्मप्राप्तिः । **व० २८० । ४२ ॥**
तस्य याज्ञवल्क्येन सह संवादः । **शां० ३२३ । २६ ॥**
२ **विश्वावसुः ।** जमदग्निपुत्रः । **व० ११७ । ११ ॥**
+ **विश्वासानर्हाः । उ० ३७ । ५७ ॥ शां० १३९ ।** २५—३३ ॥ तेषु विश्वासकरणे दोषः । **आ० १९३ । ७२ ॥**
**विश्वेदेवाः । आ० १ ।** ४७ ॥ **१३२ । ५३ ॥ अनु० १३८ ।** २९—३७ ॥ **२५९ । २१ ॥**
[ते च धर्मप्रजापतेर्विश्वानाम्न्यां दक्षपुत्र्यां जाताः । क्रतुदक्षपुरूरवोमार्द्रवसत्यवसुकालकामादयः । मत्स्य० २०३ ॥]
+ **विश्वोपाख्यानं । भी० ६५—६६ ॥**
+ **विषपानं ।** रुद्रेण । **आ० १८ । २५ ॥** [भा० ८ । ७ ॥ रा० १ । ४५ ॥]
+ **विषहरविद्यादानं ।** ब्रह्मणा कश्यपाय । **आ० २० । १६ ॥**
**विषुवं ।** पुण्यकालः । **अश्व० ११५ । २ ॥**
+ **विषोत्पत्तिः ।** अमृतमथनसमये । **आ० १८ । १९ ॥** [भा० ८ । ७ ॥ रा० १ । ४५ ॥]
१ **विष्णुः ।** अग्निविशेषः । अस्य धृतिमानिति नामान्तरं । **व० २२३ । १२ ॥**
२ **विष्णुः ।** क्षत्रियः । कश्चन चैद्यः कर्णेन हतः । **क० ५१ । ४९ ॥**
३ **विष्णुः ।** द्वादशादित्येष्वन्यतमः श्रीमान्नारायणः । **आ० ६६ । १६ ॥**
तेन रुद्रमाहात्म्यकथनं । **अनु० ४९ । ७१ ॥**
तेन देवान्प्रति वृत्रासुरहनने युक्तिकथनं । **उ० १० । १० ॥**
तन्नामनिर्वचनं । **उ० ६९ । १३ ॥ शां० ३५० । ४३ ॥**
तेन भूम्युद्धरणं वराहरूपेण । **व० १४४ । ३० ॥**
तत्प्रीतिकरा धर्माः । **अनु० १८९ । १-७ ॥**
**विष्णुधर्मा ।** गरुडस्य पुत्रः । **उ० १०१ । १३ ॥**
**विष्णुपञ्चकं ।** व्रतविशेषः । **अश्व० ११४ । १४ ॥**
+ **विष्णुपदतीर्थं । व० ८१ । १०३ ॥**
**विष्णुवर्मा ।** चैद्यः क्षत्रियः । कर्णेन हतः । **क० ५१ । ४९ ॥**
**विष्वक्सेनः ।** विष्णुपार्षदः । **स० ७ । १९ ॥**
**विष्वगश्वः ।** सू० वं० इक्ष्वाकुवंश्यस्य पृथुराजस्य पुत्रः । तत्पुत्र आर्द्रकः । **व० २०५ । ३ ॥ अनु० १७७ । ६७ ॥**
**विहङ्गः ।** सर्पः । **आ० ५७ । ११ ॥**
+ **वीटाक्रीडा ।** कन्दुकक्रीडा । कौरवपाण्डवानां । **आ० १४१ । १७ ॥**
**वीतहव्यः ।** क्षत्रियः । सू० वं० शर्यातिपुत्रः । तद्भ्राता तालजङ्घः । तस्य भार्या दश । पुत्राः शतं । तपसा ब्राह्मण्यं प्राप्तः । **अनु० ८ ॥**
तस्य ब्राह्मण्यप्राप्त्यनन्तरं जातः पुत्रो गृत्समदः । **अनु० ८ । ५९ ॥**
**वीतिः ।** अग्निविशेषः । **व० २२३ । २५ ॥**
**वीरः ।** भरद्वाजनामकाग्नेर्द्वितीयः पुत्रोऽग्निविशेषः । तस्यैवाग्नीषोमाविति सोमेन सह प्रयोगः । तस्य रथप्रभुः रथध्वानः कुम्भरेता इति नामान्तराणि । **व० २२२ । १३—१८ ॥**

**वीरकरा** । नदी । **भी० ९** । २६ ॥
**वीरकेतुः** । क्षत्रियः । पाञ्चाल्यः । द्रोणेन हतः । **द्रो० १२२** । ४१ ॥
**वीरणकः** । सर्पः । **आ० ५७** । १८ ॥
**वीरद्युम्नः** । राजर्षिः । भूरिद्युम्नस्य पिता । तस्य तनुनामकेन विप्रेण संवादः । **शां० १२७** । १४ ॥
**वीरधन्वा** । क्षत्रियः । दुर्योधनपक्षीयः । त्रैगर्तः । धृष्टकेतुना हतः । **द्रो० १०७** । १४–१७ ॥
**वीरधर्मा** । क्षत्रियः । पाण्डवपक्षीयः । **उ० ४** । १६ ॥
**वीरप्रमोक्षतीर्थं** । **व० ८२** । ५१ ॥
१ **वीरबाहुः** । क्षत्रियः । चेदिराजः । सुबाहोः पिता । तस्य गृहे दमयन्त्या वासः । **व० ६६** । १५ ॥
२ **वीरबाहुः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० ६८** । १०३ ॥ **१३१** । १२ ॥ भीमेन हतः । **भी० ६४** । ३५ ॥
**वीरभद्रः** । रुद्रावतारः । तेन दक्षाध्वरध्वंसः । **शां० २९०** । ४९–५३ ॥
[तस्योत्पत्तिः । भा० ४ । ५ ॥ वायु० ३० ॥ कालिकापु० १६ ॥]
**वीरसेनः** । क्षत्रियः । **अनु० १७७** । ७२ ॥
१ **वीरा** । भरद्वाजनामकाग्नेर्भार्या । **व० २२१** । १७ ॥
२ **वीरा** । नदी । **भी० ९** । २२ ॥
**वीरिणी** । दक्षप्रजापतिभार्या । ब्रह्मणो वामपादाङ्गुष्ठादुत्पन्ना । **आ० ६७** । ११ ॥ **६९** । ९ ॥ [वीरणप्रजापतेर्दुहिता । तस्या असिक्नीत्यादि नामान्तराणि । तस्यां षष्टिकन्योत्पत्तिः । विष्णु० १ । १५ ॥]
[तस्यां सतीदेव्या उत्पत्तिः । कालिका० ८ ॥]
१ **वृकः** । क्षत्रियः । पाञ्चाल्यः । द्रोणेन हतः । **द्रो० २१** । १६ ॥
२ **वृकः** । क्षत्रियः । **आ० २०१** । १० ॥ **क० ८९** । ९ ॥
३ **वृकः** । पूर्वकालीनः क्षत्रियः । **अनु० १७७** । ७० ॥
**वृकरथः** । कर्णस्य भ्राता । भीमसेनेन हतः । **द्रो० १५८** । २१ ॥
**वृकस्थलं** । पाण्डवप्रार्थितेषु पञ्चसु ग्रामेष्वन्यतमः । **उ० ३१** । १९ ॥ **८६** । १ ॥
**वृकोदरः** । भीमसेनः । **आ० १४७** । १० ॥
+ **वृक्षः** । महीरुहः । पादपः । तस्योत्पत्तिः । **आ० ६७** । ६९ ॥
+ तदारोपणफलं । **अनु० ९३** । २२ ॥
**वृक्षवासी** । यक्षः । **स० १०** । १९ ॥
**वृत्तः** । सर्पः । **आ० ३५** । १० ॥
१ **वृत्रः** । दनायुषः पुत्रोऽसुरः । **आ० ६६** । ३३ ॥
२ **वृत्रः** । त्वष्टृप्रजापतिना इन्द्रशत्रुत्वेनाग्नेरुत्पादितः पुत्रः । **उ० ९** । ५५ ॥ [भा० ६ । ९ ॥]
तस्येन्द्रेण सह युद्धं । **व० ९९** ॥ **शां० २८७** । ७ ॥ **अश्व० ११** । ६ ॥
तस्येन्द्रेण वधः । **व० १००** । १५ ॥ **उ० १०** । ४१ ॥ **शां० २८८** । ८–९ ॥ [भा० ६ । १२ ॥ रा० ७ । ८५ ॥ पद्म० २ । २४ ॥ ५ । १९ ॥ देवीभा० ६ । १–६ ॥ स्कान्दपु० केदारखं० १६–१७ ॥]
[तस्य पूर्वजन्मनि चित्रकेतुरिति नाम । तस्य कथा । भा० ६ । १४–१७ ॥]
तस्मै सनत्कुमारेण विष्णुमाहात्म्यकथनं । **शां० २८६** ॥
+ **वृत्रगीता** । **शां० २८५** ॥
**वृद्धकन्या** । कुणिगार्ग्यस्य ऋषेः पुत्री । गालवऋषिपुत्रस्य शृङ्गवतो भार्या । तस्याः कथा । **श० ५३** ॥
**वृद्धक्षत्रः** । क्षत्रियः । सिन्धुदेशाधिपः जयद्रथस्य

पिता। सायं सन्ध्यामनुतिष्ठतस्तस्य हस्ते पतितस्य अर्जुनबाणनिकृत्तस्य जयद्रथशिरसस्तेनाधः प्रक्षेपणात्तन्मूर्ध्नो विदारणं। **द्रो० १४८** ॥

**वृद्धगार्ग्यः।** ब्रह्मर्षिः। **अनु० १८८**। ७३ ॥

**वृषकः।** गान्धारराजस्य सुबलस्य पुत्रः। शकुन्यादीनां भ्राता। **आ० २०१। ५** ॥ एकरथः। **उ० १६८**। १ ॥

तस्य इरावता सह युद्धं। **भी० ९०। ३०** ॥

तस्य वधोऽर्जुनेन। **द्रो० ३०। १२** ॥ **क० २**। ४३ ॥

१ **वृषदर्भः।** सेदुकभ्राता क्षत्रियः **व० १९९**। २ ॥

२ **वृषदर्भः।** काशीशः कश्चित्क्षत्रियः। यः श्येनाद्भीतस्य कपोतस्य रक्षणार्थं स्वमांसमुत्कृत्य ददौ। **अनु० ६७**। ४ ॥ [अयं सो० वं० अनुकुलोत्पन्नस्योशीनरराजपुत्रस्य शिबेः पुत्रः। भा० ९। २३ ॥ वृषादर्भः वृषादर्भिश्चायमेवेति भाति ॥]

तत्पुत्रोऽनिलः। यं मृतं पक्त्वा सप्तर्षयो भोक्तुमयतन्त। **अनु० १४१**। ८ ॥

तेन सप्तर्षिहननाय कृत्योत्पादनं। **अनु० १४१**। ४४ ॥

१ **वृषपर्वा।** दनुपुत्रोऽसुरः। **आ० ६६**। २४ ॥

तत्पुत्री ययातिभार्या शर्मिष्ठा। **आ० ७२**। ६ ॥ [मत्स्य० २९ ॥ भा० ९। १८ ॥]

तं प्रति शुक्राचार्यस्य कोपः। **आ० ७४**। १ ॥

२ **वृषपर्वा।** नरनारायणाश्रमस्थः कश्चन राजर्षिः। **व० १५९**। २० ॥ **१७९**। ७ ॥

**वृषभः।** पर्वतः। ऋषभशब्दं पश्यत।

**वृषभदानफलं।** **अश्व० १०३**। ५ ॥

**वृषभा।** नदी। **भी० ९**। ३२ ॥

**वृषसाह्वया।** नदी। **भी० ९**। ३५ ॥

**वृषसेनः।** कर्णस्य पुत्रः। महारथः। **उ० १६७**। २३ ॥ तस्य युद्धं। **क० ८८**। ३६ ॥

तत्पराजयोऽभिमन्युना। **द्रो० ३७**। २५–३८ ॥

तद्वधप्रतिज्ञाऽर्जुनेन। **द्रो० १४६**। २१ ॥

तस्य वधोऽर्जुनेन। **क० ९०**। १४ ॥

**वृषाकपिः।** भगवान्नारायणः। तन्नामनिर्वचनं। **शां० ३५२**। २४ ॥

**वृषादर्भिः।** वृषदर्भशब्दं पश्यत।

१ **वेगवान्।** सर्पः। **आ० ५७**। १७ ॥

२ **वेगवान्।** दनुपुत्रोऽसुरः। **आ० ६६**। २४ ॥ साल्वपक्षं प्रविष्टस्य तस्य श्रीकृष्णपुत्रेण जाम्बवतेयेन साम्बेन वधः। **व० १६**। २० ॥

**वेगवाहिनी।** नदी। **स० ९**। २२ ॥

**वेणा।** नदी। **व० ८३**। ३३ ॥ ८६। ३ ॥ **भी० ९**। २० ॥

१ **वेणी।** कृष्णवेणीनदी।

२ **वेणी।** सर्पः। **आ० ५७**। १३ ॥

**वेणीस्कन्धः।** सर्पः। **आ० ५७**। १३ ॥

**वेणुजङ्घः।** ऋषिः। **स० ४**। २४ ॥

**वेणुदारिः।** कश्चन यादवः। **स० ६१**। १६ ॥ तत्पुत्रस्य पराजयः कर्णेन। **व० २५५**। १५ ॥ [सोश्मकदेशाधिपतिः। हरि० २। ६१ ॥]

**वेणुमण्डलं।** क्रौञ्चद्वीपस्थं वर्षं। **भी० १२**। १२ ॥

**वेतसिका।** तीर्थं। **व० ८२**। ५६ ॥

**वेत्रकीयगृहं।** एकचक्रानगरस्थः स्थलविशेषः। **आ० १७८**। २५ ॥

**वेत्रवती।** नदी। विदिशानद्याः समीपे पारियात्रादुत्पन्ना। सा वात्स्यदेशे यमुनायां मिलति। **भी० ९**। १६ ॥ Vetravati is a river called Betwa in the kingdom of Bhopal in Malwa.

१ **वेदः।** बेदशब्दं पश्यत।

२ **वेदः।** अपौरुषेयो ग्रन्थविशेषः। ऋग्यजुस्सामाथर्वाद्यात्मकः। तद्विभागो व्यासेन। **आ० ६०**। ५ ॥ [भा० १२। ६ ॥ वायु० ६० ॥ विष्णु० ३। ३ ॥]

तदपहारो मधुकैटभाभ्यां । **शां० ३५७ । २९ ॥**
तेषां परस्परं संवादः । **अनु० १३ ॥**
**वेदव्यासः** । व्यासशब्दं पश्यत ।
**वेदस्मृता** । नदी । **भी० ९ । १७ ॥**
**वेदाश्वा** । नदी । **भी० ९ । २८ ॥**
**वेदीतीर्थं** । **व० ८१ । ९९ ॥**
**वेनः** । अङ्गराजस्य पुत्रः । तन्माता सुनीथा । तत्पुत्रः पृथुचक्रवर्ती । तस्य कथा । **द्रो० ६९॥ शां० २८ । १३७ ॥ ५८ । १०२ ॥** [ हरि० १ । २ ॥ विष्णु० १ । २३ ॥ भा० ४ । १३ ॥]
+ **वेश्याः** । वारस्त्रियः । ताभिः ऋश्यशृङ्गसमीपगमनं । **व० १११ । ३१ ॥**
**वैकर्तनः** । कर्णः । **आ० १२० । ५३ ॥**
**वैकुण्ठः** । भगवान्नारायणः । तन्नामनिर्वचनं । **शां० ३५२ । १५ ॥**
[ **वैकुण्ठलोकवर्णनं** । भा० ३ । १५ ॥ ]
**वैजयन्तः** । क्षीरसमुद्रमध्यस्थः चतुर्मुखब्रह्मण आवासभूतः पर्वतः । **शां० ३६० । ९ ॥**
**वैतरणी** । नदी । **स० ९ । २४ ॥ व० ८१ । ८४ ॥ ८३ । ६ ॥ उ० १०९ । १४ ॥ भी० ९ । ३४ ॥** Betrani is a river near Cuttack in the Province of Orissa.
**वैदर्भी** । सगरराजस्य पत्नी केशिनी । तत्पुत्राः षष्टिसहस्राणि । **व० १०५ । १० ॥**
अयं शब्दः लोपामुद्रा–रुक्मिणी–दमयन्ती–प्रभृतीनां साधारणः ।
**वैदूर्यशिखरः** । पर्वतः । **व० ८७ । ६ ॥**
**वैदेहाः** । देशः । **भी० ९ । ५७ ॥**
**वैन्यः** । पृथुचक्रवर्ती । **स० ८ । २० ॥** तस्याश्वमेधः । **व० १८८ । ५ ॥** शेषं पृथुशब्दे पश्यत ।
**वैयाघ्रपद्यः** । युधिष्ठिरः । **वि० ३६ । ११ ॥**
+ **वैराग्यं** । गुणः । तस्य मुक्तिसाधनत्वं । **शां० १८७ । १७ ॥**
+ तस्य ज्ञानकारणत्वं । **अनु० २४४ ॥**
**वैराटी** । उत्तरा । **आ० १ । २३९ ॥**
**वैवस्वतः** । विवस्वन्नामकसूर्यस्य पुत्रः । श्राद्धदेवनामा मनुः । तन्माता त्वष्टृप्रजापतिपुत्री संज्ञादेवी । तस्य चरित्रं मत्स्योपाख्यानसहितं । **व० १९० । ५३ ॥**
[ तस्योत्पत्तिः । भा० ८ । १३ ॥ ]
तस्य वंशः । **आ० ६९ । १६ ॥** [ भा० ९ । १–१३ ॥ हरि० १ । १० ॥ ब्रह्म० ७ ॥ वायु० ८५–८९ ॥ ]
+ **वैवाहिकपर्व** । **आ० २०८–२१६ ॥ वि० ७४–७८ ॥**
१ **वैशंपायनः** । वैवस्वतमन्वन्तरीयाष्टाविंशमहायुगीयद्वैपायनव्यासशिष्यः । **शां० ३३५ ।** २७ ॥
२ [ **वैशंपायनः** । महर्षिः । वैवस्वतमन्वन्तरीयप्रथममहायुगीयस्वयंभूनामकव्यासशिष्यः । याज्ञवल्क्यस्य मातुलो गुरुश्च । भा० १२ । ६ ॥ ]
तेन जनमेजयाय महाभारतकथनं । **आ० १२५ ॥** ६० । २१ ॥
तेन ब्राह्मणवधो बालवधश्च । **अनु० ९ । २९ ॥**
**वैश्यः** । तृतीयो वर्णः । तद्धर्माः । **शां० १८७ ।** ६ ॥
**वैश्यापुत्रः** । धृतराष्ट्रपुत्रो युयुत्सुः ।
**वैश्रवणः** । कुबेरशब्दं पश्यत ।
+ **वैश्वदेवहोमः** । **अनु० १५४ । ९ ॥**
+ **वैष्णवधर्मप्रशंसनं** । **अनु० ३६ । २९–६२ ॥ अश्व० ९६–११८ ॥**
+ **वैष्णवलक्षणं** । **अश्व० १०४ ॥**
**वैष्णवास्त्रं** । तत्प्रयोगो भगदत्तेन । **द्रो० २९ ।** १७ ॥
**वैहारः** । पर्वतः । मगधदेशस्थः । **स० २१ ।** २ ॥
**व्यश्वः** । राजर्षिः । **स० ८ । १२ ॥**

## श.

**शकाः**। देशः। **स०** ७८। ९९ **भी०** ९। ४५ ॥

१ **शकुनिः**। क्षत्रियः। सुबलस्य पुत्रः। गान्धार्या भ्राता। दुर्योधनादीनां मातुलः। एकरथः। **उ०** १६७। १ ॥

तस्योत्पत्तिः। **आ०** ६४। १५४ ॥

तस्य द्वापरांशत्वं। **आ०** ६८। ७८ ॥

तस्य पुत्र उलूकः। सहदेवेन हतः। **श०** २७। ३१ ॥

तस्य भ्रातरः। वृषकः बृहद्बलः। **आ०** २०१। ५ ॥ अचलः। **द्रो०** ३०। ८ ॥ शरभः सुभगः विभुः भानुदत्तः। **द्रो०** १५८। २३–२४ ॥ गजः गवाक्षः चर्मवान् आर्जयः शुकः। **भी०** ९०। ३० ॥

तस्य स्वसारः। गान्धारीप्रभृतयः। गान्धारीशब्दे-द्रष्टव्याः।

तस्य युद्धं। **द्रो०** १४। २३ ॥

तस्य नकुलसहदेवाभ्यां पराजयः। **द्रो०** ९६। २४॥

तस्य सुतसोमेन सह युद्धं। **क०** १६। १८–४२ ॥

तस्य भीमसेनेन पराजयः। **क०** ८१। ६८ ॥

तस्य सहदेवेन वधः। **श०** २७। ६० ॥

तच्छववर्णनं। **स्त्री०** २४। २३ ॥

२ **शकुनिः**। सर्पः। **आ०** ५७। १६ ॥

३ **शकुनिः**। स्कन्दग्रहः। **व०** २३०। २६ ॥

+ **शकुनिकथा**। ज्ञातिभिर्विरोधस्यानर्थहेतुतायां दृष्टान्तत्वेन विदुरेण कथिता पक्षिकथा। **उ०** ६४ ॥

**शकुन्तः**। विश्वामित्रस्य पुत्रः। **अनु०** ७। ५० ॥

**शकुन्तला**। कण्वमहर्षेः पोषितदुहिता। दुष्यन्तस्य द्वितीया भार्या। तत्पुत्रो भरतः। **आ०** ६३। ३१ ॥ ८८। १८ ॥

तस्या उत्पत्तिः। **आ०** ९२। २७ ॥

तस्या जनकः पिता विश्वामित्रः। माता मेनका अप्सराः। **आ०** ६३। ३१ ॥ ९३। १५ ॥

तन्नामनिर्वचनं। **आ०** ९३। २६ ॥

तस्याः दुष्यन्तेन सह विवाहविषये विवादः। **आ०** ९२ ॥

तस्या दुष्यन्तेन सह गान्धर्वविवाहः। **आ०** ९४। ३४ ॥

तस्याः कण्वेन सह तत्कृतगान्धर्वविवाहविषये संवादः। **आ०** ९४। ५०–६६ ॥

तस्याः भरतनामकपुत्रोत्पत्तिः। **आ०** ९५। ९ ॥

तस्याः दुष्यन्तगृहगमने कण्वेन सह विवादः। **आ०** ९६। २६–४१ ॥

तस्या भरतेन कण्वशिष्यैश्च सह हास्तिनपुरगमनं। **आ०** ९७। १८ ॥

+ **शकुन्तलोपाख्यानं**। **आ०** ८९–१०० ॥

**शक्तिः**। ऋषिः। वसिष्ठपुत्रः। तन्माताऽरुन्धती। तद्भार्या अदृश्यन्ती। तत्पुत्रः पराशरः। **आ०** १९२। ११ ॥

तस्य कल्माषपादेन भक्षणं। **आ०** १९२। ४९ ॥

**शक्रः**। द्वादशादित्येष्वन्यतमः। **आ०** ६६। १५ ॥ इन्द्रशब्दं पश्यत।

**शक्रदेवः**। क्षत्रियः। कालिङ्गराजस्य भानुमतः पुत्रः। भीमसेनेन हतः। **भी०** ५४। २४ ॥

+ **शक्रबकसंवादः**। **व०** १९६ ॥

१ **शङ्कुकर्णः**। सर्पः। **आ०** ५७। १५ ॥

२ **शङ्कुकर्णः**। क्षत्रियः। सो० वं० जनमेजयस्य पुत्रः। **आ०** ६३। ८७ ॥

**शङ्कुकर्णेश्वरः**। **व०** ८०। ७१ ॥

१ **शङ्खः**। क्षत्रियः। विराटराजस्य पुत्रः। तन्माता सुरथा। रथोदारः। **उ०** १७१। १५ ॥ **आ०** २०१। ८ ॥ **स०** ७। ११ ॥ तस्य सगर्भ्यो भ्राता श्वेतः। **वि०** २१। १८ ॥

तस्य युद्धं। **वि०** ३४। २४ ॥ **भी०** ४९। २६ ॥

तस्य वधो द्रोणाचार्येण। **भी०** ८२। २३ ॥

२ **शङ्खः** । सर्पः । **आ० ३५** । ८ ॥ **उ० १०३** । १२ ॥

३ **शङ्खः** । असुरः । **स० ९** । १७ ॥

४ **शङ्खः** । लिखितस्य भ्राता ऋषिः । **शां० २३** । १८ ॥

**शङ्खतीर्थं** । **श० ३८** । १९ ॥

**शङ्खपिण्डः** । सर्पः । **आ० ३५** । १३ ॥

**शङ्खमुखः** । सर्पः । **आ० ३५** । ११ ॥

**शङ्खमेखलः** । ऋषिः । **आ० ८** । २४ ॥

**शङ्खशिराः** । सर्पः । **आ० ३५** । १२ ॥

**शङ्खिनीतीर्थं** । **व० ८१** । ५१ ॥

**शची** । इन्द्रस्य भार्या । पुलोमनाम्नोऽसुरस्य पुत्री । जयन्तस्य माता । इन्द्राणी । **स० ७** । ४ ॥ **११** । ४२ ॥

तस्याः सूर्येण संवादः । **अनु० १४** । ५–६ ॥

**शतकुम्भा** । नदी । **व० ८२** । १० ॥ **भी० ९** । १९ ॥

**शतचन्द्रः** । क्षत्रियः । सुबलस्य गान्धारराजस्य पुत्रः । भीमसेनेन हतः । **द्रो० १५८** । २३ ॥

**शतज्योतिः** । सुभ्राजस्य पुत्रः । **आ० १** । ५७ ॥

**शतद्युम्नः** । राजर्षिः । तस्य मुद्गलाय ऋषये गृहदानेनोत्तमलोकप्राप्तिः । **शां० २४०** । ३२ ॥ **अनु० २००** । २१ ॥

**शतद्रुः** । पुत्रमरणेन जीविते निर्विण्णस्य आत्मानं त्यक्तुकामस्य वसिष्ठस्य स्वस्मिन्पतनादात्मानं शतधा विभज्य स्थिता हैमवती नाम नदी । **आ० १९३** । ९–१० ॥ **स० ९** । २३ ॥ **भी० ९** । १५ ॥ The river Sutlej: it is also called Ghaggar or the Ghara.

**शतधन्वा** । कलिङ्गराजकन्यास्वयंवरार्थमागतः कश्चन क्षत्रियः । **शां० ४** । ७ ॥

**शतपर्वा** । शुक्राचार्यभार्या । **उ० ११७** । १३ ॥

**शतबला** । नदी । **भी० ९** । २० ॥

**शतमुखः** । असुरः । तस्य रुद्राद्वरप्राप्तिः । **अनु० ४५** । ६८ ॥

**शतयूपः** । केकयवंश्यः । वानप्रस्थाश्रमो राजर्षिः । **आश्र० २०** । १२ ॥

+ **शतरुद्रीयं** । व्यासेनार्जुनं प्रति कथिता रुद्रस्तुतिः । **द्रो० २०३** । २९ ॥

**शतशीर्षा** । वासुकेर्भार्या । **उ० ११७** । १७ ॥

**शतशृङ्गः** । पर्वतः । **आ० १२४** । ५१ ॥

तस्य कुन्त्या अङ्के स्थितस्य भीमसेनस्य अधःपतनेन संचूर्णनं । **आ० १२९** । ६२ ॥

**शतशौचं** । तीर्थं । **व० ८१** । २१ ॥

**शतसाहस्रकं** । तीर्थं । **व० ८२** । ७३ ॥

१ **शतानन्दः** । सप्तर्षिष्वन्यतमस्य गौतमस्य पुत्रः । तन्माता ब्रह्मणो मानसपुत्री अहल्या । अयं विदेहानां पुरोहितः । **अनु० ६५** । ८ ॥

२ [**शतानन्दः** । अन्यस्य गौतमनाम्न ऋषेः पुत्रः । तन्माता विन्ध्याश्वराजपुत्री अहल्या । तद्भ्राता चिरकारी । तत्पुत्रः कृपाचार्यस्य मूलपुरुषः सत्यधृतिः । भा० ९ । २१ ॥]

१ **शतानीकः** । क्षत्रियः । सो० वं० पाण्डवप्रपौत्रस्य जनमेजयस्य पुत्रः । तत्पुत्रोऽश्वमेधदत्तः । **आ० ६३** । ८७ ॥

२ **शतानीकः** । मत्स्यराजस्य विराटस्य भ्राता । **वि० ३३** । १९ ॥ भीष्माचार्येण हतः । **भी० ११८** । २७ ॥ द्रोणाचार्येण हतः । **द्रो० २१** । २८ ॥ **१५९** । ४० ॥

तस्य शल्येन सह युद्धं । **द्रो० १६८** । २९ ॥

३ **शतानीकः** । क्षत्रियः । सो० वं० नकुलस्य पुत्रः । तन्माता द्रौपदी । **आ० ६३** । ७४ ॥ **६४** । १६५ ॥

तस्य तन्नामकरणे कारणं । **आ० २४७** । ८० ॥

तस्य वधः अष्टादशरात्रौ द्रौणिना । **सौ० ८** । ६४ ॥

४ **शतानीकः** । सो० वं० कश्चन राजर्षिः **आ० २४७** । ८० ॥

**शतायुः** । क्षत्रियः । सो० वं० पुरूरवसः पुत्रः **आ० ६९** । २८ ॥

+ **शत्रुः** । तल्लक्षणं । **शां० ८०** ॥

तच्छब्दनिर्वचनं । **क० ३६** । ३५ ॥

स च त्रयोदशविधः । **शां० १६१** । ३ ॥

**शत्रुघ्नः** । क्षत्रियः । सू० वं० दशरथस्य पुत्रः । तन्माता सुमित्रा । तद्भ्राता लक्ष्मणः । **स० ५०** । २७ ॥ **व० २७५** । ८ ॥

१ **शत्रुञ्जयः** । क्षत्रियः । द्रुपदस्य पुत्रः । **द्रो० ३२** । ६१ ॥ अश्वत्थाम्ना हतः । **द्रो० १५७** । १८१–१८२ ॥

२ **शत्रुञ्जयः** । सूतः । कर्णस्य भ्राता । अर्जुनेन हतः । **द्रो० ३२** । ६१ ॥

३ **शत्रुञ्जयः** । क्षत्रियः । कौरवपक्षीयः । अभिमन्युना पराजितः । **द्रो० ४८** । १५ ॥

४ **शत्रुञ्जयः** । क्षत्रियः । जयद्रथभ्राता । **व० २६६** । ११ ॥

५ **शत्रुञ्जयः** । क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **भी० ५१** । ८ ॥ ७९ । ५७ ॥ भीमसेनेन हतः । **द्रो० १३७** । ३० ॥

**शत्रुन्तपः** । कर्णस्यानुजः । अर्जुनेनोत्तरगोग्रहणे हतः । **वि० ५८** । १८ ॥

**शत्रुसहः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । भीमेन हतः । **द्रो० १३७** । ३० ॥

**शनिः । शनैश्चरः** ।

**शन्तनुः** । क्षत्रियः । सो० वं० प्रतीपस्य पुत्रः । तन्माता सुनन्दी । तद्भ्रातरौ देवापिः बाह्लीकश्च । **आ० ६३** । ४७ ॥ **१०१** । ५० ॥ तन्नामनिर्वचनं । **आ० ६३** । ४९ ॥

+ **शपथः** । **अनु० १४२** । ५६–७५ ॥ **१४३** । १६–४१ ॥

**शबराः** । देशः । **भी० ५०** । ५२ ॥ **द्रो ११९** । ५३ ॥

**शबलः** । सर्पः । **आ० ३५** । ७ ॥

**शबलाश्वः** । क्षत्रियः । सो० वं० अविक्षितः पुत्रः । **आ० १०१** । ४० ॥

१ **शमः** । धर्मप्रजापतेः पुत्रः । तद्भार्या प्राप्तिः । तद्भ्रातरौ कामो हर्षश्च । **आ० ६७** । ३२ ॥

२ **शमः** । अहर्नामकवसोः पुत्रः । तद्भ्रातरः ज्योतिः शान्तः मुनिश्च । **आ० ६७** । २३ ॥

३ + **शमः** । गुणः तस्य श्रैष्ठ्यं । **उ० २७** । २३ ॥ ७३ ॥

**शमठः** । गयाशिरनामकपर्वतस्थो ब्राह्मणः । **व० ९३** । १९ ॥

**शमीकः** । ऋषिः । शृङ्गिणः पिता । **आ० ४१** । २१ ॥ [भा० १ । १८ ॥]

तस्य समाधिस्थस्य स्कन्धे परीक्षिद्राजेन मृतसर्पप्रक्षेपः । **आ० ४१** । ९ ॥

तस्य शिष्यो गौरमुखः । **आ० ४२** । १४ ॥

तस्य शृङ्गिणा विवादः परीक्षिच्छापदानस्यायुक्ततायां । **आ० ४२** । १–१२ ॥

+ **शमी** । वृक्षः । विराटनगरसमीपे श्मशानस्थे तस्मिन्वृक्षे पाण्डवैरायुधनिक्षेपः । **वि० ७** । १७ ॥

**शमीतीर्थं** । तीर्थं । **व० ८०** । ७२–७३ ॥

**शम्पाकः** । शम्याकशब्दं पश्यत ।

**शम्बरः** । दनुपुत्रोऽसुरः । **आ० ६६** । २२ ॥

तस्य इन्द्रेण सह ब्राह्मणमाहात्म्यविषये संवादः । **अनु० ७१** ॥

[तस्य वधः श्रीकृष्णपुत्रेण प्रद्युम्नेन । भा० १० । ५५ ॥ हरि० २ । १०७ ॥]

**शम्बुकः** । दाशरथिरामेण हतः शूद्रतापसः । **शां० १५२** । ६७ ॥ [रा० ७ । ७६ ॥]

**शम्भलग्रामः** । सम्भलग्रामशब्दं पश्यत ।

१ **शम्भुः** । रुद्रशब्दं पश्यत ।

**२ शम्भुः** । अग्निविशेषः । **व० २२३ । ५ ॥**

**शम्भवठा** । सुबलराजस्य पुत्री । गान्धार्याः स्वसा । धृतराष्ट्रस्य भार्या । **आ० १९९ । २४ ॥**

**शम्याकः** । ( **शम्पाकः** । ) ब्राह्मणः । **शां० १७५ । २ ॥**

+ **शम्याकगीता** । दारिद्र्यधनिकत्वयोः क्रमेणार्थानर्थसाधनत्वे । **शां० १७५ ॥**

+ **शय्यादानफलं** । **अश्व० १०३ । १९ ॥**

**शरणः** । सर्पः । **आ० ५७ । ६ ॥**

+ **शरणागतरक्षणफलं** । **अनु० ६७ ॥**

+ **शरतल्पं** । भीष्मस्य प्रायोपवेशनार्थमर्जुनेन निर्मितं बाणमयं तल्पं । **आ० २ । २५२ ॥ भी० १२० । १५ ॥ द्रो० ३ । १ ॥**

**शरद्वान्** । ऋषिः । **आ० ६४ । १४९ ॥** [ विन्ध्याश्वनामकपाञ्चालपुत्रस्याहल्याभर्तुर्गौतमस्य वंशे उत्पन्नस्य सत्यधृतेः पुत्रः। भा० ९ । २१ ॥]

तत्पुत्रौ कृपी कृपाचार्यश्च । **आ० ६४ । १४९ ॥**

तस्य तपस्यतो जालवतीनामकाप्सरोदर्शनात्स्कन्नाच्छरस्तम्बे पतिताद्रेतसः कृपस्य कृप्याश्चोत्पत्तिः । **आ० १४० । २–२० ॥**

**१ शरभः** । दनुपुत्रोऽसुरः । **आ० ६६ । २६ ॥**

**२ शरभः** । सर्पः । **आ० ५७ । ११ ॥**

**३ शरभः** । क्षत्रियः । शिशुपालस्य पुत्रः । तेनाश्वमेधाश्वरक्षणार्थमागतस्यार्जुनस्य पूजनं । **अश्व० ८४ । ३ ॥**

**४ शरभः** । क्षत्रियः । गान्धारराजस्य सुबलस्य पुत्रः । भीमसेनेन हतः । **द्रो० १५८ । २३ ॥**

**५ शरभः** । राजर्षिः । **स० ८ । १४ ॥**

**शरभङ्गः** । गौतमकुलोत्पन्नः ब्रह्मर्षिः । **व० २७८ । ४७ ॥**

**शरभङ्गाश्रमः** । **व० ८३ । ४२ ॥** दण्डकारण्ये गोदावरीतीरे । **व० २७८ । ४६ ॥**

+ **शरमयवेश्मनिर्माणं** । हयाप्यायनार्थमर्जुनेन । **द्रो० ९९ । ६३ ॥**

**शरावती** । नदी । **भी० ९ । २० ॥** The river Sabarmati in Guzerat. Ahmedabad stands on this river. 2. Sarawati appears to be the corruption of the river Saraswati in Fyzabad (Oudh.)

**शरासनः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ४ ॥** भीमसेनेन हतः । **द्रो० १३६ । २० ॥**

+ **शरीरस्य पाञ्चभौतिकत्वं** । **शां० १८२ । ४ ॥**

**शर्मिष्ठा** । असुरराजस्य वृषपर्वणः पुत्री । ययातेर्द्वितीया भार्या । तत्पुत्राः द्रुह्युः अनुः पूरुश्च । **आ० ६३ । ७ ॥ ६९ । ३८ ॥ ७७ । २१ ॥**

तया देवयान्याः कूपे प्रक्षेपः । **आ० ७२ । १३ ॥**

तया पुत्रोत्पादनार्थं ययातिं प्रति प्रार्थना । **आ० ७६ । ३६ ॥**

तस्याः पुत्रोत्पत्तिः । **आ० ७६ । ४३ ॥**

[तस्याः कथा । भा० ९ । १८ ॥ मत्स्य० २७–३२ ॥]

**१ शर्यातिः** । क्षत्रियः । सू० वं० वैवस्वतमनोः पुत्रः । तस्य कन्या सुकन्या । **व० १२३—१२६॥**

**२ शर्यातिः** । क्षत्रियः । सो० वं० प्राचीन्वतः पुत्रः । तन्माता आश्मकी । तद्भार्या त्रिशङ्कोर्दुहिता । तत्पुत्रोऽहंयातिः । **आ० ६३ । १२ ॥**

**१ शलः** । क्षत्रियः । सू० वं० परीक्षित्पुत्रः । तद्भ्रातरौ दलो बलश्चेति । **व० १९५ । ३८ ॥**

तस्य मृगयार्थं वनगमनं । तत्र वामदेवऋष्याश्रमगमनं च । **व० १९५ । ३८—४२ ॥**

**२ शलः** । क्षत्रियः । सो० वं० धृतराष्ट्रपुत्रः । **आ० १३१ । ४ ॥ क० ४६ । ८ ॥**

**३ शलः** । सर्पः । **आ० ५७ । ५ ॥**

**४ शलः** । क्षत्रियः । सो०वं० कुरुपुत्रजह्नुवंशीयस्य बाह्लीकराजपुत्रस्य सोमदत्तस्य पुत्रः । तद्भ्रातरौ भूरिः भूरिश्रवाश्चेति । **आ० २०१ । १५ ॥**

द्रौपदेयैर्हतः। द्रो० १०८। १-११॥ [भा० ९। २२॥]
तत्पुत्रस्य वधः धृष्टद्युम्नेन। भी० ६१॥
तच्छववर्णनं। स्त्री० २४। ९॥
**शलकरः**। सर्पः। आ० ५७। ९॥
१ **शलभः**। दनुपुत्रोऽसुरः। आ० ६६। २६॥
२ **शलभः**। पाण्डवपक्षीयः। कश्चन चैद्यः क्षत्रियः। कर्णेन हतः। क० ५१। ५०॥
**शल्यः**। मद्रराजः। आर्तायनिः। मद्रदेशाधिपतेः ऋतायनस्य पुत्रः। तत्स्वसा पाण्डोर्भार्या माद्री। अतिरथः। उ० १६५। २६॥ भी० ६२। १४॥
तस्य संह्लादांशत्वं। आ० ६८। ६॥
तत्पुत्रौ रुक्माङ्गदो रुक्मरथश्च। आ० २०१। १३-१४॥
तस्य पराजयो भीमसेनेन। आ० २०५। ३४॥ द्रो० १५॥
तस्य युद्धे साहाय्यकरणार्थमागमनं। उ० ८। १॥
तद्युद्धवर्णनं। द्रो० १५॥
तस्य सैनापत्येऽभिषेकः। श० ६। १४॥
तेन कर्णस्य तेजोहरणार्थं तदुपालम्भः। क० ३१। ३३॥
तद्वर्हणं कर्णेन। क० ३७॥
तेन दुर्योधनप्रार्थनया कर्णसारथ्याभ्युपगमः। क० ३३
तेन कर्णस्य युद्धप्रोत्साहनं। क० ८३। ३८-४८॥
तत्पराक्रमवर्णनं। श० १२॥
तस्य भीमसेनेन सह गदायुद्धं। द्रो० १५॥ श० ११॥
तस्य वधो युधिष्ठिरेण। श० १६। ५०॥
तद्वधकथा संक्षेपेण। श० १। १०॥
तदनुजवधो युधिष्ठिरेण। श० १६। ६०॥
+ **शवानां** युद्धे मृतानां वर्णनं गान्धार्या। स्त्री० १६—२२॥

**शशबिन्दुः**। राजर्षिः। स० ८। २७॥ शा० २८। १०५॥ [वृष्णिवंश्यस्य चित्ररथस्य पुत्रः। भा० ९। २३॥]
तस्य शतसहस्रं भार्याः। एकैकस्यां भार्यायां सहस्रं सहस्रं पुत्राः। द्रो० ६५। २॥
तस्य कथा। द्रो० ६५॥ शां० २८। १५—१००॥ २०७। ११॥
[तत्पुत्री बिन्दुमती मान्धातुर्भार्या। भा० ९। ६॥ वायु० ८८॥]
**शशयानतीर्थं**। व० ८०। ११४॥
**शशलोमा**। राजर्षिः। आश्र० २१। १४॥
**शशादः**। क्षत्रियः। सू० वं० इक्ष्वाकुपुत्रस्य विकुक्षेर्नामान्तरं। तत्पुत्रः ककुत्स्थः। व० २०५। १॥
[तस्य कथा। भा० ९। ६॥]
**शशिकाः**। (**शशकाः**) देशः। भी० ९। ४६॥
**शाकद्वीपः**। भी० ११। ८॥
**शाकलः**। मद्रदेशस्य राजधानी। स० ३५। १४॥ क० ३७। ३५॥ चन्द्रभागेरावत्योर्मध्ये विद्यमानो देशः॥ The capital of Madra Desa.
**शाकलद्वीपः**। अयं इन्द्रप्रस्थस्योत्तरे विद्यमानो देशः। नतु द्वीपः। तस्य राजा प्रतिविन्ध्यः। तेन सहार्जुनस्य राजसूयदिग्विजये युद्धं। स० २७। १४॥
**शाकल्यः**। शिवभक्त ऋषिः। अनु० ४५। ८४॥
+ **शाकुनिककथा**। ज्ञातिविरोधस्यानर्थहेतुतायां दृष्टान्तत्वेन विदुरेण धृतराष्ट्राय कथिता उ० ६४। १-१६॥
**शाक्तेयः**। पराशरः। आ० १९८। १॥
**शाखः**। स्कन्दस्य मूर्त्यन्तरं। श० ४५। ३७॥
**शाखम्भरी**। देव्याः स्थानं। व० ८२। १२॥
**शाण्डिली**। शाण्डिल्यऋषेः कन्या। ऋषभकूट-

पर्वतस्था । उ० ११३ । १ ॥ इयमेव स्वयंप्रभा । भी० ८ । ९ ॥ [ रा० ४ । ५१ ॥ ]

तस्या अपध्यानेन गरुडस्य पक्षभ्रंशः । तस्याः प्रसादात्पुनस्तस्य पक्षप्ररोहणं च । उ० ११३ । ५ ॥ २० ॥ [ स्कान्दपु० नागरखं० ८१—८२ ॥ ]

तस्याः सुमनानाम्न्या राजकन्यया पतिव्रतामाहात्म्यविषये संवादः । अनु० १८५ ॥

१ **शाण्डिल्यः** । मरीचिपुत्रस्य काश्यपस्य वंशे उत्पन्नः ऋषिः । तद्वंशे कस्मिंश्चित्काले वैश्वानरनामाग्निरुत्पन्न इत्यग्नेः शाण्डिल्यगोत्रत्वं । स० ४ । २३ ॥ शां० ४६ । ७ ॥

२ **शाण्डिल्यः** । अग्नेर्जात ऋषिः । अनु० ५३ । २६ ॥

**शान्तः** । अहर्नामकवसोः पुत्रः । आ० ६७।२३॥

**शान्तनवः** । भीष्मः । आ० १०८ । ३ ॥

**शान्तनुः** । शन्तनुशब्दं पश्यत ।

तस्योत्पत्तिः । आ० १०३ । २०–२१ ॥

तन्नामनिर्वचनं । आ० १०३ । २२ ॥

तस्य पूर्वजन्मनि महाभिषङ्नामकसूर्यवंशीयराजत्वं । आ० १०३ । २१ ॥

तेन कृपाचार्यस्य कृप्याश्च पोषणं । आ० १४० । १३—१८ ॥

तस्य गङ्गया विवाहः । आ० १०४ ॥ [ देवीभा० २ । ३ ॥ ]

तस्य दाशराजकन्यया सत्यवत्या विवाहः । आ० १०८ । १ ॥

तस्य गङ्गायां जातः पुत्रो भीष्मः । आ० ६३ । ५० ॥

तस्य सत्यवत्यां जातौ पुत्रौ चित्राङ्गदो विचित्रवीर्यश्च । आ० ६३ । ५२ ॥ १०८ । ३ ॥

[ तच्छ्राद्धकरणकाले भीष्मेण दर्भेष्वेव पिण्डनिक्षेपः । हरि० १ । १६ ॥ ]

[ तस्य कथा । भा० ९ । २२ ॥ तस्य परिवेत्तृत्वात्तद्राज्ये अनावृष्टिः पश्चात्तच्छान्तिश्चेत्यादिकथा । विष्णु० ४ । २० ॥ ]

**शान्ता** । अङ्गराजस्य रोमपादस्य पुत्री । ऋश्यशृङ्गऋषेर्भार्या । व० ११४ । ११ ॥

[ सा दशरथस्य पुत्री लोमपादाय दत्ता । भा० ९ । २३ ॥ ]

[ सा लोमपादस्यैव पुत्री । तस्यैव दशरथ इति नामान्तरं । हरि० १ । ३१ ॥ ]

**शान्तिः** । अङ्गिरसः पुत्रः । अनु० १३२ । ४२ ॥

**शारदण्डायनिः** । क्षत्रियः । केकयः । तद्भार्या श्रुतसेना । तत्पुत्रा दुर्जयप्रभृतयः । आ० १२६ । ३७ ॥

**शारद्वतः** । कृपाचार्यः । आ० १५२ । ३० ॥

१ **शारद्वती** । द्रोणाचार्यभार्या कृपी ।

२ **शारद्वती** । अप्सराः । आ० १३२ । ४६ ॥

**शार्ङ्गरवः** । ऋषिः । जनमेजयकृते सर्पसत्रे ऋत्विग्ब्रह्मा । आ० ५३ । ६ ॥

**शार्दूली** । क्रोधवशायाः पुत्री । सिंहव्याघ्राणां माता । आ० ६७ । ६१–६५ ॥

**शालग्रामः** । क्षेत्रं । व० ८२ । १२४ ॥ A Place near the source of the river Gandaki.

**शालिपिण्डः** । सर्पः । आ० ३५ । १४ ॥

**शालिशिराः** । देवगन्धर्वः । आ० ६६ । ४४ ॥

**शालिशूर्पं** । तीर्थं । व० ८१ । १०७ ॥

**शालिहोत्रः** । कपिलऋषेः पुत्रः अश्वशास्त्रप्रणेता । १६८ । ५ ॥ व० ६९ । ३० ॥

**शालिहोत्रसरः** । तत्र पाण्डवानां गमनं । आ० १६८ । २ ॥

**शालूकिनी** । तीर्थं । व० ८१ । १३ ॥

१ **शाल्मलिः** । क्षत्रियः । सो० वं० अविक्षितः पुत्रः । आ० १०१ । ४० ॥

२ **शाल्मलिः** । द्वीपः । भी० १२ । ६ ॥

३ **शाल्मलिः** । वृक्षः । शां० १५३ । ४ ॥

क्रोष्टा । तद्वंशीयो ज्यामघः । तद्वंशोत्पन्नस्य दमघोषस्य पुत्रः । तन्माता श्रीकृष्णस्य पितृष्वसा श्रुतश्रवा । **व० १५ । २॥ स० ६६ । २३॥**

[ अयं पाण्डवानां मातृष्वस्रीयः । भा० ७ । १ ॥ ९ । २४ ॥ ]

तस्य सुनीथ इति नामान्तरं । **स० ३९ । ५४ ॥ ४२ । १ ॥**

तस्योत्पत्तिः । **स० ६६ । १ ॥**

तद्धननाय भीमसेनेन प्रयतनं । **स० ६५ । ९ —१४ ॥**

तेन भीष्माचार्योपालम्भः । **स० ६४ ॥**

तस्य हिरण्यकशिप्वंशत्वं । **आ० ६८ । ५ ॥ स० ७० । ४६ ॥**

तेन श्रीकृष्णोपालम्भः । **स० ३९ । ५१ ॥ ४०॥**

तद्वधः श्रीकृष्णेन । **स० ७० । ५० ॥** [ भा० १० । ७४ ॥ ]

तस्य पुत्रः सुकेतुः । द्रोणाचार्येण हतः । **क० ३ । ३२ ॥**

तस्यान्यः पुत्रः धृष्टकेतुः । द्रोणाचार्येण हतः । **द्रो० १२५ । ३९ ॥**

तस्य ततोप्यन्यः पुत्रः शरभः । **अश्व० ८४ । ३ ॥**

तत्पुत्री नकुलभार्या रेणुमती । **आ० ६३ । ७८ ॥**

तेन बभ्रुभार्यापहारः । **स० ६८ । १८ ॥**

+ **शिशुपालवधपर्व । स० ६३—७२ ॥**

+ **शिशुरूपी नारायणः** । मार्कण्डेयेन तस्य दर्शनं । **व० १९१ । ९१ ॥** [ भा० १२ । ९ ॥ ]

**शिशुरोमा** । सर्पः । **आ० ५७ । १० ॥**

**शीघ्रा** । नदी । **भी० ९ । २९ ॥**

**शीततोयवहा** । नदी । **व० ८८ । २५ ॥**

**शीतपूतना** । स्कन्दमातृगणेष्वन्यतमा । **व० २३० । २८ ॥**

**शीतवनं** । क्षेत्रं । **व० ८१ । ५९ ॥**

+ **शीलं** । सत्स्वभावः । तस्य धर्मादिकारणत्वं । **शां० १२४ ॥**

१ **शुकः** । क्षत्रियः । गान्धारराजस्य शकुनेरनुजः । सुबलराजस्य पुत्रः । इरावता हतः । **भी० ९० । ३०—४९ ॥**

२ **शुकः** । कृष्णद्वैपायनपुत्रः । शुकीरूपधारिण्यां घृताच्यां जातः । **आ० ६४ । १३१ ॥ स० ४ । १७ ॥**

तदुत्पत्तिकथा । **शां० ३३२ ॥** [ देवीभा० १ । १४ ॥

तेन गन्धर्वादीनां भारतकथाकथनं । **आ० १ ।१२४॥**

तस्य व्यासेन सह जगत्सृष्ट्यादिविषये संवादः । **शा० २३८ ॥**

तं प्रति व्यासेन धर्मानुशासनं । **शां० ३२९ ॥**

तेन विद्याभ्यासार्थं जनकराजसमीपगमनं । **शां० ३३३ ॥**

तेन कैलासशिखरारोहणं । **शां० ३३९ । ६५ ॥**

तस्य नारदेनोपदेशः । **शां० ३३७—३३९ ॥**

[ तस्य भार्या पितॄणां कन्या पीवरी । तत्पुत्री अणुहस्य भार्या कृत्वी यस्याः पुत्रो ब्रह्मदत्तः । भा० ९।२१॥ मत्स्य० १५ ॥ हरि० १ । १९–२० ॥ ]

[ तस्य भार्या पितॄणां कन्या पीवरी । तत्पुत्राश्चत्वारः । कृष्णः गौरप्रभः भूरिः देवश्रुतः इति । तत्कन्या कीर्तिः अनुहस्य भार्या । इति देवीभा० १ । १९ ॥ ]

३ **शुकः** । रावणमन्त्री राक्षसः । **व० २८४ । ५२ ॥**

४ **शुकः** । पक्षी । तेन सहेन्द्रस्य संवादः । **अनु० ११ ॥**

**शुकी** । ताम्रायाः पुत्री । तत्पुत्राः शुकपक्षिणः । **आ० ६७ । ५९ ॥**

१ **शुक्तिमती** । शुक्तिमत्पर्वतादुत्पन्ना नदी । **आ० ६४ । ४८ ॥ भी० ९ । ३५ ॥** The river Suvarnarekha in Orissa. 2. The river Vetravati in Malwa.

२ **शुक्तिमती** । शुक्तिमती नदीतीरस्था चेदिदेशस्य राजधानी । धृष्टकेतोर्नगरी । **व० २२ । ५०॥**

तस्यां कोलाहलनाम्नः पर्वतादुपरिचरवसुभार्याया गिरिकाया उत्पत्तिः । आ० ६४ । ५१–५३ ॥

**शुक्तिमान्** । पर्वतः । स० ३१ । ५ ॥ ९ । ११ ॥ The western portion of the Vindhya Range near Ujjain.

१ **शुक्रः** । भृगोः पुत्रः । तन्माता पुलोमा । तस्य भ्राता च्यवनः । आ० ६७ । ४२ ॥ स० ११ । २९ ॥ तत्पुत्री देवयानी । आ० ७० । १ ॥

तस्य कथा । आ० ६९—७७ । शां० २९५ ॥

तद्भार्या शतपर्वा । उ० ११७ । १३ ॥

[ तद्भार्या प्रियव्रतपुत्री ऊर्जस्वती । तस्याः पुत्री देवयानी । भा० ५ । १ ॥ ]

[ तद्भार्या पुरन्दरस्य कन्या जयन्ती । तस्याः पुत्री देवयानी । मत्स्य० ४७ ॥ ]

तत्पुत्री देवी । सा वरुणस्य भार्या । आ० ६७ । ५२ ॥

[ तन्मातुर्विष्णुना हननं । वायु० ९७ । देवीभा० ४ । ११ ॥ मत्स्य० ४७ ॥ ]

[ तत्पुत्रौ शण्डामर्कौ । भा० ७ । ५ ॥ ]

तेन कुबेराद्धनापहारः । शां० २९५ । ९ ॥

तेन रुद्रशिश्नाद्बहिर्निर्गमनं । शां० २९५ । ३२ ॥

तन्नामनिर्वचनं । शां० २९५ । ३२ ॥

तत्कृतः पुष्करास्तेयशपथः । अनु० १४३ । २४ ॥

तस्य पुष्पधूपदीपादिदानविषये महाबलिना संवादः । अ० १५५ ॥

२ **शुक्रः** । शर्यातेः पुत्रः । तेन पाण्डवेभ्यो धनुर्विद्योपदेशः । आ० १३३ । ५१ ॥

३ **शुक्रः** । क्षत्रियः । पाण्डवपक्षीयः पाञ्चाल्यः । कर्णेन हतः । क० ५१ । ४६—४७ ॥

१ **शुचिः** । प्रायश्चित्ताग्निः । व० २२३ । २४ ॥ २६ ॥

२ **शुचिः** । विश्वामित्रऋषिपुत्रः । अनु० ७ । ५४ ॥

३ **शुचिः** । चेदिराजस्य सुबाहोः सार्थवाहः । व० ६१ । १२७ ॥

**शुचिका** । अप्सराः । आ० १३२ । ४४ ॥

**शुचिश्रवाः** । श्रीमान्नारायणः । तन्नामनिर्वचनं । शा० ३५२ । २६ ॥

। अप्सराः । स० १० । ११ ॥

**शुद्धास्पद** तीर्थं । व० ८१ । ७७ ॥

**शुनकः** । ऋषिः च्यवनपुत्रस्य प्रमतेः पुत्रः । तन्माता घृताची । तद्भार्या मेनकायाः पुत्री स्थूलकेशेन पोषिता प्रमद्वरा । तत्पुत्रः शौनकस्य पिता शुनकः । आ० ८ । स० ४ । २३ ॥ अनु० ८ । ६५ ॥

२ **शुनकः** । क्षत्रियः । सो० वं० आयोर्वंशोत्पन्नस्य गृत्समदस्य पुत्रः । आ० ६८ ॥ ३८ ॥

+ **शुनः कथा** । शां० ११६—११७ ॥

**शुनःशेपः** । भृगुकुलोत्पन्नस्य ऋचीकऋषेर्मध्यमः पुत्रः । यो हरिश्चन्द्रयज्ञे पशुभूतो विश्वामित्रेण मोचितः । अनु० ६ । ६ ॥

[ तस्य कथा । भा० ९ । ७ ॥ हरि० १ । २७ ॥ रा० १ । ६१ ॥ देवीभा० ७ । १६ ॥ ऋचीकस्यैव अजीगर्त इति नामेति भाति । ]

**शुनस्सखः** । त्रिदण्डसंन्यासरूपवानिन्द्रः । अनु० १४२ । ४५ ॥

**शुभा** । गान्धारराजस्य सुबलस्य पुत्री । आ० ११९ । १० ॥

**शुभाङ्गदः** । द्रौपदीस्वयंवरार्थमागतः कश्चन क्षत्रियः । आ० २०१ । २२ ॥

**शुभाङ्गी** । सो० वं० कुरुराजस्य भार्या । तत्पुत्रो विदूरथः । आ० ६३ । ४२ ॥

**शूद्रः** । चतुर्थवर्णः । तस्य लक्षणं । शां० १८७ । ७ ॥

तस्य कुलपतेश्च कथा । अनु० ३१ ॥

तस्याध्ययनं नास्ति । अनु० ३१ । ४—५ ॥ अश्व० ११८ । १३ ॥

तं प्रत्युपदेशस्यानर्थहेतुत्वं । **अनु० ३१ ॥**

तस्य धर्माः । **अनु० १४६ । १ ॥ अश्व० ११८ । १५ ॥**

तस्य यतिशुश्रूषाधिकारः । **अनु० १४७ ॥**

**शूरः** । क्षत्रियः । यदुकुलोत्पन्नस्य देवमीढस्य पुत्रः । तद्भार्या मारिषा । तत्पुत्रा वसुदेवादयः । **आ० ६८ । १२९ ॥ १२० । १ ॥**

तस्य पुत्र्यः कुन्तीप्रभृतयः । कुन्तीशब्दे द्रष्टव्याः । [ भा० ९ । २४ ॥ हरि० १ । ३४ ॥ ]

**शूरसेनः** । क्षत्रियः । पाण्डवपक्षीयः पाञ्चाल्यः । कर्णेन हतः । **क० ४३ । १५ ॥**

**शूरसेनाः** । देशः । तस्य राजधानी मथुरा । **भी० ९ । ३९ ॥ ५२ ॥** The kingdom of which Mathura was the capital.

**शूरसेनी** । सो० वं० पूरोः पुत्रस्य प्रवीरस्य भार्या । तत्पुत्रो मनस्युः । **आ० ८८ । ५ ॥**

**शूर्पणखा । ( शूर्पनखी । )** खरराक्षसस्य स्वसा राक्षसी । राकायाः पुत्री । **व० २७६ । ८ ॥**

तस्या नासिकाछेदो लक्ष्मणेन । **व० २७८ ॥**

**शूर्पारकः** । देशः । जामदग्न्यावासभूतः । **शां० ४८ । ६८ ॥ स० ३२ । ६७ ॥ व० ८३ । ४३ ॥** Shurpalya near Jamkhandi in the District of Bijapur. ( Bombay.)

**+ शूलारोपणं** । माण्डव्यस्य । **आ० ११६ । १४ ॥**

**+ शृगालः** । सृगालशब्दं पश्यत ।

तस्याग्निवक्रत्वं । **व० २२६ । १८ ॥**

**शृङ्गबेरः** । सर्पः । **आ० ५७ । १३ ॥**

**शृङ्गबेरपुरं** । भागीरथ्या उत्तरतीरस्थं गुहनामकस्य निषाधाधिपस्य पुरं । **व० ८३ । ६५ ॥** Sringaur on the river Ganges, eighteen miles north west of Allahabad.

१ **शृङ्गवान्** । पर्वतः । **स० २९ । ६३ ॥ भी० ६ । ५ ॥**

२ **शृङ्गवान्** । गालवस्य ऋषेः पुत्रः । तद्भार्या वृद्धकन्या । **श० ५३ । १५ ॥**

**शृङ्गी** । आङ्गिरसकुलोत्पन्नस्य शमीकऋषेः गवि जातः पुत्रः । **आ० ४० । २५ ॥ ५० । २ ॥**

तेन परीक्षिद्राजाय शापदानं । **आ० ४१ । १४ ॥** [भा० १ । १८ ॥]

तस्य स्वपित्रा शमीकेन सह राज्ञे शापदानस्य युक्तायुक्ततायां विवादः । **आ० ४२ । १-११ ॥**

**+ शृङ्गाटकव्यूहः** । पाण्डवानां । **भी० ८७ । १७ ॥**

**शेषः** । कद्रूपुत्रो नागः । **आ० ३५ । ५ ॥ ६६ । ४१ ॥**

तेन तपश्चरणं ब्रह्मणो वरलाभः पृथिवीधारणं च । **आ० ३६ । ५-२२ ॥**

**शैखावत्यः** । ऋषिः । भीष्मात्साल्वाच्च प्रतिनिवृत्तया अम्बया तस्याश्रमे तपश्चरणं । **उ० १७५ । ३९-४६ ॥**

१ **शैब्यः** । वृष्णिवंश्यः क्षत्रियः । युधिष्ठिरसभायां । **स० ४ । ३१ ॥**

२ **शैब्यः** । गोवासनः क्षत्रियः । **द्रो० ९५ । ३९ ॥**

३ **शैब्यः** । श्रीकृष्णस्य रथाश्वचतुष्टयेऽन्यतमः । **व० २० । १३ ॥ अश्व० ११८ । ५६ ॥**

४ **शैब्यः** । कोटिकाश्यः । **व० २६८ । २ ॥**

५ **शैब्यः** । वृषादर्भिः । **अनु० १४१ । १२ ॥**

६ **शैब्यः** । श्रीकृष्णेन निर्जितः कश्चन क्षत्रियः । **व० १२ । ३१ ॥**

१ **शैब्या** । नदी । **भी० ९ । २४ ॥**

२ **शैब्या** । प्रतीपभार्या सुनन्दी । तत्पुत्रा देवापिप्रभृतयः । **आ० ६३ । ४७ ॥**

३ **शैब्या** । श्रीकृष्णभार्या मित्रविन्दा । **मौ० ८ । ७४ ॥**

४ **शैब्या** । सूर्यवंश्यस्य सगरराजस्य पत्नी सुमतिः । तत्पुत्रोऽसमञ्जाः । **व० १०५ । १० ॥**

५ **शैब्या** । द्युमत्सेनराजस्य भार्या । सत्यवतो माता । **व० २९९** । २ ॥

**शैलाभः** । विश्वेषु देवेष्वन्यतमः । **अनु० १३८** । ३२ ॥

**शैलालयः** । क्षत्रियः । भगदत्तस्य पितामहः । **आश्र० २१** । १० ॥

**शैलूषः** । गन्धर्वः । **स० १०** । २७ ॥

**शैलोदा** । नदी । **स० २९** । ४२ ॥

**शैवलाः** । देशः । **भी० ९** । ५४ ॥

**शोणः** । नदः । **व० ८३** । ८ ॥ **स० ९** । २५ ॥

**शोणा** । नदी । **भी० ९** । २९ ॥ The river Sone; it was the western boundary of Magadha.

**शोणाश्वः** । द्रोणाचार्यः । **वि० ५६** । ६ ॥ **द्रो० १२५** । २ ॥

**शोणितोदः** । यक्षः । **स० १०** । १८ ॥

+ **शौचं** । गुणः । तन्निरूपणं । **अनु० १७०** ॥

**शौनकः** । भृगुवंश्यः । नैमिशारण्यवासी कुलपतिः भारतादीतिहासपुराणानां सौतिमुखाच्छ्रोता । **आ० १** । ५ ॥ ४ । १ ॥ **शां० ३४८** । ९१ ॥

तद्वंशकथनं । **आ० ५** । ६–११ ॥

१ **शौनकः** । इन्द्रोतापरनामा विप्रः । तेन पूरोः पुत्रस्य जनमेजयस्य ब्रह्महत्याया अश्वमेधयाजनेनापनोदनं । **शां० १४९–१५१** ॥

२ **शौनकः** । युधिष्ठिरेण सह वने उषितवान्कश्चन ब्राह्मणः । **व० २** । १४ ॥ **२६** । २३ ॥ **८३** । १२१ ॥

+ **श्मशानवृक्षः** । तस्मिन्पाण्डवानामायुधनिक्षेपः । **वि० ७** ॥

**श्यामः** । पर्वतः । **भी० ११** । १९ ॥

**श्यामायनः** । विश्वामित्रऋषेः पुत्रः । **अनु० ७** । ५५ ॥

+ **श्येनकपोतीयं** । ( **श्येनकपोतोपाख्यानं** ) । **व० १३२** । २१ ॥ **२००** ॥ **अनु० ६७** ॥

**श्येनचित्रः** । क्षत्रियः । **अनु० १७७** । ७० ॥

१ **श्येनजित्** । क्षत्रियः । इक्ष्वाकुकुलोत्पन्नस्य परीक्षित्पुत्रस्य दलराजस्य पुत्रः । **व० १९५** । ६३ ॥

२ **श्येनजित्** । पाण्डवपक्षीयः क्षत्रियः । **उ० १४१** । २७ ॥

+ **श्येनव्यूहः** । पाण्डवानां । **भी० ६९** । ५ ॥

**श्येनी** । ताम्रायाः पुत्री । विनतापुत्रस्यारुणस्य भार्या । तत्पुत्रौ संपातिर्जटायुश्च । **आ० ६७** । ५७ ॥

**श्रद्धा** । स्वायंभुवमन्वन्तरीयदक्षप्रजापतेः पुत्री । धर्मप्रजापतेर्भार्या । **आ० ६७** । १४ ॥

**श्रद्धा** । सूर्यस्य दुहिता । **शां० २७०** । ८ ॥

**श्रवाः** । शिवनामकब्राह्मणस्य पुत्रः । तत्पुत्रस्तमः । **अनु० ८** । ६३ ॥

+ **श्राद्धं** । पैतृकं कर्म । तत्र त्रीणि पवित्राणि । **आ० ८७** । २९ ॥

तत्र वर्ज्यानि धान्यानि । **अनु० १३८** ॥

तत्रानर्हा ब्राह्मणाः । **अनु० ६१** ॥ **१३७** ॥

तद्दिने मैथुननिषेधः । **अनु० १८८** । २४ ॥

+ **श्राद्धपर्व** । **स्त्री० २६–२७** ॥

+ **श्राद्धप्रकरणं** । **अनु० १३४–१३९** ॥ **१८८** ॥ **२३८** ॥ [ हरि० १ । १६–२४ ॥] गरुडपु० २१८–२२० ॥ मार्कण्डे० २८–३० ॥]

**श्रावस्तः** । ( **शावस्तः** ) । क्षत्रियः । सू० वं० युवनाश्वस्य पुत्रः । श्रावस्तीनामकपुर्या निर्माता । तत्पुत्रो बृहदश्वः । **व० २०५** । ४ ॥ [भा० ९ । ६ ॥]

**श्रीः** । महालक्ष्मीः । श्रीमतो नारायणस्य भार्या । तस्याः क्षीरार्णवादुत्पत्तिः । **आ० १८** । ४९ ॥ [भा० ८ । ८ ॥]

तया रुक्मिणीं प्रति स्वावासस्थानकथनं। **अनु० ३२** ॥
तस्याः भृगुऋषेः ख्यातिनामकभार्यायामुत्पत्तिः। **आ० ६७**। ५१ ॥ [भा० ४। १ ॥]
तस्याः शक्रेण संवादः। **शां० २३२** ॥
**श्रीकुञ्जतीर्थं**। **व० ८१**। १०८ ॥
**श्रीतीर्थं**। **व० ८१**। ४६ ॥
**श्रीपर्वतः**। **व० ८३**। १९ ॥ [तस्य श्रीशैल इति प्रसिद्धं नाम। कृष्णाजिल्लायां कृष्णानदीतीरे वर्तते। तदुपरि मल्लिकार्जुननाम्नः शिवस्य स्थानमस्ति।]
**श्रीमान्**। दत्तात्रेयपुत्रस्य निमिऋषेः पुत्रः। **अनु० १३८**। ५ ॥
**श्रीवहः**। सर्पः। **आ० ३५**। १३ ॥
**श्रुतः**। पाञ्चालराजस्य द्रुपदस्य पुत्रः। रात्रियुद्धे अश्वत्थाम्ना हतः। **द्रो० १५७**। १८२ ॥
१ **श्रुतकर्मा**। क्षत्रियः। सो० वं० अर्जुनस्य पुत्रः। तन्माता द्रौपदी। अस्य श्रुतकीर्तिरिति नामान्तरं। **आ० २४७**। ७५ ॥
तन्नामनिर्वचनं। **आ० २४७**। ७९ ॥
२ **श्रुतकर्मा**। क्षत्रियः। सो० वं० सहदेवस्य पुत्रः। तन्माता द्रौपदी। तस्य श्रुतसेन इति नामान्तरं। **भी० ४५**। ६६ ॥ **द्रो० २३**। ३२ ॥
तस्य सुदक्षिणनामकेन काम्भोजराजेन युद्धं। **भी० ४५**। ६६ ॥
तस्य वधः शिबिरे अश्वत्थाम्ना। **सौ० ८**। ६६ ॥
**श्रुतकीर्तिः**। क्षत्रियः। सो० वं० अर्जुनपुत्रः। तन्माता द्रौपदी। तस्य श्रुतकर्मेति नामान्तरं। **आ० ६३**। ७४ ॥ **६४**। १६५ ॥ **२४७**। ७५ ॥ **द्रो० २३**। ३३ ॥
तस्य शल्येन पराजयः। **क० १३** ॥
**श्रुतञ्जयः**। क्षत्रियः। त्रैगर्तः। अर्जुनेन हतः। **क० १८**। ११ ॥
**श्रुतध्वजः**। मत्स्यराजस्य विराटस्य भ्राता। **द्रो० १५९**। ४० ॥
१ **श्रुतर्वा**। कश्चन क्षत्रियः। तत्सकाशं प्रति धनार्जनार्थमगस्त्यस्य गमनं। **व० ९६**। १ ॥
२ **श्रुतर्वा**। क्षत्रियः। सो० वं० धृतराष्ट्रस्य पुत्रः। भीमसेनेन हतः। **श० २५**। २९ ॥
**श्रुतवर्मा**। क्षत्रियः। धार्तराष्ट्रनाममध्यपठितत्वादयमपि धृतराष्ट्रपुत्र इति भाति। **क० ४**। १८ ॥
**श्रुतश्रवा**। चेदिराजस्य दमघोषस्य भार्या। वसुदेवस्य भगिनी। श्रीकृष्णस्य पितृष्वसा। तत्पुत्रः शिशुपालः। **व० १५**। २ ॥
१ **श्रुतश्रवाः**। क्षत्रियः। **स० ८**। ९ ॥
२ **श्रुतश्रवाः**। ऋषिः। पाण्डवप्रपौत्रजनमेजयस्य पुरोधसः सोमश्रवसः सर्प्यां जातः पुत्रः। **आ० ३**। १३ ॥ **५३**। ९ ॥
१ **श्रुतसेनः**। तक्षकपुत्रः सर्पः। **आ० ३**। १४१ ॥
तद्भ्राता अश्वसेनः। **आ० २५३**। ५ ॥ **क० ९७**। १२ ॥
२ **श्रुतसेनः**। क्षत्रियः। सो० वं० सहदेवस्य पुत्रः। तन्माता द्रौपदी। **आ० ६३**। ७४ ॥ **६४**। १६६ ॥
तन्नामनिर्वचनं। **आ० २४७**। ८१ ॥
३ **श्रुतसेनः**। पाण्डवपौत्रस्य परीक्षितः पुत्रः। जनमेजयस्य भ्राता। **आ० ३**। १ ॥
**श्रुतसेना**। शारदण्डायनिभार्या। **आ० १२६**। ३७ ॥
**श्रुतानीकः**। क्षत्रियः। विराटस्य भ्राता। **द्रो० १५९**। ४० ॥
**श्रुतान्तः**। क्षत्रियः। सो० वं० धृतराष्ट्रस्य पुत्रः। भीमसेनेन हतः। **श० २५**। ९ ॥
१ **श्रुतायुः**। क्षत्रियः। सो० वं० धृतराष्ट्रस्य पुत्रः। भीमसेनेन हतः। **क० ४६**। ७—११ ॥

२ **श्रुतायुः** । द्रौपदीस्वयंवरार्थमागतः कश्चन क्षत्रियः । **आ० २०१** । २१ ॥ **स० ४** । ३४ ॥

३ **श्रुतायुः** । क्षत्रियः । कालिङ्गः । तद्भ्राता अश्रुतायुः । **क० ७६** । १४ ॥ तस्य भीमेन सह युद्धं । **भी० ५४** ॥ अर्जुनेन हतः । **द्रो० ९३** । २४ ॥

तत्पुत्रौ दीर्घायुः नियुतायुश्च । तयोर्वधः । **द्रो० ९३** । २७–२९ ॥

**श्रुतायुधः** । क्षत्रियः । कालिङ्गः । **स० ४** । ३२ ॥ **भी० १६** । ६ ॥

सः वरुणात्पर्णाशानद्यां जातः । श्रीकृष्णं प्रति स्वेन प्रयुक्तया गदया प्रतिनिवृत्तया हतः । **द्रो० ९२** । ५८–६० ॥

**श्रुतावती** । कस्यचन भरद्वाजनामकस्य ब्राह्मणस्य पुत्री । तया केनचिद्ब्राह्मणेन दत्तानां बदराणां पाचनार्थं स्वपादयोरपि दाहनं । **श० ४९** । १–३२ ॥

**श्रुताह्वः** । क्षत्रियः । पाण्डवपक्षीयः । अश्वत्थाम्ना हतः । **द्रो० १५७** । १८२ ॥

**श्रेणिमन्तः** । क्षत्रियाः । **स० ७८** । ९२ ॥

**श्रेणिमान्** । क्षत्रियः । **आ० ६८** । ५१ ॥ २०१ । ११ ॥ **स० ३२** । ५ ॥ **उ० १५१** । ६३ ॥ अतिरथः । **उ० १७१** । २७ ॥ **द्रो० २३** । ४२ ॥

**श्रौतश्रवः** । शिशुपालः । **व० १५** । २ ॥

**+श्वपचविश्वामित्रसंवादः** । **शां० १४१** ॥

१ **श्वसनः** । अमृतरक्षको देवः । तेन साकं गरुडस्य युद्धं । **आ० ३२** । १९ ॥

२ **श्वसनः** । सर्पः । **आ० ५७** । १७ ॥

**+ श्वा** । शुनकः । तस्य पुनः श्वानो भविष्यसीति शापदानकथा । **शां० ११६–११७** ॥

तेन सह पाण्डवानां स्वर्गं प्रति गमनं । **महा० १** । २६ ॥

**श्वानलोमापहतीर्थं** । **व० ८१** । ६१ ॥

**श्वासा** । श्वसनस्य माता । **आ० ६७** । १९ ॥

१ **श्वेतः** । मत्स्यराजस्य विराटस्य पुत्रः । तस्य प्रथमभार्यायां सुरथायां जातः । **वि० २१** । १८ ॥ उत्तरकुमारस्य भ्राता । **भी० ४७** । ४४ ॥

तस्य सगर्भ्यो भ्राता शङ्खः । **वि० २१** । १८ ॥

तस्य वधो भीष्माचार्येण । **भी० ४८** । ११ ॥

२ **श्वेतः** । पर्वतः । **व० २२७** । ११ ॥ **भी० ६** । ४ ॥ ५३ ॥

तत्र राजसूयदिग्विजयेऽर्जुनस्य गमनं । **स० २८** । २९ ॥

३ **श्वेतः** । प्राक्कालीनः कश्चन क्षत्रियः । इन्द्रस्य विमाने । **वि० ५३** । १३ ॥

४ **श्वेतः** । क्रोधवशापुत्र्याः श्वेतायाः पुत्रो दिग्गजः । **आ० ६७** । ६६ ॥

**श्वेतकिः** । सततं यज्ञनिरतः कश्चन क्षत्रियः । यस्य यज्ञेषु हविषामदनेनाग्नेरजीरणरोगः समभवत् । **आ० २४९** । १७–६९ ॥

**श्वेतकेतुः** । गौतमकुलोत्पन्नस्योद्दालकस्य पुत्रः । तस्य आरुणिरिति नामान्तरं । तस्य भ्राता नचिकेताः । तस्य स्वसा कहोडऋषेर्भार्या सुजाता । तेन स्त्रीपुरुषमर्यादाकरणं । **आ० १२८** । १२–४९ ॥

तेन जनमेजयस्य सर्पसत्रे सादस्यकरणं । **आ० ५३** । ७ ॥

तस्य देवलनामकविप्रपुत्र्या सुवर्चलया सह ज्ञानिनः पुरुषार्थसिद्धिविषये संवादः । तया सह तस्य विवाहश्च । **शां० २२४** ॥

सोऽष्टावक्रस्य मातुलः । **व० १३४** । १२ ॥

तस्याष्टावक्रेण सह जनकराजयज्ञाय गमनं । **व० १३५** । २१–२३ ॥

**श्वेतद्वीपः** । श्रीमन्नारायणस्य धामसु श्वेतद्वीपानन्तासनवैकुण्ठाख्येषु त्रिष्वन्यतमं । तद्वर्णनं । **शां० ३४३** । ८ ॥

तद्गतभगवन्महिमानुवर्णनं । **शां० ३४६–३५३ ॥**
तत्र नारदस्य गमनं । तत्कृतं श्वेतद्वीपवर्णनादिकं च । **शां० ३४३–३५३ ॥**

**श्वेतवाहनः ।** अर्जुनः । तन्नामनिर्वचनं । **वि० ४३ ।** २१ ॥ २८ ॥

**श्वेता ।** क्रोधवशापुत्री । तत्पुत्रः श्वेतो नाम दिग्गजः । **आ० ६७ ।** ६१ ॥

**श्वेताश्वः ।** अर्जुनः ।

**श्वैत्यः ।** शैब्यनृपतिपुत्रस्य सृञ्जयस्य नामान्तरं । **द्रो० ५५ ।** ५७ ॥

## ष.

\+ **षडङ्गानि । स० ५ ।** ६ ॥

**षडाननः ।** स्कन्दः । **व० २३३ ।** १० ॥

\+ **षष्ठदिवसयुद्धारम्भः। भी० ७५ ॥** तत्समाप्तिः । **भी० ७९ ॥**

**प्रियः ।** स्कन्दः । **व० २३३ ।** ६ ॥

**षाड्गुण्यं ।** सन्धिप्रभृतिगुणषट्कं । **स० ५ ।** ११॥

\+ **षोडशदिवसयुद्धारम्भः । क० ८ ॥** तत्समाप्तिः । **क० २१ ॥**

\+ **षोडशराजकीयं ।** अभिमन्युवधश्रवणदुःखिताय युधिष्ठिराय व्यासेन कथिता षोडशानां राज्ञां कथा । तेच—मरुत्तः ॥ १ ॥ सुहोत्रः ॥ २ ॥ अङ्गराजः ॥ ३ ॥ शिबिः ॥ ४ ॥ दाशरथिरामः ॥ ५ ॥ भगीरथः ॥ ६ ॥ दिलीपः ॥ ७ ॥ मान्धाता ॥ ८ ॥ ययातिः ॥ ९ ॥ नाभागोऽम्बरीषः ॥ १० ॥ शशबिन्दुः ॥ ११ ॥ गयः ॥ १२ ॥ रन्तिदेवः ॥ १३ ॥ दौष्यन्तिर्भरतः ॥ १४ ॥ वैन्यः पृथुः ॥ १५ ॥ परशुरामः ॥ १६ ॥ **द्रो० ५५–७० ॥** इयमेव कथा श्रीकृष्णेनापि कथिता । **शां०२८॥** तत्र परशुरामस्थाने सगरस्य कथोक्ता । इयानेवोभयोर्विशेषः ।

## स.

**संतोषः ।** हर्षः । तस्य परमसुखत्वं । **व० २ ।** ४६ ॥

**संन्यासः ।** यत्याश्रमः । तस्य परमपुरुषार्थसाधनत्वं । **अश्व० ४७ ॥**

**संन्यासी ।** यतिशब्दं पश्यत ।

**संयातिः ।** क्षत्रियः । सो० वं० नहुषस्य पुत्रः । **आ० ६९ ।** ३३ ॥

**संवरणः ।** क्षत्रियः । सो० वं० पूरुकुलोत्पन्नस्याजमीढपुत्रस्य ऋक्षस्य पुत्रः । तद्भार्या सूर्यपुत्री तपती । तत्पुत्रः कुरुः । **आ० ६३ ।** ४० ॥ **१०१ ।** २१ ॥ **१८७ ।** १२ ॥ **१८९ ।** ५६ ॥

तस्य विवाहः । **आ० १८९ ।** ३३ ॥

**संवर्तः ।** ऋषिः । अङ्गिरसः पुत्रः । **आ० ६७ ।** ५ ॥ **स० ७ ।** १९ ॥ **११ ।** २२ ॥ **अनु० १३२ ।** ४३ ॥

तद्भ्रातरौ उचथ्यो बृहस्पतिश्च । **आ० ६७ ।** ५ ॥

तेन बृहस्पत्युपद्रवमसहमानेनारण्यप्रवेशः । **अश्व० ६ ।** ६ ॥

तेन मरुत्तराजस्य याजनं । **अश्व० ९ ।** ४ ॥

तेनात्मानं हन्तुमागतस्येन्द्रस्य वज्रस्तम्भनं । **अश्व० १० ।** १७॥

**संवर्तकः ।** कालाग्निः । **भी० ७ ।** २८ ॥

**संवर्ततीर्थं । व० ८३ ।** ३२ ॥

\+ **संवर्तमरुत्तीयं । अश्व० ४—१० ॥**

**संवेद्यं । तीर्थं । व० ८३ ।** १ ॥

\+ **संशप्तकवधपर्व । द्रो० १७—३३ ॥**

**संशप्तकाः ।** ये शपथपूर्वकं युध्यन्ते ते राजानः । तेच प्रकृते त्रिगर्तराजपुत्राः सुशर्मादयः । नवकोट्यस्तदनुयायिनश्च । **आ० २ ।** २६२ ॥

तेषामर्जुनेन सह युद्धं । **द्रो० १७—२७ ॥ क० १८ ॥ ४८ ॥ ५५ ॥**

तेषां वधोऽर्जुनेन । **द्रो० २७ ॥ क० ५५ ॥**

**संश्रुत्यः ।** विश्वामित्रऋषेः पुत्रः । **अनु० ७ ।** ५५ ॥

**संसारः ।** संसृतिः । तस्य कान्तारत्वेन वर्णनं । **स्त्री० ५ ।** २ ॥

तस्य नदीत्वेन वर्णनं । **शां० २९६ । १२—१५॥**
[ तस्य पारोक्ष्येण वर्णनं पुरञ्जनोपाख्यानव्याजेन । भा० ४ । २५–२९ ॥ ]
**संह्रादः । ( संह्लादः )** । हिरण्यकशिपुपुत्रः । **आ० ६६ । १८ ॥**
**सक्तुप्रस्थः** । उञ्छवृत्तिर्ब्राह्मणः । तस्योपाख्यानं । **अश्व० ९२ ॥**
**सख्यं** । सौहार्दं । तत्समयोरेव भवतीति । **आ० १४१ । ६—७३ ॥**
**सगरः** । क्षत्रियः । सू० वं० । तत्पत्न्यौ द्वे । तत्रैका वैदर्भी । तत्पुत्राः षष्टिः सहस्राणि सागराः । अन्या शैब्या । तत्पुत्रोऽसमञ्जाः । **व० १०५ । ८ ॥** यमसभायां । **स० ८ । १९ ॥** इन्द्रविमाने । **वि० ५३ । १५ ॥**
तस्योपाख्यानं । **शां० २८ । १३० ॥** [ भा० ९ । ८ ॥ हरि० १ । १४–१५ ॥ ब्रह्म० ८॥ वायु० ८८ ॥ रा० १ । ३८ ॥ विष्णु० ४ । ३ ॥ ]
[ तस्य द्वे भार्ये । कश्यपदुहिता सुमतिः । विदर्भराजंदुहिता केशिनी चेति । विष्णु० ४ । ४ ॥ ]
तेनाश्वमेधकरणं । **व० १०६ । ११ ॥**
तस्यारिष्टनेमिना संवादः । **शां० २९४ ॥**
**सचिवः** । मन्त्री । **शां० ८२ । ६४ ॥**
+ **सचिवगुणाः** । मन्त्रिशब्दं पश्यत ।
+ **संकरजातिप्रभेदाः । अनु० ८३–८४ ॥**
**संकर्षणः** । बलरामः । तन्नामनिर्वचनं । **स० २३ । २१ ॥** बलरामशब्दं पश्यत ।
**सङ्गवः । ( समङ्गः )** । दुर्योधनस्य वल्लवः । **व० २४० । २ ॥**
**सङ्ग्रामजित्** । युधिष्ठिरसभायां । **स० ४ । २७ ॥**
१ **सञ्जयः** । विदुलापुत्रः । सौवीरः क्षत्रियः । **उ० १३३ । ३० ॥ १३४ । ७ ॥**
२ **सञ्जयः** । गवल्गणनामकसूतस्य पुत्रः । धृतराष्ट्रस्य सूतो मन्त्री च । **आ० ६४ । १३९ ॥**

तेन धृतराष्ट्राय हितोपदेशः । **स० १०३ ॥**
तस्य उपप्लाव्यगमनं । **उ० २३ । १ ॥**
तेन धृतराष्ट्रसमीपे पाण्डवोक्तवचनकथनं । **उ० ४७–४८ ॥**
तस्य व्यासानुग्रहेण भारतयुद्धे सार्वज्ञ्यप्राप्तिः । **भी० २ । ९ ॥**
तस्य युद्धं । **श० २४ । ५० ॥**
तस्य वधं प्रति सात्यकेरुद्यमो व्यासेन मोचनं च । **श० २९ । १९—२१ ॥**
तस्य पूर्वं व्यासदत्तदिव्यज्ञानस्य तिरोधानं । **सौ० ९ । ६२ ॥**
तेन धृतराष्ट्रस्य दावाग्निप्रवेशादनन्तरं हिमवत्पार्श्वगमनं । **आश्र० ३९ । ३३ ॥**
३ **सञ्जयः** । क्षत्रियः । सो० वं० । धृतराष्ट्रस्य पुत्रः । **श० २६ । ४ ॥**
४ **सञ्जयः** । क्षत्रियः । सौवीरराजस्य वृद्धक्षत्रस्य पुत्रः । जयद्रथस्य भ्राता । **व० २६६ । ११ ॥**
+ **सञ्जययानपर्व । उ० २०—३२ ॥**
+ **सञ्जीवनमणिः** । तेन उलूप्या अर्जुनोज्जीवनं । **अश्व० ८१ । १२ ॥**
**सण्डाः** । देशः । **भी० ९ । ४३ ॥**
**सतीनराः** । देशः । **स० ७८ । ९८ ॥**
+ **सत्यं** । यथार्थवचनं । तत्प्रशंसा । **आ० ९९ ।** ३०—३६ ॥ **शां० १६० ॥ अनु० ११० ॥**
तस्य लक्षणं । **शां० १०९ ॥**
१ **सत्यः** । श्रीमान्नारायणः । तन्नामनिर्वचनं । **उ० ६९ । १२ ॥**
२ **सत्यः** । कलिङ्गस्य चक्ररक्षकः । भीमेन हतः । **भी० ५४ । ७६ ॥**
३ **सत्यः** । उञ्छवृत्तिर्ब्राह्मणः । तद्भार्या पुष्करमालिनी । **शां० २७८ । ६ ॥**
**सत्यकः** । क्षत्रियः । सो० वं० यदुकुलोत्पन्नस्यानमित्रपौत्रस्य शिनेः पुत्रः । तत्पुत्रः सात्यकि-

नामा युयुधानः । **आ० २३९ । ११** ॥ युधिष्ठिरसभायां । **स० ४** । ३६ ॥

**सत्यकर्मा** । क्षत्रियः । त्रैगर्तराजपुत्रः । अर्जुनेन हतः । **श० २६** । ३७ ॥

**सत्यजित्** । क्षत्रियः । द्रुपदराजस्य पुत्रः । **आ० १४८** । ५० ॥ अतिरथः । **उ० १७१** । २४ ॥ **द्रो० १७** । ४५ ॥ द्रोणाचार्येण हतः । **द्रो० २१** । २१ ॥

१ **सत्यदेवः** । कलिङ्गस्य चक्ररक्षकः । भीमसेनेन हतः । **भी० ५४** । ७६ ॥

२ **सत्यदेवः** । क्षत्रियः । त्रैगर्तराजपुत्रः । अर्जुनेन हतः । **क० १८** । २१–२२ ॥

१ **सत्यधृतिः** । द्रौपदीस्वयंवरार्थमागतः कश्चन क्षत्रियः । **आ० २०१** । १० ॥

२ **सत्यधृतिः** । पाण्डवपक्षीयः कश्चन क्षत्रियः । रथोदारः । **उ० १७१** । १८ ॥ तस्य वधः । **क० ३** । ३१ ॥ तस्य सुचित्तपुत्रत्वात्सौचित्तिरिति नामान्तरं । **उ० १९६** । २८ ॥

**सत्यभामा** । श्रीकृष्णमहिषी । सत्राजितः पुत्री । तया श्रीकृष्णं प्रति तद्वासकारणप्रश्नः । **आ० २३८** । १० ॥

तया सह श्रीकृष्णस्येन्द्रलोकगमनं । **स० ५६** । ४० ॥ [ भा० १० । ५९ ॥ हरि० २ । ६४ ॥ विष्णु० ५ । ३० ॥ ]

तस्याः पाण्डवदिदृक्षया श्रीकृष्णेन सह काम्यकवनगमनं । **व० १८५** । ७ ॥

तया द्रौपदीं प्रति पतिवशीकरणोपायप्रश्नः । **व० २३४** । ४ ॥

[ तस्या विवाहः । भा० १० । ५६ ॥ हरि० १ । ३८ ॥ विष्णु० ४ । १३ ॥ ]

[ तस्याः क्रोधगृहप्रवेशः । हरि० २ । ६५ ॥ ]

तस्याः स्वलोकगमनार्थं तपोवनप्रवेशः । **मौ० ८** । ७५ ॥

**सत्यरथः** । क्षत्रियः । त्रैगर्तराजपुत्रः । रथोदारः । **उ० १६६** । ११ ॥

१ **सत्यवती** । गाधिराजस्य पुत्री । ऋचीकऋषेः पत्नी । तत्पुत्रो जमदग्निः । तद्भ्राता विश्वामित्रः । **व० ११६** । ३९ ॥ **शां० ४८** । १६ ॥ **अनु० ७** । ७ ॥ [ रा० १ । ३४ ॥ भा० ९ । १५ ॥ ]

तस्या विवाहः । **अनु० ७** । २० ॥

तस्याः पुत्रोत्पत्तिः । **अनु० ७** । ४६ ॥

२ **सत्यवती** । सू० वं० त्रिशङ्कोर्भार्या । केकयवंशोत्पन्ना । तत्पुत्रो हरिश्चन्द्रः । **स० १२** । १२ ॥

३ **सत्यवती** । अगस्त्यऋषिभार्या लोपामुद्रा । **व० ९४** । २९ ॥

४ **सत्यवती** । उपरिचरवसोः पुत्री । तद्वीर्यान्मत्स्या उदरे उत्पन्ना । **आ० ६०** । २ ॥ **६४** ॥ अधिकपाठे–४९ ॥

तस्याः गन्धवती काली मत्स्यगन्धा योजनगन्धा इति नामान्तराणि । व्यासस्य चित्राङ्गदविचित्रवीर्ययोश्च माता ।

सा पूर्वजन्मनि अच्छोदा नाम बर्हिषत्पितॄणां कन्या । शापाद्भूमावुत्पन्ना । **आ० ६४** । ९२ ॥

तस्यां कन्यात्वे एव पराशराद्व्यासोत्पत्तिः । **आ० ६४** । १२८ ॥

तस्याः शान्तनुराजेन विवाहः । **आ० १०८** । १ ॥

तस्यां चित्राङ्गदविचित्रवीर्ययोरुत्पत्तिः । **आ० १०८** । ३ ॥

तया भीष्मं प्रति स्वस्मिन्पराशराद्व्यासोत्पत्तिकथनं । **आ० ११४** । १६ ॥

तस्याः सस्नुषाया व्यासेन सह तपोवनगमनं । **आ० १३७** । १२ ॥

**सत्यवाक्** । देवगन्धर्वः । **आ० ६६** । ४३ ॥

१ **सत्यवान्** । दुर्योधनस्य सेनापतिः । महारथः । **उ० १६७** । ३० ॥

२ **सत्यवान्** । क्षत्रियः । साल्वदेशाधिपस्य द्युमत्सेनस्य पुत्रः । तस्य विवाहः । **व० २९६** ॥

तद्भार्या सावित्री। **व० २९५। ११॥** तस्य चित्राश्व इति नामान्तरं। **व० २९५। १३॥**
तस्य काष्ठाद्यानयनार्थं वनं गतस्य मारणाय यमागमनं। सावित्रीप्रार्थनया तेन तदुज्जीवनं च। **व० २९८॥**
तस्य राज्यप्राप्तिः। **व० ३००। ११॥**
तस्य पित्रा सह संवादः। **शां० २७३॥**
**सत्यव्रतः।** क्षत्रियः। दुर्योधनपक्षीयस्त्रैगर्तः। **भी० ६२। १७॥**
**सत्यव्रता।** गान्धार्याः स्वसा। धृतराष्ट्रस्य भार्या। **आ० ११९। २३॥**
**सत्यसन्धः।** क्षत्रियः। सो० वं० धृतराष्ट्रस्य पुत्रः। **आ० ६८। १००॥ १३१। ९॥**
**सत्यसेनः।** कर्णपुत्रः। नकुलेन हतः। **क० ४३। १८॥ श० ९। ४१॥**
**सत्यसेना।** गान्धार्याः स्वसा। धृतराष्ट्रस्य भार्या। **आ० ११९। २३॥**
**सत्येयुः।** क्षत्रियः। सो० वं० पूरोः पुत्रस्य रौद्राश्वस्य पुत्रः। तन्माता मिश्रकेशी। **आ० ८८। १०॥**
**सत्येषुः।** त्रैगर्तराजपुत्रः। अर्जुनेन हतः। **श० २६। ३९॥**
**+ सत्वं।** गुणः। तत्कार्यं। **अश्व० ३९॥ शां० ३१८॥**
**सत्वः।** क्षत्रियः। सो० वं० धृतराष्ट्रपुत्रः। **आ० १३१। ४॥**
**सदः।** सो० वं० धृतराष्ट्रस्य पुत्रः। **आ० १३१। ४॥**
**सदश्वः।** यमसभावासी क्षत्रियः। **स० ८। १२॥**
**सदस्योर्मिः।** यमसभावासी क्षत्रियः। **स० ८। ११॥**
**सदाकान्ता।** नदी। **भी० ९। २५॥**
**+ सदाचारनिरूपणं। शां० १९१॥**
**सदानिरामया।** नदी। **भी० ९। ३३॥**
**सदानीरा।** नदी। **स० २०। २७॥ भी० ९। २४॥** The river Karatoya in Oudh which flows through the districts of Rungpur and Dinajpur.
**सनत्कुमारः।** ब्रह्मणो मानसः पुत्रः। **स० ११। २३॥**
तस्य केनचिन्मुनिना सह संवादः। **शां० २२७॥**
तेन वृत्रासुराय विष्णुमाहात्म्यकथनं। **शां० २८६॥**
तस्य नारदेन सह संवादः। **अनु० ३८॥**
तस्य जगत्सृष्टिविषये रुद्रेण संवादः। **अनु० १६५—१६९॥**
**सनत्सुजातः।** ब्रह्मणो मानसः पुत्रः। तेन धृतराष्ट्रं प्रति धर्मोपदेशः। **उ० ४१–४६॥**
**+ सनत्सुजातपर्व। उ० ४१—४६॥**
**+ सनत्सुजातीयं। उ० ४१–४६॥**
**सनातनः।** ऋषिः। युधिष्ठिरसभायां। **स० ४। २२॥**
**१ सन्ध्या।** नदी। **स० ९। २७॥**
**२ सन्ध्या।** पुलस्त्यऋषेर्भार्या। **उ० ११७। ११॥**
**३ सन्ध्या।** सन्ध्यावन्दनं।
**सन्नतेयुः।** क्षत्रियः। सो० वं० पूरोः पुत्रस्य रौद्राश्वस्य मिश्रकेश्यां जातः पुत्रः। **आ० ८८। १०॥**
**सप्तगङ्गं।** तीर्थं। **व० ८२। २९॥**
**सप्तगोदावरं।** राजमहेन्द्रसमीपस्थं क्षेत्रं। **व० ८३। ४४॥**
**सप्तचारु।** तीर्थं। **व० ८०। ९९॥**
**+ सप्तदशदिवसयुद्धारम्भः। क० २२॥** तत्समाप्तिः। **क० ९८॥**
**सप्तपालः।** ऋषिः। युधिष्ठिरसभायां। **स० ४। २०॥**

**+ सप्तमदिवसयुद्धारम्भः । भी० ८० ॥**
तत्समाप्तिः । **भी० ८६ ॥**
**सप्तरावः ।** गरुडपुत्रः । **उ० १०१ । ११ ॥**
**सप्तर्षयः ।** तेच कश्यपः अत्रिः भरद्वाजः विश्वामित्रः गौतमः जमदग्निः वसिष्ठः इति । **शा० ४९ । ५२ ॥ अनु० १४१॥** मरीचिः अत्रिः अङ्गिराः पुलस्त्यः पुलहः क्रतुः वसिष्ठः । तेषां चित्रशिखण्डिन इति नामान्तरं । **शां० ३४३ । ३० ॥**
तेषां वृषादर्भिणा संवादः । **अनु० १४१ ॥**
तेषां परिव्राड्रूपेणागतस्येन्द्रस्य दर्शनं । **अनु० १४२ ॥**
तत्पत्नीनामग्निना कामनं । **व० २२६ । ३३ ॥**
**सप्तर्षिकुण्डं ।** तीर्थं । **व० ८१ । ७२ ॥**
**सप्तसारस्वतं ।** तीर्थं । **व० ८१ । ११५ ॥**
तस्य सप्ताङ्गानि । सुप्रभा काञ्चनाक्षी विशाला मनोरमा ओघवती सुरेणुः विमलोदका इति । **शा० ३९ ॥**
**सभानिर्माणं ।** युधिष्ठिरस्य । **स० १ । २५ ॥**
**सभाप्रवेशः ।** युधिष्ठिरस्य । **स० ४ । ७ ॥**
**सभावर्णनं ।** युधिष्ठिरस्य । **स० ४ ॥**
,, .... इन्द्रस्य । **स० ७ ॥**
,, ... यमस्य । **स० ८ ॥**
,, .... वरुणस्य । **स० ९ ॥**
,, .... कुबेरस्य । **स० १० ॥**
,, ... ब्रह्मणः । **स० ११ ॥**
**+ सभासदां लक्षणं । शां० ८३ । २ ॥**
**समः ।** क्षत्रियः । सो० वं० धृतराष्ट्रस्य पुत्रः । **आ० ६८ । ९६ ॥ १३१ । २ ॥ भी० ६४ । २९ ॥ क० ४६ । ७ ॥**
**समङ्गः ।** कश्चन ऋषिः । ऋज्वङ्गं प्राप्तस्याष्टावक्रस्य नामेति प्रामाणिकाः । तस्य नारदेन संवादः । **शां० २९२ ॥**
**समङ्गा ।** नदी । **व० १३६ । ३९ ॥**
तत्र स्नानेनाष्टावक्रस्य समाङ्गप्राप्तिः । **व० १३६ । ३९ ॥**
**समङ्गाः ।** देशः । **भी० ९ । ६० ॥**
**समन्तपञ्चकं ।** परशुरामनिर्मितं क्षेत्रं । **आ० १ । १८ ॥ शा० ३८ । ४४ ॥** तस्य कालान्तरे कुरुक्षेत्रमिति नामान्तरं ।
तदुत्पत्तिकथा । **आ० २ । १ ॥**
तत्र परशुरामेण ह्रदपञ्चकनिर्माणं । **व० ११८ । ९ ॥**
तत्र वृद्धक्षत्रेण तपःकरणं । **द्रो० १४८ । १०—११ ॥**
**समन्तराः ।** देशः । **भी० ९ । ५० ॥**
**+ समयपालनपर्व । वि० १५ ॥**
**समयोरेव स्नेहः । आ० १४१ ।** ६७–७३ ॥
**समरथः ।** क्षत्रियः । मत्स्यराजस्य विराटस्य भ्राता । **द्रो० १५९ । ४१ ॥**
**समसौरभः ।** ऋषिः । जनमेजयस्य सर्पसत्रे सदस्यः । **आ० ५३ । ९ ॥**
**समीकः ।** द्रौपदीस्वयंवरार्थमागतः कश्चन क्षत्रियः । **आ० २०१ । १९ ॥ स० ७ । १६ ॥**
**समीची ।** अप्सराः । शापेन ग्राहत्वं प्राप्ता । अर्जुनेन शापान्मोचिता । **आ० २३६ । २० ॥ स० १० । १३ ॥**
**समुद्रः ।** उदधिः । अब्धिः । **आ० १८ । ९ ॥ व० १०९ । १८ ॥ १०४ । १ ॥** तद्भार्या जाह्नवी । **उ० ११७ । १० ॥** सच सप्तविधः । लवणसमुद्रः इक्षुसमुद्रः सुरासमुद्रः सर्पिस्समुद्रः क्षीरसमुद्रः दधिसमुद्रः शुद्धोदकसमुद्रः इति ।
तद्वर्णनं । **आ० २१ ॥**
**+ समुद्रपानं ।** अगस्त्यऋषिणा । **व० १०४ । ३ ॥** उचथ्येन । **अनु० २५९ । २३ ॥**
**+ समुद्रपूरणं । व० १०९ । १८ ॥**
**+ समुद्रमथनं । आ० १८ । १३ ॥** [ भा० ८ । ७–९ ॥ रा० १ । ४५ ॥ स्कान्दपु० केदारखं० ९–१३ ॥ ]

**समुद्रसेनः ।** पाण्डवपक्षीयः क्षत्रियः । **आ० ६८ । ५४ ॥ २०१ । ११ ॥ स० ३१ । २५ ॥ उ० ४ । २२ ॥**

तत्पुत्रः चन्द्रसेनः । **द्रो० २३ । ६१ ॥** अश्वत्थाम्ना हतः । **द्रो० १५७ । १८३ ॥**

तेन पाण्डवपक्षीयस्य चित्रसेनस्य वधः । **क० ३ । १५ ॥**

**समृद्धः ।** सर्पः । **आ० ५७ । १८ ॥**

**सम्पातिः । ( सम्पाती ) ।** वैनतेयस्यारुणस्य पुत्रः पक्षी । तद्भ्राता जटायुः । **आ० ६७ । ७५ ॥ व० २८० । १ ॥ २८३ । ४९ ॥**

[तत्पुत्रः सुपार्श्वः । रा० ४ । ५९ ॥]

[तस्य कथा । रा० ४ । ५६–६३ ॥]

**सम्प्रिया ।** मागधी । सो० वं० कुरुराजपुत्रस्य विदूरथस्य भार्या । **आ० ६३ । ४३ ॥**

**सम्भलग्रामः । ( शम्भलग्रामः ) ।** कल्किरूपस्य विष्णोरवतारस्थलं । **व० १९३ । ९४ ॥**

**+ सम्भवपर्व । आ० ६६–१५३ ॥**

**सम्भाव्यः ।** बह्वृचो ब्राह्मणः । **आश्र० ११ । ११ ॥**

**सम्मोहन ।** अस्त्रं । तत्प्रयोगोऽर्जुनेन कुरुसैन्ये । **वि० ६७ । १३ ॥**

१ **सरमा ।** स्कन्दग्रहः । **व० २३० । ३४ ॥**

२ **सरमा ।** देवशुनी । **आ० ३ । १ ॥ स० ११ । ४० ॥**

तया जनमेजयं प्रति शापदानं । **आ० ३ । ९ ॥**

**सरयूः ।** अयोध्यासमीपस्था नदी । **स० ९ । २६ ॥ २० । २८ ॥ भी० ९ । १९ ॥** The river Gogra. The town of Ajodhya is situated on this river.

१ **सरस्वती ।** नदी । **स० ९ । २३ ॥ व० ८८ । ३ ॥ भी० ९ । १४ ॥** The river Saraswati. It rises in the hills of Sirmur. It disappears at Vinasanatirtha after taking a westerly course from Thaneshwar.

तस्या विश्वामित्रेण रुधिरमयजलीभवनशापदानं । **श० ४३ । ३८ ॥**

तस्याः स्थलभेदान्नामभेदः । सुप्रभा काञ्चनाक्षी विशाला मनोरमा ओघवती सुरेणुः विमलोदका इति । **श० ३९ ॥**

२ **सरस्वती ।** नदी । सो० वं० अन्त्यनारभार्या । तत्पुत्रः त्रसुः । **आ० ६३ । २६ ॥**

३ **सरस्वती ।** सात्यकेर्भार्या । **मौ० ८ । ७२ ॥**

**+ सरस्वतीतार्क्ष्यसंवादः । व० १८९ ॥**

**सरस्वतीसागरसंगमः ।** तीर्थं । **व० ८० । ६३ ॥**

**सरस्वत्यरुणासंगमः ।** तीर्थं । **व० ८१ । १५१ ॥** तन्महिमा । **श० ४४ । ४१ ॥**

**+ सरित्सागरसंवादः । शां० ११३ ॥**

**सरिद्वीपः ।** गरुडस्य पुत्रः । **उ० १०१ । ११ ॥**

**सर्पः ।** एकादशरुद्रेष्वन्यतमः । **आ० ६७ । २ ॥**

**+ सर्पकालयोः संवादः । अनु० १ । ७० ॥**

**सर्पदर्वी ।** तीर्थं । **व० ८१ । १४ ॥**

**+ सर्पमृत्युसंवादः । अनु० १ । ५० ॥**

**+ सर्पलुब्धकसंवादः । अनु० १ । ३५ ॥**

**सर्पसत्रं ।** पाण्डवपौत्रेण जनमेजयेन सर्पनाशार्थं कृतो यागः ।

तत्र सदस्या ऋत्विजश्च । **आ० ५३ । ४–१० ॥**

तत्र व्यासागमनं । **आ० ६० । १ ॥**

तत्राग्नौ पतितानां नागानां नामानि । **आ० ५७ ॥**

तत्राग्नौ पतितुं सेन्द्रस्य तक्षकस्यागमनं । **आ० ५६ । ९ ॥**

तत्रास्तीकस्य गमनं । **आ० ५४ । २६ ॥**

तस्य विरामः । **आ० ५८ । ९ ॥**

**सर्पाः ।** कद्रूपुत्राः । नागाः । **आ० ५७ । १ ॥**

तेषामुत्पत्तिः । **आ० १६ । १३ ॥**

तेषां मातृशापः । **आ० १५ । १ ॥ २० । ८ ॥ अनु० २३ । २ ॥**

तेषां जनमेजयस्य सर्पसत्रे अग्नौ पतनं । **आ० ५२ ॥**

**सह्यः** । कुलपर्वतः । **भी० ९ । ११ ॥**
**सांयमनिः** । क्षत्रियः । सो० वं० बाह्लीकपुत्रः सोमदत्तः । **भी० ६१ । ११ ॥**
+ **साक्षिधर्माः** । उ० ३५ । ३३ ॥ **आ० ७ । ३ ॥ स० ९० । ७६ ॥**
+ **सागरसरित्संवादः** । **शां० ११३ ॥**
**सागराः** । सू०वं० सगरस्य पुत्राः षष्टिः सहस्राणि । कपिलमहर्षिकोपाद्दग्धाः । **व० १०७ । ४ ॥**
**साङ्काश्यः** । यमसभावासी राजर्षिः । **स० ८ । १० ॥**
१ **साङ्कृतिः** । रन्तिदेवशब्दं पश्यत ।
२ **साङ्कृतिः** । अत्रिवंशोद्भवो ब्राह्मणः **शां० २४० । २२ ॥**
+ **साङ्ख्यनिरूपणं** । **शां० ३०७ ॥ ३११ ॥ ३२० ॥ अनु० २४५ । १–२ ॥**
**सात्यकिः** । क्षत्रियः । सो० वं० यदुकुलोत्पन्नस्य शिनेः पुत्रस्य सत्यकस्य पुत्रो युयुधानः । तत्पुत्राः दश । **आ० २३९ । ११ ॥** रथयूथपः । **उ० १७० । ४ ॥**
तस्योत्पत्तिः । **आ० ६४ । १४७ ॥** तस्य मरुत्पक्षांशत्वं । **आ० ६८ । ७९ ॥**
तेन द्रौपदीस्वयंवरदर्शनार्थं गमनं । **आ० २०१ । १८ ॥**
तेन दुर्योधने पक्षपातमाविष्कृतवतो बलरामस्य प्रतिक्षेपः । **उ० ३ ॥**
तेन पाण्डवानां कौरवैः सह युद्धपक्षस्यैवानुमोदनं **उ० ८० । ६–८ ॥**
तद्रथभङ्गो गान्धारैः । **भी० ५८ । ८ ॥**
तस्य भूरिश्रवसा युद्धं । **भी० ६३ ॥ ७४ ॥ द्रो० १४२ ॥**
तत्पुत्रदशकवधो भूरिश्रवसा । **भी० ७४ । १२–२१ ॥**
तं हन्तुमुद्यतस्य भूरिश्रवसो भुजच्छेदोऽर्जुनेन । **द्रो० १४२ । ८६ ॥**
तेन प्रायोपविष्टस्य भूरिश्रवसश्शिरश्छेदः । **द्रो० १४३ । ६८ ॥**
तेन द्रोणाचार्यधनुश्शतकर्तनं । **द्रो० ९८ । ३९ ॥**
तस्य युधिष्ठिरेणार्जुनप्रवृत्तिपरिज्ञानार्थं प्रेषणं । **द्रो० ११० । १०५**
तस्य युद्धं । **द्रो० ११९ ॥**
तत्पराभवकारणकथनं । **द्रो० १४४ । ३–२० ॥**
तेन धृष्टद्युम्नवधोद्यमः । **द्रो० १९९ । ४७–५१ ॥**
तेन कृतवर्मपराजयः । **श० २० ॥**
तेन कृतवर्मशिरश्छेदः । **मौ० ४ । २९ ॥**
तद्भार्या सरस्वती । **मौ० ८ । ७२ ॥**
१ **सात्वतः** । कृतवर्मा ।
२ **सात्वतः** । श्रीकृष्णः । तन्नामनिर्वचनं । **उ० ६९ । ७ ॥ शां० ३५२ । १३ ॥**
**साध्यः** । धर्मप्रजापतेः साध्यानाम्यां दाक्षायण्यामुत्पन्नो देवयोनिविशेषः । **स० ७ । ७ ॥**
[तेषां नामानि । मत्स्य० २०३ ॥]
+ **साध्यहंससंवादः** । **शां० ३०५ ॥**
+ **साध्यात्रेयसंवादः** । **उ० ३६ ॥**
+ **सान्त्वं** । गुणः । तन्महिमा । **आ० ८१ । २१ ॥ शां० ८४ ॥**
तस्य वशीकरणोपायत्वं । **अनु० १८७ ॥**
**सान्दीपिनिः** । अवन्तीपुरवास्तव्यो ब्राह्मणः । श्रीकृष्णबलरामयोर्विद्यागुरुः । **स० ५४ । १ ॥**
[तस्माच्छ्रीकृष्णस्य चतुष्षष्टिकलाभ्यासः । भा० १० । ४५ ॥ विष्णु० ५ । २१ ॥] चतुष्षष्टिः कलाश्च श्रीकृष्णशब्दे द्रष्टव्याः ।
+ **साम** । सान्त्वशब्दं पश्यत
**सामुद्रनिष्कुटाः** । देशः । **भी० ९ । ४९ ॥**
**साम्बः** । क्षत्रियः । सो० वं० यादववंशीयश्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । **आ० २०१ । १७ ॥ २३९ । ९ ॥ स० ४ । ४१ ॥**
[तद्भार्या दुर्योधनपुत्री लक्ष्मणा । भा० १० । ६८ ॥]

